अथ दर्पणसमाख्यव्याख्यासहितं वैयाकरणभूषणं प्रारभ्यते

॥ॐ श्रीगणेशाय नमः॥ रमासमामन्त्र्य जगद्वन्द्यं मधुहन्तं श्रुतिस्तोमाहृत्यापरिजनितवेदाननमुदम्। अखण्डानन्दाढ्यं निखि
२ लजनहृत्कञ्जनिलयं हयग्रीवं मन्वे प्रकृतकृतिविघ्नप्रशान्तिकृते ॥१॥ स स्वैकस्मिन्नपि बाधके समवहितसाधकसहस्रादपि कार्यं नोत्पद्यते
इत्यर्थतो दृष्टेः प्रारिप्सितग्रन्थसमाप्त्यनुष्ठितभगवन्निरूपमङ्गलं प्रयत्नाच्छिष्यशिक्षार्थमादौ निबध्नाति श्रीलक्ष्मीरमणमि
ति। अधिकरणल्युडन्तरमणशब्देन कर्तृषष्ठ्यन्तलक्ष्मीपदस्य समासः। तेन च श्रीसहितशब्दस्य मध्यमपदलोपी समासः। शाक
पार्थिवादित्वात्। निगमान्तवाक्यात् तदुपादानं च सशक्तिकस्यैव भगवतो जगन्निर्माणकारणत्वमिति ध्वनयितुं नौमीति णुस्तुताविति धातोः स्म
ट्वाप्रयोगे विवक्ष्यमाणतदर्थसामानाधिकरण्यस्य फलकाभावात् कर्तरि सत्त्वाद्वर्तमानक्रियायोगे लट् उत्तमपुरुषः। अस्मद्युत्तमः

॥श्रीगणेशाय नमः॥ श्रीलक्ष्मीरमणं नौमि गौरीरमणरूपिणम्। स्फोटरूपं यतः सर्वं जगदेतद्विवर्तते ॥१॥

त्तत्पूर्वकं नौमीत्यस्यानुवृत्तेः। नुतिश्चोत्कृष्टगुणवत्त्वप्रकारकबोधानुकूलो व्यापारः। स एव च प्रकृतधात्वर्थः। बोधरूपधात्व
र्थफलाश्रयत्वाल्लक्ष्मीरमणस्य कर्मता। एवं च वैयाकरणमते प्रकृते श्रीसहितलक्ष्मीरमणाश्रयकोत्कृष्टगुणवत्त्वप्रकारकबोधानु
कूलो मदभिन्नाश्रयको वर्तमानशब्दप्रयोगरूपो व्यापार इति वाक्यार्थः। नन्वेतच्छ्लोकप्रवर्तकत्वेन शिवस्याभ्यर्हिततरत्वात्तत्स्तु
त्यात्मकमङ्गलमपि कुतो नाचरितमत आह गौरीरमणरूपिणमिति। स्वरूपपरेण पदेन गौरीरमणपदस्य षष्ठीसमासः। ततो दन्ता
त्यनिबन्धनो मत्वर्थीय इनिः। गौरीरमणो रूपं स्वरूपं यस्येति षष्ठ्यर्थे बहुव्रीहिणा कार्यलाभेऽपि लाघवमूलककर्मधारयादिति स्या

यस्य प्रत्ययस्यादितिसूत्रे ऽसुबन्तइतिप्रयोगमुदाहरताभाष्यकृतानादृतत्वान्नमत्वर्थीयानुपपत्तिः दृश्यते चेदृशस्थले प्रयोगदै
विध्वंशिवायविश्वरूपायविश्वेशिवरूपिणइत्यादि तथाचतदभिन्नमित्यर्थः प्रमाणंचात्रोक्तपुराणवाक्यमेव एवंचकार्य्य
वैचित्र्यस्यकारणवैचित्र्यनियम्यत्वाज्जगदवनादिकार्य्यवैचित्र्योपपत्तयेतत्तद्गुणप्रधानमूर्तिपरिग्रहोभगवतोनपारमार्थिको
भेदइतिस्तुतिकर्मताशिवस्यनानुपपन्नेतिभावः उत्कृष्टगुणवत्त्वमेवाविष्करोतियतइतिवेदान्तिमतेमायाशवलस्यब्रह्मणोज
गदुपादानत्वाज्जनिकर्त्तुरित्युपादानहेतावपादानसंज्ञानिबंधनापंचमीगुणइत्युक्तेविभाषेत्यस्यनप्रसक्तिः तथाचय
स्मादुपादानहेतोरित्यर्थः सर्वंजगत्स्फोटरूपंविवर्त्ततइतियोजना स्फुटत्यभिव्यक्तोभवत्यर्थोऽस्मादितिस्फोटोनामा
त्मकः शब्दः बाहुलकादपादानेघञ् रूप्यतेनिरूप्यतइतिरूपमर्थः तयोःसमाहारद्वंद्वेनपुंसकैकवचनांतम् वाच्यवाच
कस्वरूपमितितदर्थः नामरूपेव्याकरवाणीतिश्रुतेः एतत् अत्यंतसान्निध्येनबुद्ध्याविषयीक्रियमाणम् विवर्त्तते उत्पद्यतइत्यर्थः
धातोरुपसृष्टत्वात् ननुनामरूपात्मकस्यसदेवसोम्येदमग्रआसीदितिश्रुत्यासनातनत्वबोधनात्कथमुत्पत्तिशालित्वमतआह ज
गदितिवर्त्तमानेपृषदितिनिपातनात्साधुतथाचगच्छतितिरोधत्तइतिव्युत्पत्त्यातिरोधानउक्तेःयत्तिरोधत्तेतदाविर्भवतीतिनियमेना
विर्भावस्यलाभात्सएवात्रोपसृष्टार्थःएवंचसत्त्वेनैतस्यसनातनत्वेपिनामत्वादिनाविर्भावाद्यभ्युपगमान्नोक्तश्रुतिविरोधोनापित
स्मादेतस्माद्वाऽऽत्मनआकाशःसंभूतइत्याद्युत्पत्तिबोधकतद्विरोधःयत्किंचिन्नामरूपात्मकस्यात्यंतोपिसंभवादाहसर्वमितिया
वदर्थकम् उत्पत्तिरुपलक्षणमवनादेःतेनजगत्कर्तृत्वादिरूपोत्कृष्टधर्मस्यसुतरांतावच्छेदकस्यलाभः अत्रचयतोवाइमानिभूतानि
जायंतेयेनजातानिजीवंतियत्प्रयंत्यभिसंविशंतीत्याद्याः श्रुतयःप्रमाणम् मतांतरेयतइतिपंचमीनिमित्तहेतुतायांव्युपस

साधारण्यात्प्रार्थ्यतावच्छेदकधर्मलाभः तदेवविशदयति भवाब्धीति भवएवाब्धिरितिरूपकम् अब्धीयग्राहादिसदृशकामलो
भाद्याक्रांतत्वाद्दुरवगाहत्वेन भवेत्तदारोपः तेनच भवस्यदुस्तरत्वंव्यज्यते तस्यतरणंपारदेशप्राप्तिस्तस्मिन्नित्यर्थः तरिं सा
धनं यद्यपितरत्यनयेतिव्युत्पत्त्यातरणसाधनंतरिपदार्थस्तथापितद्दृष्टकीभूततरणस्यसन्निहितपदेनैवलाभाद्धेतुरुक्तिर्मोभू
दितिविशेष्यमात्रपरतयाव्याख्यातंमुक्तिसाधनज्ञानविषयमितियावत् मुक्तिश्चवेदांतिमतेऽज्ञाननिवृत्तिसमकालास्वरूप
प्राप्तिः नन्वज्ञाननिवृत्तेरधिकरणानतिरिक्तायाः स्वरूपस्यापिच सिद्धत्वात्तद्रूपायास्तस्यास्तत्वज्ञानसाध्यत्वानुपपत्तिरिति
चेन्नपरेषांप्रागभावस्येव सिद्धायाएवाज्ञाननिवृत्तेर्योगक्षेमसाधारण्या :साध्यतायाः संभवादधिकमन्यतोऽवधेयम्

पाणिन्यादिमुनीन्प्रणम्यपितरंरङ्गोजिभट्टाभिधंहेतध्याननिवारणादिफलिकाम्सुम्भाव्यवाग्देवताम्

नैयायिकास्तु आत्यंतिकदुःखध्वंसोमोक्षः ध्वंसस्यात्यंतिकत्वंचस्वसमानाधिकरणदुःखासमानकालिकत्वम् अत्रैवतत्व
ज्ञानस्योपयोगः विशेष्यांशस्यस्वासाधारणसामग्र्याएवसंभवान्नित्यसुखाभिव्यक्तिर्वासदृत्याहुः शेषाशेषेतिकर्मधारयोत्तर
पदः षष्ठीतत्पुरुषः तस्यचलाभपदेनसमासोलाभायेदमितिविग्रहेचतुर्थ्यंतलाभपदस्यार्थपदेनसः शेषः पतञ्जलिः शेषांश
त्वात्तस्य तथाचशेषोक्तभाष्यप्रतिपादितनिखिलसिद्धांतज्ञानायेत्यर्थः शेषभूषणमितिशेषोनंतः सभूषणं यस्येत्यर्थः यतोऽ
स्यभूषणंशेषोऽतोस्यशेषोक्तसिद्धांतलाभे प्रार्थनमितिसाभिप्रायविशेष्यस्योपादानात्परिकरांकुरोलंकारोत्र भगवद्विषयक
रत्यंगम्॥२॥ प्रेक्षावत्प्रवृत्तयदूनरग्रंथेभ्यः स्वग्रंथस्योत्कर्षप्रदर्शयन्नेवदर्शनीयविषयप्रयोजनसंबंधाधिकारिणमध्येवस्य

प्रदर्शनीयं विषयं दर्शयति पाणिन्यादीति पुंभाववाग्देवतामितिपितुर्विशेषणम् पुंसोभावोयस्याइतिव्यधिकरणबहुव्रीहिपूर्वपद
कः कर्मधारयोवाग्देवतापदेन। अथवापुंभावशब्दोर्धर्चाद्यजंतः तथाचाविष्कृतपुंविग्रहांसरस्वतीमित्यर्थः द्वैतध्वांतेतिद्वाभ्यांप्र
काराभ्यामितोज्ञातोविरुद्धोभयधर्मप्रकारकज्ञानविषयोधर्मीतियावत् यद्वाद्वयोर्भावोद्वितास्वनिष्ठैकविशेष्यतानिरूपित
प्रकारतासंबंधेनविरुद्धनानाधर्मोधर्मिणोपिभावत्वसंभवाद्वितापदार्थोपिधर्म्येवतत्रभवंद्वैतंसंशयात्मकज्ञानम् अथवाद्वये
अनेकस्यभावोद्वितानानात्वंतत्संबंधिद्वैतंपरमार्थदशायामद्वितीयस्यैवब्रह्मणोंगीकारेणश्रुतिबाधितनानात्वावगाह्यंतःकरण
वृत्तिविशेषरूपमविद्यापरपर्यायमिथ्याज्ञानम् तदेवध्वांतंतमस्तत्वाछादकत्वात्तन्निवारणमेकंमुख्यंफलंयस्मात्तामित्यर्थः अ

ढुंढिर्द्वैतमजैमिनीयवचनव्याख्यातृभिर्दूषितान्सिद्धान्तानुपपत्तिभिःप्रकटयेतेषांवचोदूषये ३ ॥ ९ ॥

नधिकारिणोस्वाश्रितानामेकतरकोटिकज्ञानोत्पादकत्वेनाधिकारिणासन्मात्रावलंबनज्ञानप्रदत्वेनपुंभाववाग्देवतायास्तत्त्विवर्त
कत्वमितिभाव ढुंढिगणपतिप्रणम्य त्स्वनुषज्यते सिद्धान्तानितिभाष्यकारादिविर्णितार्थाः सिद्धांतास्तानित्यर्थः उपपत्तिभिःसा
धकप्रमाणोपन्यासरूपाभिर्युक्तिभिरित्यर्थः दूषये उपपत्तिभिरेवबाधकप्रमाणोपन्यासरूपाभिरित्यर्थः एतेनान्यग्रंथेभ्यःस्वग्रंथा
सोत्कृष्टत्वंध्वनितम् तथाचवैयाकरणसिद्धांतोत्रविषयः प्रदर्शितस्तेनैवतज्ज्ञानप्रयोजनंप्रतिपाद्यप्रतिपादकभावःसंबंधःसि २
द्धान्तजिज्ञासुरधिकारीतित्रयोन्येपिदर्शितप्रायाइतिभाव ३ ॥ ९ ॥

ग्रन्थादावनुष्ठितस्य मंगलस्य तन्निबंधनस्य च प्रयोजनमाह प्रारिप्सितेत्यादिना समाप्नुयेदिति विहाय प्रतिबंधकोपशमनायेत्युक्त्यात्र लौकिका विगीतशिष्टाचारानुमितमंगलस्य विघ्नध्वंस एव फलं जन्मानन्तरीयसमाप्तिमुद्दिश्य शिष्टानां मङ्गलाननुष्ठानान्मंगलसमाप्त्योः शरीरनिष्ठ प्रत्यासत्त्यैव कार्य्यकारणभावस्य कल्पनीयतया तस्य च नास्तिकसमाप्तौ व्यभिचारेण समाप्तिस्तत्त्वासंभवात् किंतु कार्यमात्रं प्रतिप्रतिबं

प्रारिप्सितप्रतिबन्धकव्यूहोपशमनायकृतं श्रीफणिस्मरणरूपं मङ्गलं शिष्यशिक्षार्थं निबध्नन् चिकीर्षितम्प्रतिजानीते फणिभाषितभाष्याब्धेः शब्दकौस्तुभ उद्धृतः तत्र निर्णीत एवार्थः सङ्क्षेपेणेह कथ्यते १ उद्धृत इत्यत्रास्माभिरिति शेषः भाष्याब्धेः शब्दकौस्तुभ उद्धृत इत्युक्तिस्तु शब्दकौस्तुभो ऽत्र नाम मर्य्यानामाधुनिकोत्प्रेक्षितत्त्वनिरासाय अन्यथा तन्मूलकस्यास्य ग्रन्थस्याप्याधुनिकोत्प्रेक्षितसारत्वापत्तौ पाणिनीयानामनुपादेयतापत्तेः तत्र निर्णीत इत्युक्तिरितोप्यधिकं जिज्ञासुभिश्शब्दकौस्तुभे द्रष्टव्यमिति ध्वनयितुम् प्रतिज्ञातमाह ॥ १ ॥

धकाभावहेतुतया दुरितरूपप्रतिबंधकनिरास एव मंगलस्योपयोगो न तु समाप्तावपि विघ्नध्वंसेनान्यथासिद्धत्वात्समाप्तिस्त्वन्यत्र कृप्तत्कारणकलापादिति सूच्यते फणिस्मरणेति फणी शेषः शेषाख्यं धामकमिति भगवदुक्तेस्तत्स्मरणस्य विघ्ननिवारकत्वान्मंगलस्य नतिस्तुत्यादिभेदेन नानात्वमिति सूचयितुं स्मरणेत्युक्तम् प्रतिजानीत इति प्रतिज्ञाफलं तु शिष्यावधानं बोध्यम् उद्धरणकर्त्राकांक्षायामाहास्माभिरिति कथ्यते इति हर्य्यादिनिबद्धकारिकाभिरिति शेषः

तत्रस्फोटस्यार्थबोधजनकत्वात्तेनैवाकांक्षानिवृत्तेश्चवाक्यस्फोटस्य वाक्यस्फोटोऽतिनिष्कर्षे इत्यादिनासिद्धान्तयिष्यमाणत्वेऽपिप्रतिवाक्यं
संकेतग्रहासंभवात्तदन्वाख्यानस्य लघूपायेनाशक्यत्वाच्च तत्रकल्पनयापदानि विभज्यतेष्वपिप्रकृतिप्रत्ययभागान्प्रविभज्य कल्पिता
भ्यामन्वयव्यतिरेकाभ्यान्तदर्थेष्वपि प्रकृतिप्रत्ययानामनादिसंकेतबोधद्वारासाधुत्वान्वाख्यायके महर्षिप्रणीते शास्त्रेप्रक्रियानिर्वा
हाय पदवर्णस्फोटावपि समतौ विनिदर्शयन्निहं तावत्प्रधाने सुप्तिङ् चयादिरूपे वाक्ये धात्वर्थस्य प्राधान्याच्च मे वादौ निरूपयितु
माह मूले फलव्यापारयोरिति तत्र धातुरित्यस्य स्मृता इति विशेषणविभिन्नवचनान्तोपस्थापितत्वात् विशेष्यवाचकपदान्तरवि

फलव्यापारयोर्धातुराश्रये तु तिङः स्मृताः फले प्रधानं व्यापारस्तिङर्थस्तु विशेषणम् ॥
धातुरित्यत्र स्मृत इति वचनविपरिणामेनान्वयः ॥ २ ॥ २ ॥

(टि॰) स्प

भक्तितात्पर्यविषयसंख्याविरुद्धसंख्यायाश्चाविवक्षायां विशेषणवाचकपदयोः समानवचनत्वनियमादत एव नीलो घट इत्यादे
र्न साधुत्वं तद्विवक्षायां तु वेदाः प्रमाणं जात्याकृतिव्यक्तयः पदार्थ इत्यादौ विभिन्नवचनत्वमपि तत्र प्रकृते तद्विवक्षाया बीजमस्तीत्य
तो वचनविपरिणामेनान्वयं दर्शयति भूषणसारे धातुरित्यत्रेति ननु यदुद्देशेन श्रुतेर्लोकतो वा प्रवृत्तिर्वगतानन्यम् अन्येकानधी
नेक्षविषयमितियावत् तदुक्तं हरिणा यस्यार्थस्य प्रसिद्ध्यर्थमारभ्यन्ते पचादयः तत्प्रधानं फलं तेषां न लाभादिप्रयोजनमिति खरि
तजिनइतिसूत्रेऽपि फलपदस्य तस्मिन्नेव प्रसिद्धेश्च तथा च ताद्दशफलस्य धातुवाच्यत्वे विक्लित्त्यनुकूलव्यापारदशायां तण्डुलस्य

शासंभवेना

कर्मत्वानुपपत्तिस्तज्जन्यतादृशफलाश्रयस्यतदापत्तिश्चेत्यतआह फलंविक्लित्यादीति अयमाशयः फलपदस्यलोकरूढ्यातादृशा र्थोपस्थापकत्वेप्यत्रपारिभाषिकार्थपरतैवान्यथासकर्मकत्वादिव्यवहारोदुरुपपादःस्यात तत्त्वंचतद्धात्वर्थजन्यत्वेसतितद्धातुजन्योप स्थितिविषयत्वंतद्धात्वर्थत्वंवा जन्यत्वंचजन्यत्वप्रकारकप्रतीतिविषयत्वंतेनसत्तादीनां प्रसंगः गम्याद्यर्थव्यापारजन्यविभा गादावतिप्रसंगवारणायविशेष्यं तदर्थव्यापारेऽतिप्रसक्तिनिरासायचसत्यंतम तच्चविक्लित्यादिना प्रदर्शनपच्यादिशक्यतातच्च द्रूपेणैवतथाबोधस्यानुभवसिद्धत्वात यद्वक्ष्यतिवाक्यार्थप्रदर्शनावसरे विक्लित्यनुकूलोव्यापारइतिधातुत्वादिकमजानतो पिबोधश्चेति परेतुकर्तृप्रत्ययसमभिव्याहारेतद्धात्वर्थजन्यत्वेसतितद्धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारतावत्त्वम जन्य

## फलंविक्लित्यादि

ताचारोपितानारोपितावा इत्यन्यदेतत विभागजन्यसंयोगादिरूपेपतत्यर्थेविभागसंयोगयोः फलत्ववारणायोभयम कर्मत्व्या तेफलस्यविशेष्यतयैवभानात्तत्रा प्रसंगवारणायकर्त्रादीतीत्याहुः तच्चिंत्यम अनुगतफलत्वानिरुक्तेः विभागजन्यसंयोगे पतत्यर्थत्वाभावस्यवक्ष्यमाणत्वाव्यावर्त्याप्रसिद्धेश्चेत्यधिकमग्रेवक्ष्यते ननुव्यापारत्वंनफलप्रयोजकक्रियात्वम आत्माश्र यात क्रियात्वस्यैवदुर्ज्ञेयत्वात दंडादिव्यापारस्यधात्वर्थत्वापत्तेश्च नचेष्टापत्तिः धात्वर्थव्यापाराश्रयस्यैवकर्तृतायावक्ष्यमाण तयातदाश्रयस्यदंडादेः कर्तृत्वापत्त्यातेनाभिधानाद्दंडेनदेवदत्तः पचतीत्यादौदंडादिपदोत्तरंतृतीयानापत्तेः प्रथमापत्तेश्च कर्तृक

भिमतकरणसञ्ज्ञायाः परत्वात्कर्तृसञ्ज्ञयाबाधात् किंच प्रयोजकत्वं यदि साक्षाज्जनकत्वम् तदा पचतीत्यादौ कर्तृव्यापारस्य धात्वर्थत्वानापत्तिः तस्य करणव्यापारद्वारैव फलजनकत्वात् यदि जनकसाधारणम् तदा तण्डुलक्रयणस्यापि फलप्रयोजकक्रियात्वात् तद्दशायामपि देवदत्तादौ पचतीति प्रयोगापत्तिः तण्डुलादिक्रयणादिव्यावृत्तस्य तादृशप्रयोजकत्वस्य निर्वक्तुमशक्यत्वाच्च अत एव तज्जन्यत्वे सति तज्जन्यजनकत्वरूपेतरान्यथासिद्धत्वम् तदवच्छिन्नस्य धातुवाच्यत्वे साक्षाद्विक्लित्तिजनकाग्निसंयोगदशायामेव पचतीति प्रयोगः स्यान्न त्वधिश्रयणादिदशायामपि तेषामग्निसंयोगेनान्यथासिद्धतया विक्लित्तिजनकत्वादित्यत आह व्यापारस्त्विति साध्यत्वेनेत्युपलक्षणे तृतीया तथाच पदान्तरसमभिव्याहाराप्रयोज्यसाध्यत्वप्रकारकाभिधानविषय

विशेषक

व्यापारस्तु भावनाभिधा साध्यत्वेनाभिधीयमाना क्रिया

त्वं व्यापारत्वमित्यर्थः अभिधानस्य प्रकारतावच्छेदविषयतानिरूपकत्वं चौपचारिकं तादृशसाध्यत्वप्रकारकप्रतीतिविषयत्वमिति यावत् घटं करोतीत्यादौ कृञ्समभिव्याहारे घटादीनामपि साध्यत्वेन प्रतीतेरतिप्रसङ्गभङ्गाय पदान्तरसमभिव्याहाराप्रयोज्येति प्रतीतिविशेषणम् तदसमभिव्याहारे तेषां तत्त्वेनाप्रतीतेः अधिश्रयणाद्यधःश्रयणपर्यन्तक्रियाकलापस्य पदान्तरसमभिव्याहारमन्तरेणापि साध्यत्वेन प्रतीयमानत्वादुक्तव्यापारत्वमविकलमिति तदवच्छिन्ने पच्यादिधातुवाच्यतानानुपपन्नेति भावः

उक्तार्थस्योत्प्रेक्षितत्वम् निरस्यति उक्तंचेति यावदितिसर्वमित्यर्थः सर्वपदार्थमेवविरुणोतिसिद्धमित्यादिना सिद्धंविद्यमानध्वं
सप्रतियोग्यऽपाक्षीदित्यादौ असिद्धंभूतभिन्नंवर्त्तमानंतादृशप्रागभावप्रतियोगिचपचतिपक्ष्यतीत्यादौसाध्यत्वेनवक्ष्यमाण
स्वरूपेणअभिधीयतेतत्प्रकारकप्रतीतिविषयइत्यर्थः क्वचिद्विवक्ष्यतेइतिपाठः एतेनक्रियाशब्दस्यरूढिः प्रदर्शिता योगि
कत्वमप्याह आश्रितेति आश्रितेति आश्रितंक्रमरूपंयस्यास्तत्त्वात् पूर्वापरीभूतावयवकत्वादित्यर्थः तदीयावयवानामधिश्र

उक्तंचवाक्यपदीये यावत्सिद्धमसिद्धंवासाध्यत्वेनाभिधीयते आश्रितक्रमरूपत्वात्साक्रियेत्यभिधीयतेइ
तिनचसाध्यत्वेनाभिधानेमानाभावः पचतिपाकः करोतिकृतिरित्यादौधात्वर्थावगमाविशेषेपि क्रियांतरा
कांक्षानाकांक्षयोर्दर्शनस्यैवमानत्वात् तथाचक्रियांतराकांक्षानुत्थापकतावच्छेदकरूपंसाध्यत्वंतद्रूप
वत्त्वमसत्त्वभूतत्वम् एतदेवादायासत्वभूतोभावश्चतिङ् पदैरभिधीयतइतिवाक्यपदीयमिति द्रष्टव्यं

यणावधः अयणपर्यन्तानांक्रमेणोत्पत्तेः क्रियापदेनसोच्यतेयत्रचनक्रमिकावयवकोव्यापारस्तत्ररूढिरेवादरणीया पौर्वाप
र्यारोपोवाफलस्यापिस्वजनकव्यापारगतपौर्वापर्यारोपेणतथैवभानमतएवतन्मात्रवाचकस्यधातुत्वसिद्धिरितिभावः पाकइतिय
द्यपिसाध्यत्वेनोपस्थितिरप्यत्रकथमन्यथास्तोकंपाकइत्यादौस्तोकादीनांकर्मतानस्यात्पितत्रधातूपस्थाप्यभावस्यगुणतयाप्रधानी
भूतघञुपस्थाप्यस्यसिद्धतैवेत्याशयः पर्यवसितार्थमाह तथाचेतिक्रियांतरेतिअयमाशयः यद्रूपेणज्ञानात्क्रियांतराकांक्षो
दयस्तादृशज्ञानेप्रकारतयावच्छेदकंयत्सिद्धत्वंतद्भिन्नंज्ञाननिष्ठतादृशाकांक्षोत्थापकत्वाभावावच्छेदकंवासाध्यत्वम् साध्यत्वा

१८

काङ्क्षाप्रतिबंधकत्वरूपकारणाभावादेव तदनुत्थापनात् नच क्रियायाः आकाङ्क्षानुत्थापकतावच्छेदकधर्मो रूपसाध्यत्वेन धात्वर्थोपस्थितौ
रूपसनमेवेत्तु खट्वादिप्यादायाकाङ्क्षाभावेन क्रियान्तरान्वयो न स्यादिति वाच्यम् तत्रापि चेन्मद्दसमवधाने नाकाङ्क्षोत्थापनात् हिरु
गादीनां क्रियाप्राधान्यव्यवहारस्तु तदर्थस्य क्रियामात्रविशेषणत्वात् अत एव न हिरुगाद्यर्थे कारकाणामन्वयस्तेषां क्रियान्तरसाकाङ्क्षत्वा
दिति वस्तुतस्तु सिद्धत्वज्ञाने साध्याकाङ्क्षावत् पचाद्यर्थे साध्यतावगते किमस्य साधनमित्याकाङ्क्षोदयेन साधनाकाङ्क्षोत्थापकतावच्छेदकरूपवत्त्वमेव साध्यत्वम् अत एवैतद्वादायोऽपि मयप्रसङ्गतिरन्यथा पचति भवतीत्यादौ पूर्वोक्तरूपाभावेन तदसङ्गतिः स्यादे
व उक्तं च हरिणा प्रयोगार्हेतु सिद्ध सन्नेतव्यो योऽविशेषणैः माकाङ्क्षसाधनं तत्स्यात् क्रिया नैवोपजायत इति साधनं हि क्रियां निर्वर्तयन्ती
तीति सुट्काद्दितिभाष्यभाष्यमप्येतत्कस्यानुगुणमित्यवधेयम् केचित्तु पचतीत्यनुगतव्यवहारादसिपचित्वादिकजाति तथा चकामि
कानेकव्यक्तिवृत्तिजातिरेव क्रिया साध्यत्वं च तस्या व्यक्तिद्वारकमेव स्फोटवदस्याः क्रमवद्भिः क्षणैरभिव्यक्तिं जातिमन्ये क्रियामाहुरनेक
व्यक्तिवर्त्तिनीम् असाध्याव्यक्तिरूपेण साध्येवोपलक्ष्यत इति वाक्यपदीयं चात्र मानमित्याहुः साध्यत्वादसत्त्वभूतमिदं द्योः
पर्यायतामाह तद्रूपवत्त्वमिति एतदेवेति निरुक्तरूपासत्त्वभूतत्वमेवेत्यर्थः असत्त्वभूत इति भावप्रधानमाख्यातमिति निरुक्तार्थप्र
तिपादकमेतत् सत्त्वस्वभावमापन्ना व्यक्तिर्नाम नि रुच्यते इत्यस्य पूर्वार्द्धं भावश्चेति चोऽवधारणे उक्तभाव एवेत्यर्थः तेन सत्त्वभूतस्य
तस्य व्यवच्छेदः तिङ् पदैरिति बहुवचनस्वारस्येन तिङन्तपदैरित्यर्थः अभिधीयते बोध्यत इत्यर्थः तेन कृदन्तपदैरसत्त्वाव
स्थभावाभिधानेऽपि न क्षतिरिति भावः तिङन्तपदैरिति भावाख्यातानभिप्रायेणेति कश्चित् ॥ १८ ॥ १ ॥ ॥

पलक्षितः संकलनात्मकेकालबुद्ध्याप्रकल्पितो भेद

॥ अयंचेति साध्यत्वेनप्रतीयमानोव्यापारश्चेत्यर्थः वाच्यइतिपचत्यादिशाकाइत्यर्थः अनुभवसिद्धत्वादिति अतएवव्यजनादिनावह्निप्र-
ज्वलनदशायांफूत्कारएवगृहीतशक्तिकस्यनपचतीतिप्रयोगःयागइत्यादावेतिविप्रतिपत्तिस्तुस्वीयमेघानुसारादेवेतिभावः नचनानेति
नानाधर्म्मावच्छिन्नशक्तिनिरूपकतावच्छेदकैकधर्म्मवत्त्वंनानार्थत्वम् तच्चपच्यादावक्षतमितिभावः फलांशमादायतत्त्वंतुआशंकि
तुरपीष्टमेवेतिबोध्यम् बुद्धिविशेषादेरिति स्वनिरूपितविषयतावच्छेदकत्वसंबंधेनेतिशेषः बुद्धिविशेषविषयतावच्छेदकत्वस्येति
यावत् अयंभावः तदादिभ्यश्चैत्रादितत्तद्रूपेणबोधःसर्वानुभवसिद्धः सचचैत्रत्वाद्यनुगमकधर्म्मविनानुपपन्नइतिबुद्धिविशेषविष
यतावच्छेदकत्वंतदनुगमकंधर्म्ममंगीकृत्यतदनुगतीकृततदवच्छिन्नेषुचैत्रत्वादिषुतदादीनांशक्तिःबुद्धिविशेषविषयतावच्छेदक

अयंचव्यापारःफूत्कारत्वाधःसंतापनत्वयत्नत्वादितत्तद्रूपेणवाच्यःपचतीत्यादौतत्तत्कारकबोधस्यानुभवसिद्ध
त्वात् नचनानार्थतापत्तिः तदादिन्यायेनबुद्धिविशेषादेःशक्यतावच्छेदकानामनुगमकस्यसत्वात् आख्यातक्रियेकत्व
व्यवस्थाप्यवच्छेदकबुद्धिविशेषैक्यमादायेव उक्तंचवाक्यपदीये गुणभूतैरवयवैःसमूहःक्रमजन्मनांबुद्ध्याप्रक
प= ल्पितोभेदःक्रियेतिव्यपदिश्यतइति॥११ त्वस्योपलक्षणत्वोपगमाच्चनचैत्रत्वादीनांतेनरूपेणशाब्दबोधेभानापत्तिरनुगतनाना
धर्मावच्छिन्नशक्तिनिरूपकतावच्छेदकैकधर्म्मवत्त्वस्यैवनानार्थत्वम् नतेषांतदपीतितदादिशक्तिनिरूपणेनिर्णीतमन्यत्रतदिहाप्यवसेयमि
ति ननुपूर्वापरीभूतक्षणनश्वरक्रमिकव्यापाराणांमेलनासंभवात्तदात्मकक्रियायाअनेकत्वादेकाचक्रियेतिप्रशंसायामितिसूत्रस्थभाष्यासंगतिरत
आह आख्यातेतिनिर्विभक्तिकःपाठःसाधुःआख्यातप्रतिपाद्यक्रियेकत्वव्यवस्थापीत्यर्थःसविभक्तिकपाठेसप्तमीवैषयिकाधारेअध्याहृतत्वा
नक्रियामादायबोध्याबुद्धिविशेषैक्यमितिसमूहरूपबुद्धिविशेषात्मकावच्छेदकैक्यमादायेत्यर्थःतथाचावयवाश्रयंपौर्वापर्य्यंसमुदायाश्र
१३म

निरूपेत्यस्य सप्तम्यन्तेपदेनेत्यादि प्रधानीभूतप्रकृत्यर्थनिरूपणानन्तरं विशेषणप्रत्ययार्थस्यावश्यवक्तव्यतया प्रसङ्गसङ्गत्या तन्निरूपणमित्यभिप्रेत्याह तिङर्थमिति अन्यलभ्यत्वादिति अनन्यलभ्यो हि शास्त्रार्थ इति न्यायादिति भावः एतेन कृतिमतो व्यापारवतो वा कर्तुः शक्यत्वेऽनेककृतिव्यापाराणां शक्यतावच्छेदकत्वकल्पने गौरवमिति नैयायिकाद्युक्तदूषणमस्मन्मताज्ञानविजृम्भितमिति सूचितम् नन्वाश्रयस्य तिङर्थत्वे आश्रयत्वं शक्यतावच्छेदकं वाच्यम् तस्य च स्वरूपाभिन्नतया नानासम्बन्धावच्छिन्नतया च नानात्वादननुगमोऽत आह श

धात्वर्थनिरूप्यतिङर्थमाह आश्रयेतु इति फलाश्रये व्यापाराश्रये चेत्यर्थः फलाश्रयः कर्म व्यापाराश्रयः कर्ता तत्र फलव्यापारयोर्धातुलभ्यत्वान्न तिङस्तदंशे शक्तिरन्यलभ्यत्वात् शक्यतावच्छेदकं चाश्रयत्वम् तच्च शक्तिविशेषरूपमिति सुबर्थनिर्णये वक्ष्यते नन्वनयोराख्यातार्थत्वे किं मानम् प्रतीतेर्लक्षणयाप्याक्षेपात्प्रथमान्तपदाद्वा सम्भवादिति चेत् अत्रोच्यते लः कर्मणि च भावे चाकर्मकेभ्य इति सूत्रमेव मानम् अत्र हि चकारात्कर्तरि कृदिति सूत्रोक्तकर्तरीत्यनुकृष्यते बोधकतारूपा तिबादिशक्तिस्तस्थानित्वेन प्रकल्पिते लकारे प्रकल्प्य लकाराः कर्मणि कर्तरि चानेन विधीयन्ते नकार विसर्गादिनिष्ठाकर्मकरणादिबोधकशक्तिमादाय शसादिविधानवत् ॥

शक्यतावच्छेदकत्वेति वक्ष्यत इति अस्य द्वितीयार्थनिरूपणावसर इति शेषः तथा च तत्राख्यातत्वोपाधिरूपस्यानुगतस्य वक्ष्यमाणत्वान्न तन्नानात्वप्रयुक्तो दोष इति भावः मीमांसकमतं निराकरिष्यन् कर्तृकर्मणोराख्यातार्थत्वं व्यवस्थापयितुं शङ्कते नन्विति ननु यत्पदं यदर्थकं तत्तदर्थकमिति नियमादाख्यातजन्यकर्तृकर्मप्रतीतिरेव मानमत आह प्रतीतेरिति संभवादित्यनेनान्वितसंभवहेतुमाह लक्षणयेति नन्वाख्यातस्याश्रयलक्षकत्वे भावनाभाना

नुपपत्तिस्तदुपपत्तयेतत्रतस्य शक्तिकल्पनेनाश्रयेलक्षणासंभवो युगपद्वृत्तिद्वयविरोधात् भावनाश्रयत्वेन भावनाश्रयेलक्षणायांतु भावनायाः
प्राधान्यानुपपत्तिरतआह आक्षेपादिति आक्षेपोनुपपत्तिस्तदुत्यर्थः तथाहि अन्विताभिधानवादिमतेपदानां विशेषणत्वेनैवार्थोप
स्थापकतयाख्यातार्थभावनाया विशेषणत्वानुपपत्त्यातस्या आश्रयाक्षेपकत्वम् यद्वा अनुमानंसः तत्र योगश्चाख्यातपदबोध्याभा
वना किंचिदाश्रिता विशेषणत्वेनगृहीतशक्तिकत्वाद्घटपदबोध्यघटत्ववत् इति समानसंवित् संवेद्यत्वंतुनाक्षेपः प्रमेयमित्यास्र
यभानेभावनायाअभानात् भावनापदजन्य भावनाबोधे आश्रयाभानाच्चेति ननुव्याप्त्यादिप्रतिसंधानं विनाप्याश्रयबोधस्यानुभवसि
द्धत्वान्नाक्षेपादाश्रयभानोपपत्तिः क्वाचित्कत्वात्तथाभानस्य किंचोक्तरीत्यातज्ज्ञानसमर्थनेप्याख्यातजन्यबोधे भावनायाः प्राधान्या
नुपपत्तिः शक्तिग्रहे तस्याविशेषणत्वेनैवोपस्थितत्वात् घटत्ववदेतत्तत्त्वस्यविचारासहत्वाच्चेत्यतआह प्रथमांतपदादिति समभिव्याहृ
तप्रथमांतचैत्रादिपदादेवाश्रयप्रतीत्युपपत्तेरित्यर्थः एवंचनाश्रयप्रतीत्यनुपपत्तिः आश्रयेप्याख्यातशक्तिसाधिकेति भावः मान
मितियद्यप्याश्रयत्वेनाश्रयभानार्थंतत्राख्यातस्य शक्तिरावश्यकीत्येवोत्तरंवक्तुमुचितम् तथापिधात्वोः फलव्यापारयोः शक्तिराख्या
तस्याश्रयत्वे शक्तिरितिमते आश्रयत्वेनापिलाभात्तु सामान्यतआश्रयेस्वाभिमताख्यातशक्तिः सिध्यतीति तन्मतनिरासार्थमपिहृत्वमे
वप्रमाणत्वेनोपन्यस्तमितिबोध्यम् ननुकर्तृपदाघटितमिदंसूत्रंकथमाख्यातस्यकर्तृवाचकत्वेमानमित्याशंकांनिरस्यति अत्रही
ति नन्वेतत्सूत्रंलकाराणामेवकर्त्रादिशक्तिबोधकंनाख्यातस्येत्यतआह बोधकतारूपामितिबोधजनकत्वरूपामित्यर्थः इदंचादेशि
ष्वेवशक्तिरादेशानामादेशिस्मृतिद्वारार्थोपस्थापकत्वमितिमतनिरासायेत्युक्तम् यथाचैतत्तथावक्ष्यते विधीयतइतिनथाचवर्णस्फोटपक्षे
श्रूयमाणवर्णानामेववाचकतायाव्यवस्थापयिष्यमाणतयालः कर्मणीत्यादिसूत्राणांतिवादिशक्तिग्रहेएवतात्पर्यावधारणेनसंभव

स्थाप

ननु पूर्वसूत्रस्थकर्तृपदस्य धर्मिपरत्वेप्यनुवृत्तस्य तस्य शब्दाधिकाराश्रयणेन धर्मपरत्वसंभवान्नोक्तदोषः यदि च शब्दाधिकाराश्रयणमत्र
वगमके प्रकृते च तदाश्रयणे प्रमाणाभाव इति विभाव्यते तदापि शक्तिः कारकं शक्तिमत्कारकमिति पक्षद्वयस्याप्याकरसिद्धतया न द्विकल्प
स्य निङः कृतो व्यवस्थितत्वाश्रयणादर्थाधिकाराश्रयणेप्यभिमतार्थलाभोऽस्त्वत एवेत्यत आह अपि चेति तथा च विकल्पव्यवस्थाया एवाप्रामा
णिकत्वेनैकार्थपरत्वे न्याय्येति भावः नन्वाख्यातस्य व्यापारावाचकत्वे कथं तत्र तद्बोधोऽत आह भावनाया इति कृदादिवदिति तत्र तस्येति
वृत्तिः कृदादिस्थलइवेत्यर्थः आदिपदात्कर्त्रे विहिततद्धितादेः परिग्रहः तथा च यथा भवन्मते धातोर्व्यापारावाचकत्वेन कृदर्थकर्त्राक्षिप्त^

पाकं करोति

अपि च मीमांसकानां कृतामिवाख्यातानामपि कर्तृवाचित्वमस्तु भावनाया एवमाक्षेपेण कृदादिवत्प्रतीतिसंभवे वा
च्यत्वं मास्तु तथा सति प्राधान्यं तस्या न स्यादिति चेन्न घटमानयेत्यादावाक्षेपितव्यक्तेरपि प्राधान्यवदुपपत्तेः पच
तीत्यादौ भावनाया विवरणदर्शनाद्वाच्यत्वमिति चेन्न ॥

॥ भावनाया बोधविषयत्वं तथाख्यातेपीति भावः तथा सतीति भावनाया
आख्यातावाच्यत्वे सतीत्यर्थः तस्या भावनायाः प्राधान्यं मुख्यविशेष्यत्वम् घटमानयेति जातिः पदार्थ इति मते जात्याक्षिप्तव्यक्तेर्यथा प्रा
धान्यं तथा कर्त्राक्षिप्तभावनाया अपि प्राधान्यमुपपत्स्यत इत्यर्थः शक्तिग्राहकेषु परिगणितात् विवरणाद्भावनावाचकत्वमाख्यातस्याया
स्यतीत्याशंकते भावनाया इति विवरणेति तत्समानार्थकपदान्तरेण तदर्थकथनस्य विवरणतया प्रकृते पचतीत्यस्य पाकं भावनेत्याख्या
तस्य भावनापदेन विवरणात्तस्य भावनावाचकत्वमित्यर्थः

नियामकमिति नहि भक्त्यंतनामार्थनिष्ठाभेदसंसर्गावच्छिन्नप्रकारतानिरूपितविशेष्यतासंबंधेन शाब्दबुद्धिं प्रति तद्विभक्त्यंतपदजन्योपस्थितेर्हेतुत्वस्य नीलो घट इत्यादौ क्लृप्तत्वादित्यर्थः तच्चेति अभेदान्वयबोधप्रयोजकसमानविभक्तिकत्वं चेत्यर्थः अत्रैव देवदत्तः पचतीत्यादौ तादृशनियमे व्यतिरेकव्यभिचारत्वानिदर्शयति सोमेनेत्यादिना नन्वत्र यागे सोमस्य करणत्वेनैवान्वयात्कथमुक्तनियमस्य व्यभिचार इति चेन्न सोमस्य यागभावनायां करणत्वेनान्वये यागस्यापि तत्र करणत्वेनैवान्वयात्सोमेन यागेनेष्टं भावयेदित्युभयविधाने वाक्यभेदप्रसंगः सोमस्य यागवत्फलभावनाकरणत्वेन प्राधान्यापत्तिर्यागार्थत्वानुपपत्तिः प्रत्ययवाच्यफ

न चाभेदबोधे समानविभक्तिमत्त्वं नियामकम् तच्चात्र नास्तीति वाच्यम् सोमेन यजेत स्तोकं पचति॥ ५ ॥

लभावनायाः समानपदोपात्तयागेनैव करणाकांक्षानिवृत्ते र्विभिन्नपदोपात्तसोमस्य करणत्वेनान्वयानुपपत्तिश्च सोमेन यागमित्यन्वयाभ्युपगमे यद्यपि सोमस्य नयागार्थत्वानुपपत्तिः करणत्वेनैवान्वयात् तथापि प्रत्ययार्थभावनाकरणत्वेनोपस्थितस्य साध्यत्वेनान्वयानुपपत्तिर्दुष्परिहरैवेति सोमपदस्य मत्वर्थलक्षणया सोमवता यागेनेष्टं भावयेदिति विशिष्टार्थविधानाद्वाक्यभेदप्रसंगो नेति मीमांसकसिद्धान्तस्तत्र चोक्तनियमे व्यभिचारो दुर्वार इति भावः स्तोकं पचतीति अत्रापि धात्वर्थव्यापारजन्यफलसंबंधिनि फले विभिन्नविभक्तिकस्तोकपदार्थस्याभेदान्वयादित्यर्थः

वैश्वदेवीद्रत्यादीति द्रव्यवाचित्वानापत्तेरित्यनुषज्यते तथाचबलाबलाधिकरणोच्छेदापत्तिरितिभावः तथाहि तप्ते पयसि दध्यानयति सा वैश्व
देव्यामिक्षा वाजिभ्यो वाजिनमिति श्रूयते अत्रायं संशयः किमनया श्रुत्यामिक्षावाजिनोभयगुणकमेकं कर्म विधीयतेऽथवा तद्गुणदेव
ताभिन्नं कर्मद्वयमिति वाजेनान्नेनामिक्षारूपेण संबंधाद्वाजिनो विश्वेदेवास्तान् नूद्य वाजिनगुणो विधीयते तेनोभयगुणकं वैश्वदेवमेकं कर्मे
ति पूर्वपक्षे वैश्वदेव्यामिक्षेत्यत्र तद्धितस्य देवतासंबंध्यर्थकतया श्रौतः संबंधो वाजिभ्यो वाजिनमित्यत्र तु वाक्येन सः सत्यामपि पदांतरापेक्षा
यां स्वाभिन्नार्थकपदस्यैवापेक्षणात् श्रौतत्वबाधः संबंधस्य यत्र तु भिन्नार्थकपदापेक्षा तत्रैव वाक्यस्य विनियोजकत्वात् एवं च वैश्वदेव्यामि
क्षेत्येतद्विहितवैश्वदेवयागानुवादेन न वाजिनगुणविधानं श्रौतद्रव्येण निराकांक्षत्वात् किंतु कर्मांतरविधिर्वाजिभ्य इति चापूर्वदेवता
विधानमिति राद्धांतः यदि च तद्धितस्य देवतासंबंध एव शक्तिस्तदा वाजिनामिक्षयोर्वाक्यविनियोज्यस्य साम्यादामिक्षाद्रव्येण देवतासं
बंधस्य श्रौतत्वमिति सिद्धांतव्याकोपः लक्षितद्रव्यमादाय देवतासंबंधे श्रौतत्वसंबंधात्तदनुपपत्त्यभावेन तद्धितस्य द्रव्यार्थकत्वकल्प
नमनुपयुक्तं स्यादिति अनुशासनलाभादिति उपलक्षणमिदं युक्तेरपि तथाहि घटपदात् घटत्वप्रकारकबोधवद्दंड्यादिपदाद्दंडसंबं
धवानिति प्रतीतिः सर्वसिद्धा तत्राकृत्यधिकरणन्यायेन संबंधमात्रं मतुबादिवाच्यं स्यादत एव देवदत्तस्य गोमत्त्वमित्यत्र त्व प्रत्ययस्य
संबंधबोधकत्वं संगच्छते घटत्वमित्यादौ प्रकृत्यर्थघटत्वबोधकत्ववत् प्रकृतिजन्यबोधप्रकारस्य भावप्रत्ययार्थत्वाद्धि गोव्यक्तेः संस
र्गस्य कथं न ततो बोध इति तु नाशंकनीयम् यतस्तस्याक्षिप्तव्यक्त्यंशे प्रकारतयैव भानात् एवं मत्वर्थविहितबहुव्रीहेरप्येकं हायनम
स्या इति विग्रहे देवतार्थकतद्धितस्यापि विश्वेदेवा देवता अस्या इति विग्रहे च प्रत्ययार्थसंबंधस्यैव प्राधान्यदर्शनात्तस्यैव वृत्तिवा

च्यत्वनिर्णय· उक्तंच यस्मिन्नन्यपदार्थे च बहुव्रीहिर्विधीयते तस्यापि प्रत्ययार्थत्वात्संबंधस्य प्रधानतेति नच गोमानित्यादौ संबंधि
प्रतीत्यनुपपत्तिः उभयाश्रितेन संबंधेनाक्षेपादुपपत्ते. तव कर्तृत्वसंबंधस्य नचासत्त्वभूतसंबंधस्यैव विभक्त्यर्थतया तद्धितिन
मतुवादेस्तादृशसंबंधबोधकत्वेन तत्र लिंगसंख्याः नन्वयापत्त्या सत्त्वभूतसंबंध एवानुशासनादरेण शक्तिरभ्युपेया एवंच द्रव्य
मेवार्थो मत्वर्थीयस्यास्तु संबंध आक्षेपलभ्य एव किं न स्यात् किंच मतुवादेः संबंधसामान्यार्थकत्वेन तस्य संबंधादिपदपर्यायतापत्त्या
संबंधविशेष्यकत्वमेवांगीकरणीयम् तत्त्वंचानुयोगिप्रतियोगिविशेषनिरूप्यत्वम् तथाचैकस्य निरूपकस्य प्रकृत्या लाभेप्यनु
योगिरूपनिरूपकभानार्थं तत्र शक्तिकल्पने त्वतीव गौरवमिति वाच्यम् मतुवादेर्हि सत्त्वभूतसंबंध एव वाच्योऽत एव

संबंधानामनेकत्वेऽलिंगकत्वेपि च दण्ड्यादिशब्दानामेकवचनात्तत्वनानालिंगकत्वंच संबंधिनां तथात्व एव तादृशप्रयोग
दर्शनात् तथाच मत्वर्थसंबंधे लिंगाद्यन्वयासंभवान्नैरेवाक्षेपः संबंधिनः आख्यातार्थसंख्यायेव कर्त्रादेः वस्तुतस्तु लिंगसंख्या
नन्वयित्वरूपासत्त्वभूतत्वमपि षष्ठ्यर्थादावर्थसिद्धम् प्रत्ययार्थलिंगसंख्यादेः प्रत्ययार्थ एवान्वयायोगात् प्रत्ययानामिति
व्युत्पत्तेश्च तस्मान्नासत्त्वभूतसंबंधः षष्ठीवाच्यः यत्तु अनुयोगिरूपनिरूपकभानार्थम् द्रव्ये शक्तिकल्पने गौरवमिति तदपि
न संबंधप्रत्यक्षे हि यावदाश्रयमानापेक्षा न शाब्दे येन तच्छक्तिकल्पना गौरवं संभाव्येत तस्मात्तत्र मतुबादेः शक्तौ न किंचिद्बाध
कमिति प्रपंचितं चैतदधिकमन्यत्र एवं चैकत्वायन्यादिपदानां संबंधवाचकतायामनुशासनस्य तदुपपत्त्यानेकयुक्तीनां च स
न्तैव शक्तिः सिध्येन्न सम्बन्धिनीत्यास्तवपल्लार्थः तथाचेति सामानाधिकरण्यस्य लक्षणयैवोपपादनेत्यर्थः ॥ ९ ॥ ॥

अरुणाधिकरणेति तथाहि अरुणया पिंगाक्ष्यैकहायन्या सोमं क्रीणातीति श्रूयते तत्र किमरुणिमा वाक्यं भङ्क्त्वा प्रकरणे निवेशनीयः
किंवा क्रीणातिना संबध्यते इति संशये क्रीणातिना संबध्यमानस्तद्योगात् क्रयणकरणं स्यात् न चामूर्तस्य तद्युक्तमिति नास्य क्रयणसंबंध
इति पृथगेव प्रकरणे निवेशनीय इति पूर्वपक्षः सिद्धांतस्तु संभवति सन्निहितपदार्थान्वये प्रकरणनिवेशनौचित्यात् पिंगाक्ष्यादिपदानां
द्रव्यवचनतया तस्मिन्नन्वयो लभ्येन तद्वारा क्रीणात्यर्थेनापि समन्वयलाभाद्वाक्यघटकत्वमेव तस्येति स चानुपपन्नः पिंगाक्ष्यादियौगि
कानां पदानामुक्तयुक्त्या संबंधार्थकतया द्रव्यस्यानेनानुपादानात् किंच पूर्वपक्षोऽप्यनुपपन्नः पिंगाक्ष्येकहायनीशब्दार्थसंबंधस्याप्य मूर्

तथा चारुणया पिंगाक्ष्यैकहायन्या सोमं क्रीणातीति वाक्ये द्रव्यानुक्तेरारुण्यस्य स्ववाक्योपात्तद्रव्य एवान्वयप्र
तिपादकारुणाधिकरणोच्छेदापत्तिर्द्रव्यवाचकत्वसाधकमूलयुक्तेः समानाधिकरण्यस्योक्तरीत्योपपत्तेरिति
प्रपंचितं विस्तरेण वैयाकरणभूषणे ॥ ११ ॥ जैत्वात्क्रीणातिकरणत्वासंभवेन क्रीणातिकरणत्वस्य तद्वाक्यादलाभादरुणस्यैव वा
क्यभेदशंकायां मूलशैथिल्याच्च बहुव्रीहेरारुणपदस्य च लाक्षणिकद्रव्यविधायकतायाश्च अविशिष्टत्वेन बहुव्रीह्यादेरेव द्रव्यविधायक
त्वं नारुणपदस्येत्यत्र विनिगमकाभावात् अधिकमग्रे वक्ष्यते उक्तरीत्येति संबंधिलक्षणाकल्पनेनेत्यर्थः प्रपंचितमिति प्रपंचस्तूक्त
प्रायः भूषण इति प्रकृतस्थले समासशक्तिनिरूपणावसरे चेत्यर्थः पदार्थं निरूप्येत्यनेन पदार्थनिरूपणानंतरं वाक्यार्थनिरूपणेन तयोः
संगतिः सूच्यते तत्फलं तु पूर्वापरग्रंथैकवाक्यप्रतिपत्तिरेकप्रयोजनवत्त्वज्ञानफलिका केचित्तु उन्मत्तप्रलपितत्वशंकानिदाना संगत

संख्यायाआख्यातार्थकर्तृकर्मोन्वयित्वेप्रयोजकमाह समानप्रत्ययोपात्तत्वादिति एतेनसमानाभिधानश्रुतेर्वाक्यापेक्षयाबलवत्त्वात्समानपदोपात्तान्वयित्वंविहायप्रथमान्तार्थेऽन्वयोनुचितइतिव्युत्पत्ते एकपदजन्योपस्थितिविषयत्वादितितदर्थः लडादीनांवाचकत्व॥ कल्पे आख्यातजन्योपस्थितिविषयत्वस्यकालेपिसत्त्वात्तत्रव्यभिचारवारणायकर्तृकर्मविषयत्वेनतांविशिनष्टि तथाचेति घटद्रूत्यादावेकत्वादिसंख्याप्रकारकबोधेव्यभिचारोमाभूदितिकार्यतावच्छेदककोटावाख्यातार्थेति तदर्थकालप्रकारकबोधेतन्नि

संख्याकर्तृप्रत्ययेकर्तरिकर्मप्रत्ययेकर्मणिसमानप्रत्ययोपात्तत्वात् तथाचाख्यातार्थसंख्याप्रकारकबोधंप्रतिआख्यातजन्यकर्तृकर्मोपस्थितिर्हेतुरितिकार्यकारणभावः फलितः नैयायिकादीनामाख्यातार्थसंख्यायाःप्रथमान्तार्थएवान्वयादाख्यातार्थसंख्याप्रकारकबोधेप्रथमान्तपदजन्योपस्थितिर्हेतुरितिकार्यकारणभावोवाच्यः सोपिचंद्रइवमुखंदृश्यतेदेवदत्तोभुक्त्वाव्रजतीत्यादौचंद्रक्त्वार्थयोराख्यातार्थानन्वयादितरविशेषणत्वघटितइत्यतिगौरवम् इदमपिकर्तृकर्मणोराख्यातार्थत्वेमानमितिस्पष्टंभूषणे॥

॥एतासायसंख्येति सोक्तमाख्यातस्यकर्तृकर्मार्थकत्वंदर्शयितुंप्रसंगान्न्यायमतंनिराकरोति नैयायिकानामित्यादिना अन्वयादिति एकपदोपात्तयोरेकार्थान्वयित्वस्यन्याय्यत्वादितिभावः आख्यातार्थ कालप्रकारकबोधेप्रथमान्तपदजन्योपस्थितेरनपेक्षणादाह संख्येति इतरविशेषणत्वेति प्रथमान्तार्थेतद्भिन्नविशेषणत्वघटितइत्यर्थः तथाचेतरविशेषणतानापन्नार्थविषयकोपस्थितिः कारणमित्यर्थः एवंचचंद्रभोजनादीनांप्रथमान्तार्थत्वेपीवार्थ

सादृश्यप्रजनादिविशेषणत्वात्तव्यभिचार इति भावः घटित इति तद्विषयकप्रतीत्यविषय इत्यर्थः तदवच्छिन्नावच्छेदकताकका-
णताग्रहविषय इति यावत् इतरविशेषणत्वे चेतरविशेषणत्वतात्पर्यविषयत्वम् नातश्चैत्रद्वयपश्यतीत्यादौ स्वसेकपानन्यायेन बो-
धे चैत्रीयसादृश्यमित्यवातरबोधाभावेन चैत्रस्येतरनिरूपितप्रकारताशून्यत्वरूपेतरविशेषणत्वसत्त्वेपि क्षतिः अविशेषणत्वेपि
विशेषणत्वतात्पर्यविषयत्वसत्त्वात् तथा चाख्यातार्थसंख्याप्रकारतानिरूपितविशेष्यतासंबंधेन शाब्दबुद्धिं प्रतीतरविशेषणत्वता-
त्पर्यविषयार्थवृत्तिविशेष्यतासंबंधेन प्रथमान्तपदजन्योपस्थितिर्हेतुरिति पर्यवसितोर्थः चैत्रेण सुप्यते इत्यादिभावाख्यातस्थले चै-
त्रकर्तृक स्वाप इत्यादिबोधस्य घटकविशेषणकथान्वये स्वापे तदनन्वयाद्व्यभिचारपरिहाराय प्रथमान्तेति पदविशेषणम् यद्यप्येव-
मपि चैत्र एव पचति न मैत्र इत्यादावन्ययोगव्यवच्छेदरूपैवकारपदार्थैकदेशेऽन्यत्वे चैत्रस्य विशेषणत्वात्तत्र तैस्यान्वयानुपपत्ति-
रिति विभाव्यते तत्प्रथमान्तार्थो विशेषणत्वमात्रतात्पर्यविषयत्वेन विशेषणीयः अवशिष्टांशस्यापि निवेशप्रयोजनाभावादुक्तस्थ-
ले च चैत्रस्य मुख्यविशेष्यत्वविशेषणत्वाभ्यां तात्पर्यविषयत्वात्तत्र संख्यान्वयानुपपत्तिरिति तन्मतनिष्कर्षः अतिगौरवमिति अन्यल-
भ्यस्थतौ शक्तिकल्पने संख्यान्वयबोधहेतूपस्थितौ विभिन्नपदजन्यत्वनिवेशे एव गौरवम् प्रथमान्तपदार्थस्य विशेषणत्वमात्रतात्पर्य-
विषयत्वेन निवेशे तु न गौरवमित्यर्थः इदमपीति उपदर्शितकार्यकारणभावे दर्शितलाघवमपीत्यर्थः यद्यपि तन्मते भावनान्वयि-
निसङ्ख्यान्वयनियमाभावात्तेन भावनाविषयकसंख्यान्वयबोधस्याकाङ्क्षाजन्यत्वाद्भावनान्वयबुद्धिं प्रति स्वस्वसंख्यान्वयबुद्धित्वव्यापक-
तथाप्युपधर्मावच्छिन्नसामग्र्याः फलेजननीये व्यापकधर्मावच्छिन्नसामग्र्या अपेक्षणाद्विशेषणत्वमात्रतात्पर्यविषयत्वविशेषण =

विशिष्टप्रथमांतार्थोपस्थितिरूपायास्तत्राभावादेवोक्तस्थलेव्यभिचाराप्रसक्तेर्नेतद्व्यावृत्तये संख्यान्वयकारणतावच्छेदककोटौ उक्तविशेष-
णप्रवेशावसरस्तथापि कृतिशक्तिवादिमत उक्तस्थलेतदापत्तिवारणाय भावनान्वयबोधकारणतावच्छेदककोटावेवोक्तविशेषणाविना-
रणप्रयुक्तगौरवमस्मन्मतेतु प्रथमांतपदार्थस्याख्यातार्थविशेषणतयैवान्वयेन चंद्रादेरेकत्र विशेषणतयान्वितस्यनैराकांक्ष्येणाऽपर-
त्र विशेषणतयान्वयायोगादुक्तव्यभिचाराभावेन तन्निवारकविशेषणोपादानप्रयुक्तगौरवमितीदमेवाभिप्रेत्योक्तमिदमपीति अधि-
कमन्यत्रानुसंधेयम् अत्राहुर्नव्याः लाघवोपष्टंहितोक्तयुक्तिकदंबेनाख्यातस्य धर्मवाचकत्वसिद्धावुत्तरकालकल्पना दृशाकार्य्य-
कारणभावप्रयुक्तगौरवं निषादस्थपत्यधिकरणन्यायेनाकिंचित्करं फलमुखत्वात् किंच चंद्राद्युपमाने आख्यातार्थसंख्याद्य-
न्वयोपगमस्यावश्यकः तत्र तदन्वयानुपगमे मादृश्यप्रयोजकधर्मालाभेन वाक्यस्यापरिपूर्णार्थतापत्तेः क्रोतार्थ्य भोजनादौ तु सं-
ख्यादीनामयोग्यत्वादेवानन्वयेनानतिप्रसंगादेवं चनास्मन्मते दोषलेशोपीति॥ ६ ॥ ६ ॥ ६ ॥ ६ ॥ ॥

टिप्पणम् ॥ अत्र वैयाकरणाः अन्यविभक्त्यन्तपदोपस्थितसंख्यायाः अन्यपदार्थेऽन्वयस्याप्रसिद्धत्वादेव भवदुक्तकार्य्यकारणभावक-
ल्पनमसिद्धम् अतएव पचतीत्यस्मादेवैककर्तृकपाकोपस्थितिः अन्यथा पाकानुकूलाकृतिरेकत्वमित्यनन्वितसंख्याया एवोपस्थितिः
स्यात् पदविशेषाध्याहारस्तु प्रकरणज्ञानं विनाऽसम्भवी अतएव कः पचतीति कर्तृविशेषजिज्ञासेति तस्मादिदमपीत्यस्य बाधकवि-
शेषं गौरवमपीत्यर्थः॥

कर्तृकर्मणो सङ्ख्यायाश्च विशेषणताव्यवस्थाप्य कालस्यापि तां प्रतिपादयति कालस्त्वित्यादिना व्यापार इति धात्वर्थव्यापार इत्यर्थः
नन्वाख्यातस्य कालशक्तिपरिच्छेदके पुवर्त्तमाने लडित्यादि सुव्यापारवाचकपदानुपादानात्कथं कालस्य धात्वर्थव्यापारविशेषण
त्वेन तत्सूत्रप्रामाण्येनैव तां साधयति तथाहीत्यादिना तच्च धातुपदं चेत्यर्थः. धात्वर्थमिति फलव्यापारोभयात्मकमित्यर्थः स
त्तायामित्याद्यर्थनिर्देशाद्भूवादिसूत्रप्रामाण्याच्चेति भाव -वदत् बोधयत् सम्भाषणइतिवच्छता प्राधान्यात् धातुजन्यबोधे विशे

कालस्तु व्यापारे विशेषणम् तथाहि वर्त्तमाने लडित्यत्राधिकाराद्धातोरिति लभ्यं तच्च धात्वर्थं वदत्प्राधान्या
द्व्यापारमेव ग्राहयतीति तत्रैव तदन्वयः नच संख्यावत्कर्त्तृकर्मणोरेवान्वयः शंक्यः अतीतभावनाके कर्त्तरि
पचतीत्यापत्तेः अपाक्षीदित्यनापत्तेश्च पाकानारंभदशायां कर्त्तस्त्वे पक्ष्यतीत्यनापत्तेश्च ॥ ६ ॥

ष्यतया भासमानत्वादित्यर्थः व्यापारमेवेत्येवकारेण फलव्यवच्छेदः प्राधान्यादित्युक्त्या पन्मते कर्माख्याते फलस्य प्राधान्यं तन्मते फ
ल एवान्वय इति ध्वनितम् ग्राहयतीति आख्यातार्थकालविशेष्यतया बोधयतीत्यर्थः गुणानां च परार्थत्वादिति न्यायात्प्रत्ययार्थ
स्य साक्षात्प्रकृतिजन्यबोधविशेष्यान्वयित्वनियमाच्चेति भावः कर्त्तृकर्मणोरिति समानप्रत्ययोपात्तत्वप्रत्यासत्तेरिति भावः पच
तीत्यापत्तेरिति कर्त्तुर्विद्यमानत्वादिति भाव एवमग्रेपि

नापिफलइति केचित्तु फलव्यापारयोर्धातोः पृथक्शक्तौतयोरुद्देश्यविधेयभावेनान्वयापत्तिः पृथगुपस्थितयोस्तथा न्वयस्यौत्सर्गिकत्वा त्तत्तद्धातुजन्यतादृशबोधस्यतथान्वयबोधेप्रतिबंधकताकल्पनेतुगौरवम् तस्मात्फलावच्छिन्नव्यापारेव्यापारावच्छिन्नफलेचधातू नांशक्तिः कर्तृकर्मार्थकतत्तत्प्रत्ययसमभिव्याहारश्चतत्तद्बोधेनियामकः गौरवंचप्रामाणिकत्वान्नदोषाय इत्थंचकर्त्राख्यातेव्यापा रस्यप्राधान्यम् कर्माख्यातेतुफलस्य यदायस्यप्राधान्यंतदातस्मिन्कालान्वयः स्तत्रस्थधातुपदादुभयोरपिप्राधान्येनोपस्थितत्वान्नो क्तविषयानवकाशः फलानुत्पत्तिदशायामारब्धेपाकेफलेवर्त्तमानत्वारोपाद्व्यापारेफलत्वारोपाद्वा पच्यतइत्यस्योपपत्तिरेकावय वेपिसमूहारोपादधिश्रयणकालेपचतीतिप्रयोगवत् आरोपेचप्रतीतिरेवमानम् व्यापारविगमेफलसत्त्वेऽपाचिदेवदत्तेनेत्यादि

नापिफलेतदन्वयः फलानुत्पत्तिदशायांव्यापारसत्त्वे पचतीत्यनापत्तेः पक्ष्यतीत्यापत्तेश्चेत्यवधेयंनचात्मवात्तजडी कृतकलेवरस्योत्थानानुकूलयत्नसत्त्वादुत्तिष्ठतीतिप्रयोगापत्तिः परयत्नस्याज्ञानादप्रयोगात्॥ ऽप्रयोगास्तुभूतत्वस्यो त्पत्तिघटितत्वादित्याहुः तदपरेनक्षमंते पृथगुपस्थितयोस्तथान्वयबोधाभ्युपगमेनानार्थहर्य्यादिपदोपस्थितानामश्वसूर्यादीनामप्यु द्देश्यविधेयभावापत्तिरतोविभिन्नपदजन्योपस्थितेरेवतंत्रतानुसर्त्तव्या तदभावाच्च प्रकृतेकथंतदन्वयबोधापादनं तादृशफलव्यापा रयोर्धातुशक्तौमानाभावोगौरवंचविशिष्टधर्मस्यशक्यतावच्छेदकत्वेउक्तप्रयोगाणामारोपेणोपपादनंत्वऽगतिकगतिरितिस्पष्ट मेवविवेकिनाम् एतदनुरोधेनभूतत्वस्योत्पत्तिघटितत्वाभ्युपगमेपरमतानुसृतिरपीति व्यापारेआख्यातार्थकालान्वयेदूषणमाशं क्यनिराचष्टे नचेति यत्नसत्वादिति यत्नरूपव्यापारस्यवर्त्तमानत्वेनविषयाबाधात्ममतुनदानींफलानुत्पत्त्यानतादृशप्रयोगापत्ति

भू० ननु परयत्नस्य विजातीयमनःसंयोगाश्रयसमवायरूपप्रहेत्वभावादप्रत्यक्षत्वेपि चेष्टादिपक्षकेण तल्लिङ्गकेनानुमानेन तदवगता
वृ० वुत्तिष्ठतीतिप्रयोगापत्तिरिदं समाधेयमेवेत्याशङ्क्यापत्तिं परिहरति किंचिच्चेष्टादिनेति यत्किंचिच्छरीरावयवावच्छिन्नक्रिययेत्यर्थ
५ तदवगतौ यत्नानुमितौ अनुमानप्रयोगश्चैवं देवदत्तीयचेष्टा प्रयत्नजन्या चेष्टात्वान्मच्चेष्टावत् अथवा यदुत्थानानुकूलयत्न
वान् विजातीयचेष्टावत्त्वादहमिवेति चेष्टाप्रयत्नयोः कार्यकारणभावश्च प्रकृतेऽनुकूलस्तर्क इति परोक्तापत्तिं
मन्ययैव परिहरति तथाहि आमवातजडीकृतकलेवरप्रयत्नस्योत्थानोद्देश्यकत्वेपि तदजनकत्वान्नोक्तप्रयोगापत्तिरत एवो
त्थानाय यतत इत्येव तत्र प्रयोगः यागपाकाद्युद्देश्यककुण्डनिर्माणतण्डुलक्रयणादिदशायां यजति पचतीत्यादिप्रयोगवारणाय

किंचिच्चेष्टादिना तदवगतौ चायमुत्तिष्ठतिप्रत्ययमावात् फलं तु न जायत इति लोकप्रतीतेरिष्टत्वात् एवं च तिङर्थे
विशेषणमेव भावनैव प्रधानम् ॥११॥ स्वरूपसंबन्धरूपप्रयोजकताविशेषस्यैव संबन्धताया अभ्युपेयत्वादिति न चिन्त्यम् तदु

द्देश्यकत्वं हि तदिच्छाधीनेच्छाविषयत्वं उपायेच्छायाः फलेच्छाधीनत्वात् उपायत्वप्रयोजकत्वमेव कथमन्यथा तन्मे [illegible]ति प्रकृते य
जतीत्यादिप्रयोगो दुर्वार एव तस्मात्साक्षाज्जन्यजनकभावः फलव्यापारयोः संबन्ध इत्येवाभ्युपेयम् तावतैवोक्तप्रयोगवारणात् प्र
कृते शक्तिरूपसहकारिकारणाभावेन तदनुत्पत्तावपि मदीययत्ने साक्षाज्जनकत्वस्य निराबाधत्वेनोत्तिष्ठतीति प्रयोगस्येष्टत्वात्।
प्रकृतधात्वर्थतयावगतेन सिद्धसाध्यत्वस्यैव सत्त्वेनोद्देश्यत्वस्य तदानीमसंभवाच्च एतदभिप्रेत्यैव सारकृतोत्थानानुकूलयत्नसत्त्व
इत्युक्तम् अत एव पाकानुकूलप्रकृतधात्वर्थयत्नसत्त्वे पचतीत्येव प्रयोगो न त्वदाऽनुपाकाय यतत इति उपसंहरति एवं चेति विशेषणमे

प्रकृति प्रत्ययार्थयोरिति श्रुत्यति विरोधमाशंकते यद्यपीति अन्यत्र पचतीत्यादौ दृष्टमिति तथा च प्रकृत्यर्थ भावनायाः प्राधान्योपगमे तद्विरोध इति भावः भावप्रधानमिति नामाख्यातोपसर्गनिपातभेदेनोद्दिष्टं चतुर्विधं पदं प्रकल्प्य नामाख्यातलक्षणप्रतिपादके इदमेवा-
क्य आख्यातं भावप्रधानमिति योजना यथाश्रुते यच्छब्दयोगः प्राथम्यमित्याद्युद्देश्यलक्षणमित्यभियुक्तोक्तेः शाब्दबोधे प्राङ्नि-
र्दिष्टस्यैवोद्देश्यतया विवक्षितार्थालाभात् अत एव वृद्धिशब्दस्य प्राङ्निर्देशो मङ्गलार्थ इत्याकरोक्तं संगच्छते एवमग्रेपि आख्यातत्वा-
वच्छिन्ने प्रधानभावार्थप्रतिपादकस्वरूपलक्षणेनान्यर्थावधारणाच्च लक्षणवाक्याच्छब्दमर्यादया प्रकृतपदद्वयार्थभेदस्याधिक

यद्यपि प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थस्यैव प्राधान्यमन्यत्र दृष्टं तथापि भावप्रधानमाख्यातं सत्त्वप्रधानानि नामानि
इति निरुक्तात् भूवादिसूत्रादौ क्रियाप्राधान्यबोधक भाष्याच्च धात्वर्थभावनाप्राधान्यमध्यवसीयते ॥ ६ ॥

भावप्रधानमिति निरुक्तम् २ नैघण्टिका: २

स्याभानेपि न क्षतिः लक्ष्यतावच्छेदकं च तिङन्तरूपाख्यातत्वम् आख्यातमाख्यातेनेत्यादौ तत्रैवाख्यातपदस्य शक्त्य-
वधारणात् भावकालकारकसंख्याश्चत्वारोऽर्थाः आख्यातस्य तत्र भावः प्रधानमिति प्रकृतनिरुक्तभाष्याच्च एतेन तिङः प्रधानभावा-
र्थकत्वस्य प्रतिपादकमेवैतदिति वैदिकाः प्रत्युक्ताः तच्छब्दपरामृश्यभावादिचतुष्टयस्यैकदा तिङा प्रतिपादनासंभवाच्च भावत्वं नि-
ष्प्राद्यत्वम् नातः कर्माख्यातस्य फलविशेष्यकबोधकतावादिमते तत्राप्रसक्तिः प्रधानप्रतिपादकत्वस्य नाममात्रे भावप्रतिपादक-
स्य भुङ्क्ते इत्यादिनाम्न्यतिप्रसक्तेः त्वात् तद्वारणाय विशिष्टमुपात्तम् प्रधानं चोपस्थितत्वात् स्ववाचकप्रकृतिकप्रत्ययार्थनिरूपितमेव

• ताःकाश्चित् पाकइत्यादौप्रत्ययार्थकरणनिष्ठप्रकारतानिरूपितविशेष्यताशालिबोधप्रतिपादकेपाकादिनाव्युत्पत्तिप्रसंगः नचपचति
इ बोध्यार्थनिष्ठप्रकारतानिरूपितविशेष्यतान्यपदप्रतिपादकत्वमेवाख्यातत्वमस्त्विति इतराविशेषणत्वरूपंतुनतत्र पचतिभवतीत्या
दिवाक्यघटकपच्याद्यर्थक्रियायातदसत्त्वेनपचतीत्याख्याते व्याप्तेः कृतः पूर्वकालार्थकत्वस्यनिराकरिष्यमाणत्वान्नोक्तलक्षणस्
लक्ष्येतिप्रसंगः कृदभिहितोभावोद्रव्यवत्प्रकाशतइतिभाष्येणपाकइत्यादाविवतस्यसत्त्वातिदेशेनसाध्यत्वरूपभावत्वाभावा
देवनातिप्रसंगइतितुनसत् यतः साधुत्वान्वाख्यापकव्याकरणस्मृत्यायत्तदर्थभावेलिंगाद्यन्वयोनुभवसिद्धस्तस्मिन्नेव तदतिदि
श्यते यथापाकइत्यादौघञर्थभावस्यकार्यंतुलिंगाद्यननुभवेनतत्रतदतिदेशविषयस्यात्याप्यत्वात् अव्ययकत्वेननसधात्व
र्थानुवादकत्वस्यवक्ष्यमाणत्वाच्च एतेनपचतिभवतीत्यादिवाक्यघटकाख्यातसमभिव्याहृतपच्यादिक्रियानिरूपितविशेष्यतानिरू
पितविशेषणत्वाभाववत्त्वंतत् पच्याद्यर्थक्रियायाभवत्यर्थविशेषणत्वेपिकचिदसमभिव्याहारेविशेष्यतयैवभानात् नतत्रा
तिप्रसंगइत्युक्तम् उक्तापेक्षयाभावघटितत्वेनगुरुत्वात् अग्रिमलक्षणेप्राधान्यस्यविशेष्यत्वरूपस्यैववक्ष्यमाणतयात्रा
पितस्यैवव्याप्यत्वात्तत्रभावः प्रधानमितिभाष्येणमहत्कार्यस्यैवलाभाच्च सत्त्वप्रधानानीति अत्रापिपूर्ववदुद्देश्यविधेयभाव
कल्पना लक्ष्यतावच्छेदकंचकृत्ताद्धितप्रकृतिकविभक्त्यन्तत्वरूपंनामत्वम् प्रकृति प्रत्ययोविभक्तिरित्येतन्नामसत्त्वा द्रव्या
लिंगसंख्यावचनामार्थइतितद्व्याख्यानात् क्रियाप्रधानमाख्यानसत्त्वप्रधाननामयतः क्रियांपृष्टस्तिङाचष्टे किंकरोतिपचतीति द्र
व्यंपृष्टःकृताचष्टेकतरोदेवदत्तोयः पाचकइतिप्रशंसायामितिसूत्रस्यमहाभाष्याच्च तत्रकृतेत्यस्यतत्प्रकृतिकसुबन्तेनेत्यर्थः
सत्त्वप्रधानानिनामानीतिनिरुक्तभाष्यादिनर्थः

कृतान्द्व्याभिधानेपिनकेवलेतिन्यायेनकेवलस्यप्रयोगानर्हत्वात् निरुक्तभाष्यस्याविभक्तिपदस्वारस्याच्च व्युत्पत्तिपक्षमवलंव्य
वेदं नातोऽव्युत्पत्तिपक्षेनामादिष्वतिप्रसंगः लक्षणमाह सत्त्वप्रधानानीति सत्त्वंद्रव्यंवक्ष्यमाणलक्षणंतत्प्रधानंयत्रेतिविग्र
हाल्लिंगादिनिष्ठप्रकारतानिरूपितविशेष्यताशाल्यर्थप्रतिपादकत्वंनामलक्षणमित्यर्थः विशेष्यार्थकत्वस्यनिपातारव्याता
दावतिप्रसक्तत्वात्तद्वारणायप्रकारतानिरूपितत्वांतंविशेषणम् व्यक्तिवोधस्यधर्मविषयकत्वनियमेनजातिप्रकारतानिरू
पितत्वस्यातिप्रसंगावारकत्वात्तदनुपादानम् लक्ष्यतावच्छेदकानाकांतेषुयादृच्छिकेष्वतिप्रसंगस्तुलक्षणेनद्यनिरिक्तत्व
विशेषणेनैवपरिहरणीयः एवंधात्वर्थानुवादकप्रत्ययांतेष्वप्रसंगोपिलक्ष्यतावच्छेदकेनहिशेषणेनैव तत्रनामत्वव्यव
हारोपिस्वार्थंतत्वनिवंधनोभाक्तइतितद्भावः उपसर्गादिलक्षणंतुवक्ष्यते भूवादीति इत्थंहितत्रभाष्यम् कानर्हीयंवाचोयु
क्तिः पचतिभवतित्वंपचसिभवति पश्यतिभवतीति सैषावाचोयुक्तिः पचादिक्रियाभवतिक्रियायाः कर्त्रीभवन्तीति तत्र
चाहत्यैवपचाद्यर्थक्रियाकर्तृकभवनक्रियायाः प्राधान्यंप्रतिपाद्यते धात्वर्थक्रियाया आख्यातार्थविशेषणत्वाभ्युपग
मेतुस्वस्वार्थविरुद्धत्वेनपदार्थांतरेविशेषणतयान्वयेनैराकांक्ष्येणभवत्यर्थक्रियायामाख्यातार्थविशेषणपच्यादिक्रि
यायामन्वयासंभवेनतद्विरोधोऽप्रतिरोधएवस्यादितिभावः सूत्रादावित्यादिनाप्रशंसायामितिसूत्रपरिग्रहः॥३॥
ननुभावप्रधानमाख्यातमितिनिरुक्तेनतिङंतेभावनापरपर्य्यायभावप्राधान्यंप्रतिपाद्यतेसाचनैयायिकमतेकर्त्र
ख्यातेकर्तृत्वंकृतिःकर्माख्यातेकर्मत्वम्फलंनतिनिरूपिताश्रयत्वंवातैःसंख्याकालातिरिक्ताख्यातार्थस्यभावना

पदस्य पदे रथ्युत्वोपगमात् भावाख्याते तु धात्वर्थव्यापार एवानुवादकत्वान्न दाख्यातस्य प्राधान्यं च तस्याः प्रकृत्यर्थापेक्ष समानप्रत्ययोपा
त्तत्वम् अस्याः तत्वो फलमात्र धात्वर्थ इति वदतां मीमांसकानां मते तदपि भाष्यमूलं नेत्र लडाद्यर्थकालान्वयोपगमे तु तदपेक्षमपि वक्तभाष्ये
पिक्रियापदार्थस्तत्सम्मतभावनैव अत एव क्रियाप्रष्ट तिडाचष्टे न्येवोक्त न तु तिङ्कतेनेति कृत्यादिरूपभावनायाआख्यातार्थत्वे माऽ
नतु भूवादिसूत्रस्य कथं ज्ञायते ऽयं प्रकृत्यर्थोऽयं प्रत्ययार्थ इति प्रश्ने ऽन्वयव्यतिरेकाभ्यां शक्तिग्राहकमिह पचतीत्युक्ते कश्चि
च्छब्दः श्रूयते पच् शब्दस्य अकारान्तो ऽतिप्प्रत्ययः श्रूयते अ[illegible]र्थोपि कश्चिद् गम्यते विक्लितिः कर्तृत्वमेकत्वं पठतीत्युक्ते कश्चि
च्छब्दो हीयते कश्चिदुपजायते कश्चिदन्वयी पच् शब्दो हीयते पठ् शब्दस्तूपजायते अतिशब्दस्त्वन्वयी अर्थोपि कश्चिद्धीयते कश्चिदु

अपि च आख्यातार्थप्राधान्ये तस्य देवदत्तादिभिः समभेदान्वयात् प्रथमांतस्य प्राधान्यापत्तिः ॥ ९ ॥

पजायते कश्चिदन्वयी विक्लित्तिर्हीयते पठिक्रियोपजायते कर्तृत्वमेकत्वं चान्वयितेन मन्यामहे य शब्दो हीयते तस्य सावर्थो यो ऽ
र्थो हीयते यः शब्दस्तूपजायते तस्यासावर्थो योर्थस्तूपजायते यः शब्दोऽन्वयी तस्यासावर्थो योर्थोऽन्वयीति भाष्यम् तत्रातः प्रत्ययस्य
कैश्चित्पूर्वाचार्यैः कस्यचित् तिप्प्रत्यय इत्युक्तमिति कैयट पच्यते पक्ष्यते इत्यादावप्युक्तान्वयव्यतिरेकोहेन कर्तृत्वस्याप्याख्या
तार्थत्वन्यायसाम्यात्तत एवावधार्यते - किं च भावप्रधानमिति निरुक्तं तद्भाष्यस्वरसात्सकलकारकसत्त्वाविशिष्टभावनायाधा
त्वर्थत्वमाश्रित्य प्रवृत्तम् अत एव नामलक्षणनिर्वचनेन कारकस्य तत्र नामार्थत्वेनोक्तेरेव तस्य धातुलभ्यत्वेन नामार्थत्वाभावादि

तिनदाश्रयात् नचरूपसूत्रस्यभाष्यप्रामाण्यात्क्रियायामेकत्वंसत्त्वेपिद्वित्वादिसत्त्वे मानाभावात्कथंतथोक्तसंगतिरितिवाच्यम् परे
त्वित्यादिनावक्ष्यमाणरीत्याकारकगतायास्तस्यास्तत्रारोपसंभवात् कालसंख्ययोर्द्योत्यत्ववत्कारकस्यापिद्योत्यत्वंन्यायसाम्यात्तः
सप्रत्ययार्थत्वोपगमेपाचक इत्यादाविवप्राधान्यापत्तेःजात्यतिरिक्तपदार्थस्यविशेषणतायाःत्यक्तत्वात् अतएवक्लियामिति
सूत्रेभाष्येप्राधान्यापत्तिभियालिंगस्यवाच्यतापक्षउपेक्षितः वाच्यस्यापिप्रकृत्यर्थविशेषणत्वेनतद्संगतिः स्पष्टैवनचोक्तकल्पे
ग्रामंगच्छतीत्यत्रकर्मबोधवद्धातोरपादानादिकारकविशिष्टक्रियाबोधापत्तिःपंचम्यादिरूपसमभिव्याहृतद्योतकविभक्तेरभा
वात् तत्रकर्तृकर्मणोस्तिङ्समभिव्याहृतद्वितीयादिविभक्तिश्चद्योतिका अन्येषांत्वन्याः नहिस्वप्रकृतिकप्रत्ययत्वमेवस्वार्थ
द्योतकतायांतंत्रम् उपसर्गाणांतदनापत्तेः किंतुस्वसमभिव्याहृतप्रत्ययनिपातान्यतरत्वम् तच्चतंडुलादिपदोत्तरविभक्तेर
प्यक्षतम् द्रव्यस्यसंख्याऽविशेषितस्यतत्त्वेनाम्नः संख्याभानापत्त्यातदर्थकत्वमावश्यकमितितद्भावः अतएवभावकालकार
कसंख्याश्चत्वारोऽर्थाआख्यातस्येतिभाष्यस्यकारकपदस्यासंकुचितवृत्तितापिसंगच्छते यदिचान्यप्रकृतिकविभक्तेरन्यप्रकृत्य
र्थद्योतकतायाःक्वाप्यदृष्टचरत्वान्नोक्ताशयवर्णनंसाधीयइतिविभाव्यतेतदापिसंख्याकालकर्तृकर्मकारकविशिष्टक्रियायाधा
त्वर्थत्वमादायतत्प्रवृत्तिः आख्यातस्यैवतादृशक्रियाद्योतकतासंभवात् नचास्त्वेवमेवाशयःवाच्यताकल्पोक्तकार्यकारणभा
वेकल्पनप्रयुक्तलाघवस्यापोहूलकत्वादितिवाच्यम् यत्तादृशमतंप्रक्रियादशायांचक्षुःश्रुत्युक्तिविश्वस्तैर्व्याश्रयितुमशक्यम्
प्रागेवतुप्रकृतिप्रत्ययार्थविवेचनचतुरैराक्षपादैः तथाहिकारकविशिष्टक्रियायाधात्वर्थत्वेलः कर्मणीतिविधिवैयर्थ्यापत्तेः

नचतस्यद्योतकत्वप्रतिपादकता शानजादेरपि तथात्वापत्त्यात्तत्रापिकर्त्रादीनां क्रियाविशेषणतयाभानापत्तेः । किंच चैत्रो पचति
इत्यादौ चैत्रादिगतसंख्यायास्तत्रारोपे मानाभाव वाचकतामतेकर्त्राद्यंशेतद्भानोपगमेनप्रयोगप्रामाण्योपपत्ताववप्रामा
ण्याभ्युपगमस्यान्याय्यत्वात् स्वाश्रयाधेयत्वसंबंधेनद्वित्वादेस्तत्रसत्त्वेप्यव्यावर्त्तकतया विशेषणत्वाभावेनतद्वैशिष्ट्यस्यतत्रासंभवा
च्च नहिद्वित्वाश्रयाश्रितपचादिरूपंक्रियाद्वेद्वइतिव्यवह्रियते अधिकमग्रेवक्ष्यते किंचकर्त्तृकर्मणोः पदार्थैकदेशतयानत्रदेवद
त्तादीनामन्वयासंभवः पदार्थः पदार्थेनान्वेतीतिव्युत्पत्तेः तदन्वयाभ्युपगमे पिधात्वर्थे भेदेन विशेषणतयास्तोकादिपदवन्नपुंस
कत्वापत्तिश्च अपिचक्रियाविशेषणत्वेनोपस्थितस्यकर्त्तुर्विशेषणाकांक्षाविरहात्पचतीत्युक्तेकः कीदृगितिप्रश्नानुपपत्तिः वक्ष्यति
हिग्रंथकृत् नहिगुणभूतः कर्त्तानियेधंस्वागत्वेनगृहीतुमलमिति अतएवतत्प्रामाण्यात्प्रत्ययवाच्यत्व कर्त्तुर्धात्वर्थविशेषणत्वेनिभ
गर्भेन परास्तः प्रत्ययस्यद्योतकतायामेवतन्निर्भरस्यदर्शितत्वात् प्रत्ययार्थप्राधान्यस्यैवततोलाभाच्च नचभावनायाः प्रत्ययवाच्य
तापक्षेप्युक्तप्रश्नानुपपत्तिर्दुःसमाधेयैवेतिवाच्यम् शक्तिभ्रमाल्लक्षणयावोपस्थितस्यकर्त्तुः साकांक्षत्वसंभवात् किंचप्रत्ययानां
प्रकृत्यर्थान्वितस्वार्थबोधकत्वमितिव्युत्पत्तिसिद्धं विभक्त्यर्थसंख्याप्रकारकबोधंप्रतिविशेष्यतयाप्रकृतिजन्योपस्थितेर्हेतुत्वस्य कर्त्रा
द्यवभावे नसंख्यान्वयासंभवः आख्यातार्थसंख्याप्रकारकबोधेआख्यातार्थकर्त्तृकर्मोपस्थितेर्हेतुत्वकल्पनमप्यप्रमहमूलकमेव प
दार्थयोराधाराधेयभावेनान्वये विभिन्नपदजन्योपस्थितेस्तत्रत्वात् विभक्त्यर्थकर्त्तुर्लिंगानन्वयित्वेनतयानत्रसंख्यान्वयासंभवात्
गुणानांच परार्थत्वादितिन्यायाच्च मन्मते योग्यतयातस्याः स्वप्रकृत्यर्थानन्वये पिप्रकृत्यर्थान्वयनियमोऽस्त्वेनएव, अस्यरपि विशेषो

ऽध्यवसायकारइति न्यायात् किंचाख्यातस्यकर्त्रर्थकत्वेराजसंबंधिपुरुषाभिन्नकर्तृकंगमनमित्यभिप्रायेणराज्ञः पुरुषोगच्छतीति
वत्स्वस्वामिभावादिसंबंधेनराज्ञः कर्त्रन्वयविवक्षयाराजापुरुषोगच्छतीतिप्रयोगापत्तिः नचतत्रषष्ठीप्रसक्तिःनदर्थस्यप्रातिपदिकार्थेविशे
ष्यतयाविवक्षायामेवतत्प्रसरात् व्यक्तीभविष्यतिचैतदुपरिष्टात् आख्यातार्थकर्तुर्नामधात्वर्थत्वेननामार्थधात्वर्थत्वयोरितिव्युत्पत्ति
विषयतायाअप्यभावात् नचतवापिचैत्रस्यपाकानुकूलाकृतिरितिचैत्रस्यपचतीतिप्रयोगापत्तिरितिवाच्यं षष्ठ्यर्थस्यनामार्थसाकां
क्षतयाऽऽख्यातार्थकृतेश्चप्रथमांतार्थसाकांक्षतयापरस्पराकांक्षाविरहात् गुरुविप्रतपस्विदुर्गतानामित्यादाविवपाकादिसंबंधित
याचैत्रादिविवक्षायांषष्ठ्यंतप्रयोगस्यसर्वैरेवोपगमाच्च तस्माद्धात्वर्थक्रियायाआख्यातार्थप्रतिप्राधान्येनिरुक्तमानोपन्यसनंमुधै
वेतिकोविदोविदांकुर्वन्तु पचतिभवतीत्यादौतुपाकानुकूलाख्यातार्थकृतोभवनाश्रयत्वरूपभवतीतितिङर्थभावनान्वयोपगमेन
पाकविशिष्टकृतोभवनकर्तृत्वेऽवगतेतद्विशेषणपच्यर्थक्रियायामपितल्लाभात् पचादयः क्रियाः भवतिक्रियायाः कर्त्र्योभवंतीति
भाष्यस्यादिपदस्यहेतुपरतयातेनव्यापारार्थकपचादिशब्दस्यसमासेपच्याद्यर्थहेतवः क्रियाः कृत्यात्मकव्यापाराभवनक्रियानिरू
पितकर्तृत्ववंतोभवंतीत्यर्थस्यतस्माल्लाभाद्ध्-तादृशैकवाक्यत्वस्यास्माभिरभ्युपगमान्नभूवादिसूत्रस्थभाष्यविरोधोपि तादृशभाष्य
प्रामाण्यादेवचाभवत्पचतेधात्वर्थप्रकारकबोधेधातुजन्योपस्थितेर्हेतुत्वकल्पनातेष्वाख्यातार्थभावनाप्रकारकबोधेतिङ्जन्यभा
वनोपस्थितेरपिविशेष्यतासंबंधेनहेतुत्वस्यकल्प्यतयोक्तैकवाक्यत्वस्योपपादत्वात् नचोक्तबोधाभ्युपगमेआख्यातेनकर्तुर

बोधनाच्चैत्रादिपदोत्तरं तृतीयापत्तिरिति वाच्यम् तस्याश्चैत्रस्याधेयतासंबन्धेनान्वयाभ्युपगमेन मुख्यविशेष्यतयैव तज्ज्ञाने ताश्रया
तिरिक्तायै विशेषणतया कृत्याः द्वि बोधनरूपस्याभिधानस्य तत्रासत्त्वात् तृतीयापत्त्यसम्भवात् तच्च चैत्रः पचतीत्येतावन्मात्रप्रयोगेऽपि
चैत्रस्याधेयतासंबन्धेनान्वयापत्तिरिति वाच्यम् प्रथमान्तार्थप्रकारकबोधे तिङर्थविशेष्यतापन्नभावनोपस्थितेर्हेतुत्वस्यापि कल्प
नेनोक्तदोषाप्रसक्तेः न च चैत्रे पाकानुकूलाकृतिरित्यत्रेव चैत्रः पचति भवतीत्यादौ सप्तम्यापत्तिर्दुर्वारैवेति वाच्यम् धात्वर्थविशे
षणीभूताधेयत्वस्य प्रातिपदिकार्थविशेष्यतया विवक्षायामेव सप्तमीविधानात् एवमाधेयत्वस्य प्रकारतयाऽविवक्षणाच्च द्रू
द्रूचाख्यातार्थकृतिमुख्यविशेष्यकबोधमभिप्रेत्योक्तं वस्तुतस्तु चैत्रः पचति भवतीत्यादौ प्रथमान्तार्थविशेष्यकबोधाभ्युपगमेऽपि
नैकवाक्यताक्षतिः भवनकर्तृत्वान्विताया एव पाकविषयकभावनायाश्चैत्रे प्रकारतया भानसम्भवात् एतेन कृतिविशेष्यकबो
धाभ्युपगमे प्रथमान्तार्थप्रकारकबोधे तिङर्थभावनोपस्थितेर्हेतुत्वकल्पने गौरवमिति दूषणमलग्नकं विशेषणतयैव तदन्व
याभ्युपगमादित्यरुचेराह अपि चेति अभेदान्वयादिति इदं च तन्मतेऽपि कर्त्राख्यातार्थ इति स्वीयवासनानुसारेण नैयायिकमतेनुक्त
तेराख्यातार्थतया तस्याश्रयत्वेनैव प्रथमान्तपदार्थेऽन्वयादित्यवधेयम्॥ ६ ॥ ६ ॥ ६ ॥ ९ ॥

भाष्यसिद्धेति क्रियापिकृत्रिमंकर्मक्रियापिहि क्रिययेप्सितं भवति कयासंदर्शनप्रार्थनादिक्रिययेति कर्मणायमिति सूत्रस्यभाष्यसिद्धे त्यर्थः त्वन्मते धावनानुकूलकृतिमान् मृगइत्यवांतरवाक्यार्थबोधस्यतत्रजायमानत्वेन धावनस्यकर्त्रावरुद्धतयाविशेषणतयान्वयेनैराकांक्ष्येणदर्शनेकर्मतयान्वयायोगात् किंतु धावनानुकूलकृतिमान् मृगोदर्शनाश्रयस्त्वमित्येवबोधस्स्यात् एवंचैकमुख्यविशेष्यकबोधजनकत्वरूपैकवाक्यत्वाभावात्तद्विरोधोदुर्वार इतिभावः ननुधावनानुकूलकृतिमन्मृगस्यैवकर्मतयादृश्यर्थेन्वयात्नोक्तदोषोऽतआह प्रयमानेति कर्मत्वापत्तेति कर्मत्वेनप्रकारापत्त्येत्यर्थः कर्मतासंबंधेन मृगस्यदर्शनक्रियायामन्वयस्त्वसंभवी

तथाचपश्यमृगोधावतीत्यत्रभाष्यसिद्धैकवाक्यतानस्यात् प्रथमांतमृगस्यधावनक्रियाविशेष्यस्यदृशिक्रियायांकर्मत्वापत्तौद्वितीयापत्तेः नचैवमप्रथमासामानाधिकरण्यात्कृत्प्रसंग एवमपिद्वितीयायादुर्वारत्वेनपश्यमृगइत्यादिवाक्यस्यैवासंभवापत्तेः नचपश्येत्यत्रतमितिकर्माध्याहार्यंवाक्यभेदप्रसंगात्॥ ऽऽनामार्थधात्वर्थयोरितिव्युत्तिविरोधाद्वक्ष्यमाणद्वितीयापादनविरोधाच्चेतिभावः द्वितीयापत्तेरिति कर्मणोऽत्रतिङानभिधानेनानभिहिताधिकारीयकर्मणिद्वितीयेत्यस्यजागरूकत्वादितिभावः एवमिति मृगपदोत्तरं द्वितीयाप्रसंगेइत्यर्थः शानज्विधौलडर्थकर्तुः प्रथमांतार्थसामानाधिकरण्येनविशेषितत्वान्मृगपदस्यद्वितीयांतत्वेतदापत्त्याद्वितीयानभविष्यतीतिशंकितुराशयः नहिशत्रापत्तिर्द्वितीयाप्रतिबंधिकाकिंतुकर्मणोऽभिधानंतदभावसत्त्वाच्चद्वितीयादुर्वारेत्याशयेनसमाधत्ते एवमपीति असंभवापत्तेरिति मृगस्यकर्मतयादृश्यर्थेऽन्वयोपगमेधा

नन्वर्थैक्यादेकवाक्यता काङ्क्षा चेद्विभागे स्यादितिजैमिनिसूत्राद्विच्छिद्य पाठे साकाङ्क्षत्वे सत्येकार्थप्रतिपत्तिजनकत्वमेकवाक्यत्वमित्यर्थो लभ्यते प्रकृते तमित्युक्ते कमित्याकाङ्क्षासत्त्वाद्यथाकथंचिद्वाक्यद्वयस्य धावनानुकूलकृतिमन्मृगकर्मकदर्शनरूपैकार्थप्रतिपादकत्वाच्च न वाक्यभेदप्रसङ्गोऽत आह उक्तं चेति अध्याहार इति पूर्वानुपात्ताकाङ्क्षितपदस्यानुसंधानेइत्यर्थः अनन्वयापत्तेश्चेति तत्पदेन मृगस्य धावनानुकूलकृतिमन्मृगस्य वा परामर्शे पीप्सितस्य तादृशधावनक्रियायाः दृश्यर्थकर्मत्वान्वयस्य तद्वाक्याद्वानानुपपत्तेः

उक्तरधावनक्रियाविशेषस्यैव दर्शनकर्मतयाऽन्वयस्य प्रतिपिपादयिषितत्वादध्याहारेऽनन्वयापत्तेरिष्ट्व एवं च भावनाप्रकारकबोधे प्रथमान्तपदजन्योपस्थितिः कारणमिति नैयायिकोक्तं नादरणीयम् किंत्वाख्यातार्थकर्तृप्रकारकबोधे धातुजन्योपस्थितिर्भावनात्वावच्छिन्नविषयतया कारणमिति कार्यकारणभावो द्रष्टव्यः भावनाप्रकारकबोधप्रति तु कृज्जन्योपस्थितिवत् धात्वर्थभावनोपस्थितिरपि हेतुः पश्य मृगो धावति पचति भवति इत्यादावनुरोधादि

तेरित्यर्थः उपसंहरति एवं चेति आख्यातार्थविशेष्यकबोधाङ्गीकर्तृनये एकवाक्यतानुपपत्तिरूपदूषणदार्ढ्यं चेत्यर्थः नादरणीयमिति उक्तदोषग्रस्तत्वादिति भावः स्वमतनिष्कर्षमाह किं त्विति फलव्यभिचारनिरासायोपस्थितिविशेष्यतां विशिनष्टि भावनात्वावच्छिन्नेति ननु त्वन्मते प्याख्यातस्य धात्वर्थमुख्यविशेष्यकबोधजनकत्वनियमभङ्गप्रसङ्गोऽत आह पश्येति तथा चोक्तनियम एतदतिरिक्तविषयक इति भावः ननु धावनकर्तृत्वविशिष्टमृगरूपवाक्यार्थस्य कर्मतया दर्शनेऽन्वयः तत्र पनना मार्थयोरितिव्युत्पत्तिविरोधः चा

क्यस्यानामत्वात् अतएवनततोद्वितीयापत्तिरपि धावनविशिष्टस्यदर्शनकर्मत्वावगतौ विशेषणीभूतधावनस्यापिकर्मतालाभा
च्च नप्रतिपिपादयिषितान्वयालाभोपि चैत्रःपचतिभवतीत्यादौनृक्तदिशैकवाक्यत्वमुपपादितमेव तथाचोक्तकार्य्यकार
णभावकल्पेकथंतदनुरोधोबीजमतआह दिगिति तदर्थस्त्वेवंरीत्यावाक्यैकवाक्यताप्रतिपादनेभाष्यकृत्संमतपदैकवाक्य
तयाप्रतिपिपादयिषितान्वयालाभएव किंचाभेदेननीलविशिष्टघटस्यकर्मत्वेप्रतिपिपादयिषिते नीलंघटंजानातीत्यादौद्वि
तीयानुपपत्तिरिति अत्रनैयायिकाः धावनक्रियाकर्तृत्वावरुद्धमृगस्यकर्मतासंबंधेन दृश्यर्थेऽन्वयोपगमात्पदैकवाक्यता
भंगः तदवरुद्धंचतदन्वयितयातात्पर्य्यविषयत्वम् नचैवंकर्मतासंसर्गेणतंदुलस्याप्यन्वयसंभवात्तंदुलःपचतीतिप्रयोगा
पत्तिरितिवाच्यम् यतोनवयंसामान्यतःकर्मत्वादिभेदसंबंधेननामार्थस्यधात्वर्थेऽन्वयमभ्युपेमः किंतुक्रियांतरकर्तृत्वाव
रुद्धस्यनचतंदुलस्तथायेनपच्याद्यर्थेतस्यकर्मतासंसर्गःस्यात् अतएवकाष्ठं भस्मराशिःकरोतीतिनप्रयोगः भस्मराशेःकर
र्तृत्वानवरुद्धत्वात् काष्ठंभस्मराशिःक्रियतइत्यादौकर्मत्वांतरावरुद्धक्रियायांतुतदनवरुद्धस्यापि व्युत्पत्तिवैचित्र्यात् तस्या
न्वयतत्संसर्गत्वानभ्युपगमेवाक्यभेदापत्त्यातद्वाक्यजबोधस्यकाष्ठंनश्यतेभस्मक्रियतइतिवाक्यद्वयजबोधस्येवभस्मका
ष्ठविकृतिर्वेतिसंशयनिवर्त्तकत्वानापत्तेरित्याद्यन्यत्रप्रपंचात्रपदैकवाक्यतायाअनायासेनैवोपपत्तौधात्वर्थभावनाप्रकारक
बोधेभावनोपस्थितेर्हेतुत्वंनिष्प्रमाणकमेव नापिमृगपदोत्तरद्वितीयापत्तिःप्रातिपदिकार्थविशेष्यतयाकर्मत्वस्याविवक्षणा

चितमेवं=३

दतएवननञ्पष्ठीप्रसक्तिरपि संसर्गस्यप्रातिपदिकार्थविशेष्यतयाविवक्षायामेव षष्ठीशेषइत्यनेनतद्विधानादेवं घटोनास्तीत्यादावपि
बोध्यम् किंतुप्रातिपदिकार्थेतत्रप्रथमैव नापिनीलघटंजानामीति प्रयोगानुपपत्तिर्घटस्यक्रियांतरकर्मत्वानवरुद्धत्वेन कर्मत्वांतर
विशेषणतानापन्नायाज्ञानात्मर्थक्रियायांकर्मतायाः संसर्गत्वासंभवात् पक्ष्यलक्षणपर्यायार्थकः परमधार्मिकइत्यादावस्तीत्यध्या
हार्य्य वस्तुतस्त्वत्रदृष्टातेनतंडुलः पचतीत्यादौबोधापादनेनविचारसहकर्मतान्यसंसर्गकप्रत्ययार्थविशेष्यकबोधस्याप्रसिद्धेरा
वापादनासंभवात् तंडुलपचतीत्यादौविभक्त्यर्थकर्मत्वसंबंधेनतादृशबोधः प्रसिद्धइतिचेन्नहितादृशबोधेद्वितीयांततंडुलश
पदसमभिव्याहृतपचतीत्यानुपूर्वीज्ञानस्यहेतुत्वेनपातदभावादेवापाद्यस्याप्यसंभवात् ननुकथमीदृशंफलंकथंचिन्नसिद्धंतादृशप्र
स्यैवापत्तिः संभवतीति एतेनपक्ष्यलक्षणेत्यत्रास्तिर्भवंतीपरोऽनुप्रयुज्यमानोऽप्यस्तीतिभाष्यस्यापिशब्दसारस्येनवाक्यपरिपू
र्णकक्रियांतराभावेऽस्तेरध्याहारइत्यर्थलाभेनप्रकृतेवाक्यपरिपूर्तिक्रियादर्शनक्रियायाः तत्त्वेनतदध्याहारेमानाभावात्कर्मता
संसर्गेणान्वयोऽनुपपन्नइतिदूषणमलग्नकम् एवंचाख्यातेप्रथमांतपदसमभिव्याहारेप्रायः प्रथमांतार्थविशेष्यकबोधोनिरा
बाधः अतएवयोयः मूढस्सपचेतिद्वितीयत्वेपीतिदिनइत्यत्रप्रधानपरामर्शितरोहिजपरामर्शकत्वम् ननुप्रथमांतार्थविशेष्य
कबोधवादिमते पचतिकल्पंचैत्र पचत. कल्पंचैत्रोरित्यादौकल्पवाच्यत्वमतयातद्विशेषणवाचकतयाचप्रथमांतत्वेप्राप्ते
पदसमानलिंगवचनत्वापत्तिरितिचेन्न स्वार्थिकत्वात्प्रायः. प्रकृत्यर्थमात्रकर्तृकगानकुत्सादियोतकत्यप्रकृतेप्रकृत्यर्थेतात्व

दकक्रियागतेषदसमाप्तत्वस्य कल्पपाद्योतनात्त्वासत्वाभ्यां प्रकृत्यर्थतावच्छेदकसमानस्य भावेषदसमाप्तत्वप्रतिपादककल्प
बाद्यंते नपुंसकैकवचनांतत्वयोरौचित्यात् कल्पबाद्यंतस्य नामत्वेन समानविभक्तिकत्वेन च तदर्थस्य चैत्रेऽभेदान्वयापत्तिरिति
नु मूर्खप्रलयिनत्वादनादेयम् लक्ष्यार्थकर्तुर्भेदान्वयस्येष्टत्वात् शक्यार्थस्य त्वयोग्यत्वादेवानन्वयात् घटः पट इत्यादौ व्य
भिचारवारणाय व्युत्पत्तावसति बाधक इति विशेषणाच्चेत्याहुः अत्रेदं भाति प्रथमांतकर्तृवाचकपदसमभिव्याहारे प्रायः प्रथमांतार्थविशेष्यकबो
ध एव नैयायिकानां क्वचित्तु पश्य मृगो धावतीत्याद्येकवाक्यतानुरोधात् तिङर्थभावनाविशेष्यकोपि सः तथाहि वैयाकरणैरुक्तस्थलीयैकवाक्य
तानुरोधात्तदर्थभावनाप्रकारकबोधे धातुजन्यभावनोपस्थितेर्हेतुता कल्प्यते नैयायिकैस्तु तिङर्थभावनाविशेष्यकबोधे धातु
जन्यभावनोपस्थितिः सममेव प्रकृतिप्रत्ययार्थयोरिति प्रवादानुरोधात् प्रथमांतार्थकर्तृप्रकारकबोधे क्रियांतरकर्तृत्वा
विशेष्यतापन्नतिङर्थभावनोपस्थितेरपि सा कल्प्यते तथा चोक्तस्थले आधेयतासंबंधेन मृगविशिष्टधावनानुकूल
कृतेः कर्मतया दृश्यर्थेऽन्वये मृगनिष्ठा या धावनानुकूला कृतिस्तत्कर्मकदर्शनाश्रयत्वमिति वाक्यार्थबोधः धावनविशिष्ट
कृतौ च बोधितकर्मत्वस्य सविशेषणे हीति न्यायाद्धावने पर्यवसानाच्च प्रतिपिपादयिषितार्थस्यापि लाभः नापि मृगपदोत्तरं
द्वितीयापत्तिः मृगकर्मताया एतद्वाक्यादलाभात् एवं च पचति भवतीत्यत्रापि वर्तमानभवनाश्रयिका कृतिरिति बोधात्तत्राप्ये
कवाक्यत्वाक्षतिः एवं च प्रकृतिप्रत्ययार्थयोरिति न्यायाविरोधेनैव भाष्यकारोक्तवाक्यतात्पर्यनयेपि सूपपादेत्यलं परमता
नुवर्णनेन॥

फलितमाह इत्यचेति आख्यातार्थकर्तृप्रकारकबोधप्रतिधात्वर्थभावनोपस्थितेस्तादृशकर्मप्रकारकबोधेनादृष्टफलोपस्थितेर्हेतु
तेत्यर्थः भावनेत्यस्यवर्त्तमानेत्यादि कर्माख्यातेभावनाविशेष्यकबोधोपवर्णनंतुप्राचामनुरोधेन नव्यास्तु कर्मकृतिफलविशेष्य
बोधस्यदृष्टत्वेनकर्माख्यातेपितद्विशेष्यकबोधएवन्याय्यः एवंचप्रत्ययार्थसाक्षात्प्रकृत्यर्थविशेष्यान्वयित्वमितिव्युत्पत्तिरपिनः
विरुध्यते अतएवेष्यतेपुत्रइत्यर्थेपुत्रीयतीतिनभिन्नार्थकत्वात्किंतुपुत्रमिच्छतीत्यर्थएवेति सुपआत्मनइतिसूत्रेभाष्येउक्तम् अ
न्ययोभयत्रापिव्यापारविशेष्यकबोधेभिन्नार्थकत्वकथनासंगतिः अस्मन्मतेत्वेकत्रव्यापारोविशेष्योऽन्यत्रैवचरूपंफलमितिभिन्ना
र्थकत्वस्यस्पष्टमेव क्यजंतात्तुकर्मणिप्रत्ययेदुर्लभोऽकर्मकत्वात् उक्तंचकैयटेन यदाक्रियाफलस्यप्राधान्यंतदावाक्यमेवेष्यतेपुत्रोन
त
इत्यचपचतीत्यत्रैकाश्रयिकापाकानुकूलाभावना पच्यतइत्यत्रैकाश्रयायाविक्लित्तिस्तदनुकूलाभावनेतिबोधः
तुक्यजंतस्याकर्मकत्वात्कर्मणिप्रत्ययानुत्पादादिति इत्यचभावनाऽन्यैकाश्रयिकावर्त्तमानाविक्लित्तिरितिबोधइत्याहुः भावाख्यातेतु भा
वनैवविशेष्यातथैवानुभवात् तिङ्त्वनुवादकएवकिंतुलडादिवाच्यकालार्थकः सत्प्यतुननदर्थः कर्मादिरूपार्थोपस्थित्यात्मकहेतु
भावेनैवतदर्थेषव्यापारान्वयासंभवात् किंतुनकेवलेत्यादिन्यायेनसाधुत्वार्थमेकवचनमेव एकवचनमुत्सर्गतः करिष्यतइति
सिद्धान्तात् कालेयुक्ताभिसरणेमुह्यतिमृगमोहिकाः उष्ट्रासिकाः समास्यन्तेशय्यन्तेइतशायिकाइत्यत्रबहुवचनंतुभाष्यकारप्रयोगा
देवेतिप्राञ्च नव्यास्तु एकवचनस्यौत्सर्गिकत्वसत्त्वेवगमकेयथाव्ययानइत्यनाश्रव्ययादाप्सुपइति अतएवद्व्याविति सूत्रभाष्येति

ङः तेभ्यस्तदुत्पत्तिमाशंक्यतिङां संख्यायाउक्तत्वान्नेतिपरिहृतंभाष्ये तदुक्तरीत्यातिङांकारकगतायास्तस्याउक्तत्वेपिप्रकृत्यर्थगता
यास्तस्याअनुक्ततयौत्सर्गिकतयावैकवचनस्याशक्यवारणत्वेनतदसंगतिः स्पष्टैव द्व्येकयोरित्यादेर्लः कर्मणीत्यनेनैकवाक्यतापि
॰॰॰॰॰॰लकाराः कर्मादौ भवन्ति तेषांस्थाने चैकत्वादौ तिबादयो भवन्तीत्याकारैव नहितत्र द्वितीयकर्मणीत्याद्यस्तियेनसंख्यायाः कारक
विशेषणताप्रतीयेन आवृत्तौचनमानम् तस्मात्सर्वत्रसंख्यायाः प्रकृत्यर्थएवान्वयः कस्यैकत्वादावित्याकांक्षायामुपस्थितत्वात्प्रकृ
त्यर्थान्वयस्यैवोचितत्वात् कर्मणीत्यादेरपि विधेयंप्रति विशेषणत्वेनगुणानांचपरार्थत्वादितिन्यायेनसंख्यायामसंबंधात् कर्मणीत्
यादेः कस्यकर्मणीत्याकांक्षासत्त्वेनतत्र धात्वर्थान्वयस्यक्लृप्तत्वात् क्रियायामप्येकत्वमस्त्वतएकाक्रियेतिहूपसूत्रभाष्यात् एवंचतत्
स्यप्रकृत्यर्थेन्वयादेकवचनम् द्वित्वादिकंतुस्वोत्तरतिङ्वाच्यकारकगतंतत्रारोप्यकर्तृकर्मकेषुतिङ्षु द्विवचनादिसिद्धिः अतए
वनसाधने द्वित्वादिसंशयः साधनत्वाननिमित्तत्वात् अनेकः पचतीत्याद्यनुरोधेन साधनेपिसंख्यारोपस्यतवापिवाच्यत्वात् तस्या
प्यन्वयः प्रकृत्यर्थएव प्रकृतेहतशायिकाः शय्यंतेइत्यादौहतशयनसदृशानीत्येकेउपमानेबहुत्वोपपादनसामर्थ्येनोपमेयेतिङ
र्थक्रियारूपेउपमानगतबहुत्वारोपेणबहुवचनम् तिङ्वाच्यकारकगतायाएवारोपोनान्यगतायाइत्यत्र धात्वर्थशक्तिस्वभावए
वबीजम् अतएवभावेद्विवचनादिनदुक्तम् एकत्वेपिक्रियाख्यातेसाधनाश्रयसंख्यया भिद्यतेनतुलिंगाख्योभेदस्तत्रतदाश्रयइति
एवंचाख्यातार्थप्रकारकबोधेधातुजन्योपस्थितिः कारणमित्येकएव कार्यकारणभावइतिलाघवम् प्रत्ययानामितिव्युत्पत्तिपरिपा
लनंचेत्याहुः तदपरेनक्षमंते औत्सर्गिकैकवचनस्यसमयपरिपालनार्थकतयातत्रगमकाकांक्षायाअभावेनसत्येवगमकइत्युक्तिर्व्यर्था

पदपि गमकतयाद्व्याप्तसभाष्योपन्यसनं तथैव यत्संदेव भाष्यम् क्रियायां संख्यासामान्याभावबोधकम् तथा हि द्व्याः सूत्राभावे निर्दे
नात्सुवन्तनिष्ठकामन्यपार्थे कारकसंख्यामादाय प्रकृत्यर्थे गतसंख्यामादायेवा वक्तव्या नत्र प्रकृत्यर्थस्यास्त्वरूपं तत्या संख्यान्वयायो
गात्कारकगतसंख्यामादायेव प्रसक्ता सतिङन्तत्वादित्यनेन निराक्रियते समयपरिपालनस्य तिङ्वक्तव्यत्वान्न प्रसिवतन्निराकरण
स्याप्रसक्तेः एकाच क्रियेति भाष्यमपि न क्रियाया एकत्वं बोधयति किंतु संख्यासामान्याभावमेव कथमन्यथासाधारणैकवचनेनैवोपप
त्तौ वचनारंभसार्थक्यम् किंचोपमाने बहुत्वोपपादनसामर्थ्येनेति वदता कारके हि त्वासुपपादनसामर्थ्येनेत्यप्युक्तप्रायम् एवं चा
हत थापि काइत्यत्रोपमाने बहुत्वोपपादकबहुवचनवत् प्रकृते कारके कस्यचिद् द्वित्वासुपपादनस्याभावाज्जदाराः पासमेव. नन्वेवं
त्रमैत्राविति द्विवचनादितस्तदवगतिः चैत्रो मैत्रश्च पचतइत्यादावपगतेः भावाख्यातेस्तोनर निरुक्तस्य कारकाप्रसिद्ध्या द्विवचनासमं
वाच कस्यैकत्व इत्याकांक्षायायोग्यसंबंधिन्या एवोचितत्वात् क्रियायाश्च संख्येन परिच्छेदकाकांक्षाया एवासंभवे ननु प्रत्ययेन यो
पाहतत्वाच्च कारके संख्यान्वये तु प्रतीतिरेव मानमिति तन्न दनुपपन्ने रिंवकामेणीत्यादिपदानुवृत्तौ मानत्वात् उक्तवाक्यपदीयस्य
प्याख्यातार्थक्रियाया एकत्वेपि संख्यासामान्याभाववत्त्वेपि कश्चित्कर्तृकर्मादिवासुत्वेन साक्षान्नैव प्रतीयते पुत्यर्थो न्नमहितो पि
ननः शब्दमर्यादया धात्वर्थे तिङर्थसंख्यान्वय इत्यर्थस्याभावः गुणानां च परार्थत्वादिति तु सति प्रकृत्यर्थे स्य योग्यत्व एव. प्रत
स्वकेपदादिभिस्तिङर्थसंख्यायाः कारक एवान्वयः स्वीकृत एवं च भाष्यकारप्रयोगादन्यत्र भावाख्याते द्विवचनासाधुत्वेति ॥

आख्यातार्थकर्त्रादिभिरिति समानविभक्तिकयोरेवाभेदान्वय इति नियमस्य प्रागेव दूषितत्वादिति भावः अकर्मकस्थलेपि फलव्यापारोभयार्थकत्वं धातोरन्यैरपि स्वीकार्यमिति सूचयन्स्वबोधप्रकारमाह घटो नश्यतीति तद्व्यापाराकांक्षायामाह सचेति प्रतियोगित्वेति प्रतियोगित्वविशिष्टं तु निरूपकतासंबंधेन बोध्यम् तत्समवधानमेव तदनुकूलो व्यापार इत्यर्थः अतएवेति यतो नाशमात्रं नार्थः किंतु प्रतियोगित्वविशिष्टनाशसामग्रीरूपो व्यापारोप्यत एवेत्यर्थः फलव्यापारयोरैकाधिकरण्याच्च न सकर्मकत्वम् एतदर्थमेव प्रतियोगित्वविशिष्टत्वोपादानम् यन्मते नाशमात्रं धात्वर्थस्तन्मते नाशोत्पत्त्यनंतरं नाशस्य सदैव सत्त्वान्नश्यतीति प्रयोगाप

देवदत्तादिपदप्रयोगे त्वाख्यातार्थकर्त्रादिभिः तदर्थस्याभेदान्वयः घटो नश्यतीत्यत्र घटाभिन्नाश्रयको नाशानुकूलो व्यापार इति बोधः स च व्यापारः प्रतियोगित्वविशिष्टनाशसामग्रीसमवधानम् अत एव तस्यां सत्यां नश्यति तदत्यये नष्टः तद्भावित्वे नंक्ष्यतीति प्रयोगाः देवदत्तो जानातीच्छतीत्यादौ देवदत्ताभिन्नाश्रयको ज्ञानेच्छाद्यनुकूलो वर्तमानो व्यापार इति बोधः स चात्र आश्रयतैवेति रीत्योह्यम्॥

ऽऽ नित्यस्य ध्वंसाप्रतियोगित्वाच्च नष्ट इति प्रयोगानुपपत्तिरिति सूचनाय तस्यां सत्यामित्यादिना त्रैकालिकप्रयोगप्रदर्शनम् नैयायिकमतं तु लङर्थनिरूपणे वक्ष्यते जानात्यादिसविषयार्थकानां ज्ञानाद्यतिरिक्तव्यापाराद्यर्थकत्वानभ्युपगमे सकर्मत्वानुपपत्तिं सूचयन्स्वमते शाब्दबोधं दर्शयति देवदत्तो जानातीत्यादि आदिपदग्राह्यार्थमाह इच्छादीति क्वचिज्जानातीत्यादावित्येव पाठः सचेति ज्ञानानुकूलो व्यापारश्चेत्यर्थः तदन्वेषणायामात्ममनःसंयोगस्येव

कर्मणः कर्तृत्वविवक्षायामित्यादि सौकर्य्यातिशयद्योतनार्थाचतद्विवक्षा तंदुलादिगताग्निसंयोगादिरूपव्यापारस्यैव फलजनकता याधात्वर्थत्वविवक्षायामित्यर्थः वस्तुतस्तु फलस्यापिजनकव्यापारगतपौर्वापर्य्यारोपेणव्यापारत्वेनभानादिति पूर्वमुक्तत्वात्तंदुलगतफलस्यैवव्यापारत्वेनविवक्षायामित्यर्थः साधनादिति तथाच व्यभिचारान्नतङादीनांद्योतकतेतिभावः कर्मादीत्यादीति कर्मकर्तृविषयादाविति मूलस्यादिपदेनेत्यर्थः सामान्येत्यादिकर्मादित्यस्यविवरणम् सविषयधात्वर्थनिरूपितकर्मत्वस्यविषय

कर्मणः कर्तृत्वविवक्षायांकर्तरिलकारेसतिकर्मवत्कर्मणातुल्यक्रियइत्यतिदेशेनयगात्मनेपदचिण्चिण्वदिटामतिदेशाद्यगादिसत्वेपिकर्तुरेवबोधाद्व्यापार एव। अयान्वयाच्च अबोधीत्यत्रापिबुध्यतेः कर्तरिलुङ् च्लेः तस्दीपजनेतिचिण्चिणोलुगितितस्यलुकइतिसाधनादित्याशंकायामाह उत्सर्गोयंकर्मकर्तृविषयादौविपर्य्ययात् तस्माद्यथोचितंत्रेयंद्योतकत्वंयगागमम् ४ कर्मकर्तृविषयादौपच्यतेओदनःस्वयमेवेत्यादौ अत्रह्योदनाभिन्नाश्रयकःपाकानुकूलोव्यापारइतिबोधः कर्मादित्यादिपदग्राह्यम् अत्रसामान्यविशेषज्ञानपूर्वकएकनारदविषयकज्ञानानुकूलः कस्माभिन्नाश्रयकोऽतीतोव्यापारइतिबोधः यथोचितमितिसकर्मकधातुसमभिव्याहृतभावसाधारणविधिविधेयचिण्यगादिकर्मद्योतकमितिभावः ॥१५॥ तेपर्य्यवसानमित्यभिप्रेत्याह विषयकेति भावसाधारणेति भावकर्मणोः सार्वधातुकेयगित्यादिविहितेत्यर्थः तेनदीपजनेत्यादिविहितव्यावृत्तिः सकर्मकधातुसमभिव्याहृतयगादीनां कर्मद्योतकत्वादाह सकर्मकेति पच्यते तंदुलःस्वयमेवेत्यादौयगादिर्नतथाकिंत्वातिदेशिकम् कर्मवत्कर्मणेतिविहितातिदेशे

एवमिति उक्तप्रकारेणेत्यर्थ ननु फलव्यापारयोरित्यनेन सामान्यतो धातोः फलव्यापारवाचकत्वप्रतिज्ञासोत्तरक्षणे एवोपपत्तिभिस्त
द्व्यवस्थापनं कर्त्तुमुचितं न तु वाक्यार्थनिरूपणानन्तरं तेन जिज्ञासाविच्छेदादित्याशंकायामाह सूचीकटाहन्यायेनेति तथा च सामान्यतः
फलव्यापारयोर्धात्वर्थत्वे व्याख्यायमाने तद्धर्थत्वे च ज्ञाते निरसनीयाल्पवादिविप्रतिपत्तिकत्वेन सुप्रतिपादतया च प्रथमं वाक्यार्थ एव शि
ष्यजिज्ञासोदयात् एष एवादौ निरूपितो न तु धात्वर्थो निरसनीयबहुवादिविप्रतिपत्तिकत्वेनातिदुरूहतया च तस्य पूर्वमजिज्ञासित
त्वादिति भावः लडाद्यर्थं तद्व्यस्तत्कृण सविज्ञानवद्बुद्धौ ह्रिणधातुपरम् तथा च यजेत पचेतेत्यादौ यज्यादावित्यर्थः अवाच्यत्वम् वाच्य

एवं सूचीकटाहन्यायेन सोपपत्तिकं वाक्यार्थमुपवर्ण्य फलव्यापारयोरिति प्रतिज्ञातं धातोर्व्यापारवाचित्वं लडा
द्यर्थे भावनाया अवाच्यत्वं वदतः प्राभाकरादीन् प्रति व्यवस्थापयति व्यापारो भावना सैवोत्पादना सैव च क्रिया कृ
ञः कर्मतापत्तेर्नहि यत्नोर्थं दृश्यते ५ पचति पाकमुत्पादयति पाकानुकूलभावनानाद्युत्पादनेति विवरणा
द्धि क्रियमाणस्यापि तद्वाचकतेति भावः ॥

तानि रूपकत्वाभावप्राभाकरादीनित्यादिना नैयायिकसंग्रहः यद्यपि व्यापारो धात्व
र्थ इति नैयायिकसमतस्तथापि नासौ तन्मते भावनापदव्यपदेश्य इति भावः व्यापारो भावना सैवेत्यादिपूर्वार्द्धस्य योगुणभूतैरवयवैरित्य
युक्तलक्षणलक्षितोर्थस्तद्वाचकव्यापारपदं भावनादिपदैर्विव्रियते विव्रियमाणस्य विवरणसमानार्थकत्वेन धातोर्भावनावाचक
त्वसिद्धिरित्यर्थः तत्रोद्देश्यविधेययोरैक्यमापादयतः सर्वनाम्नः पर्यायेणान्यतरलिंगकत्वस्य शैत्यं हि यत्सा प्रकृतिर्जलस्येत्यादिव
द्दुष्टस्य लेपुदर्शनात् तत्र सेति स्त्रीलिंगनिर्देशानुपपत्तिः पुल्लिंगत्वेपि सोचि लोपे चेदिति लोपेन साधुत्वाच्च भावनेनव साक्षात्तत्पदपरा

ननु या क्रिया भावना सैवोत्पादनापि च सा स्मृते त्युक्तेपि क्रियायां भावनात्वलाभे किमिति व्यापारपदोपादानमत आह व्यापारपदं चेति तथाच व्याप्रियतेऽनेनेति करणव्युत्पन्नेन भावव्युत्पन्नेन वा व्यापारपदेन फलानुकूल यावतामधिश्रयणादीनां भावनात्वलाभः क्रियापदेन तु कृतिपदवद्यत्नमात्रार्थकेनोक्तविवरणात्कृतेरेव भावनात्वलाभः स्यादिति तदुपात्तमिति भावः अत एवेति तत्तद्रूपेण फूत्कारत्वादीनां धातुवाच्यत्वादेवेत्यर्थः सर्वसिद्ध इति पचतीत्युक्ते फूत्कारादिमान्नवेति संदेहानुदयादिति भावः यद्रीत्या नैयायिकैः कृतित्वस्याख्यातवाच्यतावच्छेदकत्वं व्यवस्थापितं तद्रीत्यैव धातोः कृतित्वं शक्यतावच्छेदकं भविष्यतीति तदस्याशंकां निराकरोति नचैवमेषामित्यादि नचेति साध्वीत्यनेनान्वि

व्यापारपदं च फूत्कारादीनामयत्नानामपि फूत्कारत्वादिरूपेण वाच्यतां ध्वनयितुमुक्तम् अत एव पचतीत्यत्राधः संतापनत्वफूत्कारत्वव्यपरिधारणत्वयत्नत्वादिभिर्बोधः सर्वसिद्धः नचैवमेषां शक्यतावच्छेदकत्वे गौरवापत्त्या कृतित्वमेव तदवच्छेदकं वाच्यम् रथो गच्छति जानातीत्यादौ च व्यापारत्वादिप्रकारकबोधो लक्षणयेति नैयायिकरीतिः साध्वी शक्यतावच्छेदकत्वस्यापि लक्ष्यतावच्छेदकत्ववद्गुरुणि संभवात्॥ ॥तमेषाम् अधिश्रयणत्वादीनां गौरवादिति धातुवाच्यतावच्छेद

कृ

त्वे गौरवादित्यर्थः तेषां कृतित्वापेक्षया गुरुत्वान्नानात्वाच्चेति भावः तदवच्छेदकमिति धातुवाच्यतावच्छेदकमित्यर्थः ननु कृतेरेव धात्वर्थत्वे रथादावचेतने तद्वाधात्तादृशप्रयोगानुपपत्तिरत आह रथो गच्छतीत्यादि व्यापारादीत्यादिनाऽश्रयत्वपरिग्रहः नैयायिकरीतिरिति आख्यातार्थविचारे हि तैर्व्यापारे लक्षणां स्वीकृत्यायं प्रयोगः समर्थितस्तद्वन्मयापि समर्थनीय इत्यभिप्रेत्य रीतिपदोपादानं तत्त्वांशे तन्मतादर इति भावः लाघवोपष्टम्भमानादेवार्थसिद्धिर्न केवलाल्लाघवादित्याशयेन तद्रीतेरेवासाधुत्वमाविष्करोति शक्यतावच्छेदकत्वस्येति

तथाच शक्तिर्गुरुणापि धर्मेणावच्छिद्यतेऽसति वाधके कृतित्वाल्लक्षणावदित्यनुमानात्तेषु शक्तिः सेत्स्यतीति भावः

ननुतेषांकृतित्वापेक्षयागुरुत्वमेवबाधकमतआह तयोरिति शक्यतावच्छेदकत्वलक्ष्यतावच्छेदकत्वयोरित्यर्थः बीजाभावादिति असं
भवतिसमनियतेलघौधर्मेगुरौतदभावादित्यस्यप्रकृतेऽनवतारेणयद्यवच्छेदकत्वंस्वरूपसम्बन्धविशेषस्तदातत्स्वरूपत्वंगुरूणामप्यक्ष
तम् अथातिरिक्तंतदागुरुधर्मेपितत्स्वीकारआवश्यक गङ्गातीरत्वलक्ष्यतावच्छेदकमितिव्यवहारात् तस्यावच्छेदककोटिप्रविष्ट
त्वसोभयत्रसाम्याच्च तत्रन्यूनातिरिक्तवृत्तित्वरूपावच्छेदकत्वमादायतादृशव्यवहारोयदितदासर्वत्रैवतथास्त्विति भावः ननुलाघ
वेनतस्यावच्छेदकत्वंवदामः किंतुमानाद्यपीत्याशङ्कते नचेत्यादि यत्नार्थककरोतिनेतुव्याख्यापादजन्यत्वप्रतिसंधानाविशेषेपिघट

तयोर्वैषम्येबीजाभावात् नचयत्नंनिपाकंकरोतीतियत्नार्थककरोतिनाविवरणाद्यत्नएवार्थइतिवाच्यम् रथोगमनंक
रोति बीजादिनाङ्कुरः कृतइतिदर्शनात् कृञोयत्नार्थकतायाअसिद्धेरिति किंचभावनायाअवाच्यत्वेघटंभावया
तीत्यत्रेवघटोभवतीत्यत्रापिद्वितीयास्यात् नचात्रघटस्यकर्तृत्वेनतत्संज्ञयाकर्मसंज्ञायाबाधान्नद्वितीयेतिवाच्यम्

कुरयोः कृताकृतव्यवहारान्कृञोयत्नार्थकत्वसिद्धमेवेतिध्वनयति विवरणादिति तदर्थप्रतिपादनरूपादित्यर्थः धातुमात्रयत्नत्व
विशिष्टेशक्तंबाधकंविनायत्नत्वविशिष्टार्थककरोतिप्रतिपादितार्थकत्वात्तद्यद्विशिष्टबोधकपदप्रतिपादितार्थकंभवतितत्तत्र
शक्तं घटत्वविशिष्टशक्तघटपदप्रतिपादितार्थककलशादिपदवत् इतिसामान्यतोदृष्टानुमानविषयशक्तिग्राहकत्वाद्विव
रणस्येतिभावः यत्नएवार्थइतिपाठः आख्यातार्थइतिपाठस्तुप्रकृतसंदर्भविरुद्धः अर्थः धात्वर्थः एवकारेणव्यापारसमास्यत

व्यवच्छेदः कृञोयत्नार्थकत्वएवधातुमात्रस्यतदर्थकत्वसंभावनातदेवगगनकुसुमायमानमित्याह रथोगमनंकरोतीत्यादि रथा
दावचेतनेयत्नस्यबाधेनतादृशप्रयोगानुपपत्त्यानकृञोयत्नार्थकत्वमपितुव्यापारार्थकत्वमेवेति तेनविवरणाद्धातोर्व्यापारार्थक
त्वमेवसिध्यतीतिभावः ननुरथोगच्छतीतिप्रयोगस्यधात्वर्थप्रतिपादककृञोव्यापारेलाक्षणिकत्वान्नतेनयत्नार्थकत्वक्षतिरतआ
ह बीजादिनेति तथाचकृञोव्यापारेप्रयोगप्राचुर्येणतत्रैवशक्तिर्न्याय्येति तेनविवरणाद्धातोर्व्यापारार्थकत्वमवश्यमंगीकरणीय
मितिभावः अत्रेदमवधेयम् पचत्यादेः फूत्कारादिव्यापारेव्यापारत्वेनैवशक्तिः व्यापारसामान्यार्थककृञोविवरणात् एवंचव्या
पारत्वेनकृतेरपिसंग्रहान्मत्तोभूतंनतुमयाकृतमित्युपपद्यतेइतितत्रतत्रोक्तंसंगच्छते तत्तद्रूपेणकचिद्बोधस्तुपचत्यादीनां त
तद्रूपावच्छिन्नेलक्षणयोपपाद्यः शक्यादन्येनरूपेणज्ञातेभवतिलक्षणेत्यभियुक्तोक्तेः अतएववाक्यार्थप्रदर्शनावसरेवि
क्लित्त्यनुकूलोव्यापारः ज्ञानानुकूलोव्यापारसामान्यार्थकव्यापारपदेनस्वोत्कीर्तितस्यसंगतिरिति कृञोऽकर्मकतापत्तेरितिमू
लमवतारयति किंचेति अवाच्यत्वे धात्वशक्यत्वे द्वितीयास्यादिति धात्वर्थोत्पत्तिरूपफलाश्रयत्वाद् घटस्येतिघटंभावय
तीत्यत्रेवघटोभवतीत्यत्रापिद्वितीयापत्तिः मन्मतेतुधातूपात्तव्यापाराश्रयत्वेनपरयाकर्तृसंज्ञयाकर्मसंज्ञायाबाधान्नतदापत्ति
रितिभावः ननुघटोभवतीत्यत्रकृत्याश्रयत्वरूपकर्तृत्वबाधेपिधात्वर्थफलान्वितार्थव्यापाराश्रयत्वरूपकर्तृत्वसत्त्वान्नै
नकर्मत्वस्यावश्यं बाधेननोक्तस्थलेद्वितीयाप्रसक्तिरन्यथाकर्तरिलकारोप्यनाकारतामापद्येतेत्याशंक्यनिराकुरुते नचेति सा

नैयाकरणप्रकारान्तमाह अनुगतेति चेतनाचेतनसाधारणेत्यर्थः त्वन्मते भवदीयमते दुर्वचत्वादिति वक्तुमशक्यत्वादित्यर्थः न देवाह कृत्याश्रयत्वस्येति तस्याचेतनेऽव्याप्तत्वादितिभावः कारकचक्रप्रयोक्तृत्वस्यचेति तद्घटकीभूतनिखिलकारकप्रवर्तकत्वरूपस्यचेत्यर्थः नैयायिकमतनिरस्यमीमांसकमत्याह धात्वर्थेति कारकमात्रेति मात्रपदं कृत्स्नार्थकं सर्वस्यापिकारकस्यधात्वर्थानुकूलव्यापाराश्रयत्वात्क्रियाजनकस्यैवकारकत्वादितिभावः नन्वचेतनेकृत्याश्रयत्वरूपकर्तृत्वस्यबाधेपीतरव्यापारानधीनत्वप्रकारकविवक्षा ,विषयव्यापाराश्रयत्वरूपकारकचक्रप्रयोक्तृत्वरूपभवतस्वातंत्र्यसंज्ञानियामकम् व्यापारश्चक्वचित्कृति

अनुगतकर्तृत्वस्यत्वन्मतेदुर्वचत्वेन घटस्याकर्तृत्वात् कृत्याश्रयत्वस्यकारकचक्रप्रयोक्तृत्वस्यवाघटादाव
भावात् धात्वर्थानुकूलव्यापाराश्रयत्वस्यचकारकमात्रातिव्यापकत्वात् अपिचभावनायाअवाच्यत्वेधा
तूनांसकर्मकत्वाकर्मकत्वविभागउच्छिन्नः स्यात्॥

क्वचित्प्रयोगादिरेव तादृशव्यापाराश्रयएवस्वतन्त्रः कर्तेतिसूत्रेस्वतन्त्रपदार्थः तत्सूत्रप्रणयनसामर्थ्यात् तदुक्तं कारकइतिसूत्रेभाष्ये प्रधानेनसमवायेस्थालीपरतन्त्राव्यवाये स्वतन्त्रा किंपुनः प्रधानं कर्ताकथंज्ञायते कर्ताप्रधानमिति यत्सर्वेषुकारकेषुसन्निहितेषुकर्ताप्रवर्तयिताभवतीति स्थालीकाष्ठे पचतीत्यादौस्थाल्येवतन्त्रेण विवक्षितेतितद्भाव वक्ष्यतेचाधिकमुपरिष्टात् मीमांसकमतेप्रसक्तदूषणोद्धारपिवक्ष्यमाणेव एवंचघटगततादृशव्यापारस्यैवस्वातन्त्र्यविवक्षयाकर्तृत्वस्यनिराबाधेननद्वितीयाप्र

२

स्वार्थफलेति शक्यतावच्छेदककोट्यप्रविष्टाश्रयकत्वेन फलस्य विशेषणात्तु जीवत्यादावतिप्रसंगः एवमविवक्षितकर्मकत्वाभाववत्त्वेनापि स्वार्थो विशेषणीयो नातो विवक्षितकर्मतयाभ्युपगतलकारप्रकृति भुधातोः सः वैयधिकरण्यं त्वग्रे विवेचयिष्यते असंभवीति नथा च व्यापारवाचकत्वं धातोरावश्यकमिति भावः अन्यतमत्वमिति पच्यादि धातूनष्टंगग्राहिकयोपादाय तावद्भिन्नभिन्नत्वमित्यर्थः तत्त्वमिति अनुगतं सकर्मकत्वमित्यर्थः दर्शनादिति यथा जयतिधातोरभिभवार्थेऽकर्मकत्वस्य न्यूनीकरणार्थे सकर्मत्वस्याभ्युपगमात्सकर्मकधातुलक्षणे तत्प्रवेशोऽकर्मके तस्मिन्नतिव्याप्तेरप्रवेशे च न्यूनीकरणेऽर्थे तत्रैवाव्याप्तिरित्यर्थः यद्यपि

स्वार्थफलव्यधिकरणव्यापारवाचकत्वं स्वार्थव्यापारव्यधिकरणफलवाचकत्वं वा भावनाया वाच्यत्वमन्तरेणासंभवि श्रन्यतमत्वं तत्त्वमिति चेन्न एकस्यैवार्थभेदेनाकर्मकत्वसकर्मकत्वदर्शनात् तदेतदभिसंधायाह कृञ इति अयं भावः व्यापारावाच्यत्वपक्षे फलमात्रमर्थ इति फलितम् तथा च करोतीत्यादौ यत्नप्रतीतेस्तन्मात्रं वाच्यमभ्युपेयम् ॥

तत्तदर्थविशिष्टानेवोक्तरीत्योपादाय सकर्मकत्वनिर्वचने दोषाभावस्तथापि बहुलमेतन्निदर्शनमिति स्मरणात्तत्र तत्राकृत्तकरणात्तु तावद्धातूनां युगपद्ग्रहणासंभवेन तात्पर्यमिति बोध्यम् तदेतदिति पूर्वोक्तदूषणगणमित्यर्थः नन्वुक्तोऽकर्मकतापत्तेरित्यस्य कृञोयत्नार्थकत्वनिरासप्रतिपादकस्य कथमुक्तार्थाभिसंधायकत्वमित्याशंक्याभिसंधानप्रकारं विशदयत्ययं भाव इति फलमात्रमिति मात्रपदेन व्यापारव्यवच्छेदः करोत्यादावित्यादिना सविषयार्थधातुसंग्रहः तन्मात्रमिति यत्नादिरूपविषयिमात्रमित्यर्थः ॥३॥
उक्तरीत्येति उक्तप्रायरीत्या सकर्मकधातुभिन्नधातुत्वमित्याकारिकयेत्यर्थः यथाश्रुते धातोर्व्यापारावाचकत्वे स्वार्थफलसमानाधिकर

ननु कृञोऽकर्मकतापत्तेरिति ग्रन्थो न मीमांसकमतनिराकरणपरः तस्य न समाकरोतीत्यादिना निराकरिष्यमाणत्वात् तैः कृञो यत्नार्थकत्वानभ्युपगमाच्च नापि नैयायिकमतनिरासपरः नैयायिकैः फलव्यापारयोरुभयोरपि धातुवाच्यत्वाभ्युपगमात् तदुक्तमाख्यातवाददीधितौ स्तां वा फलव्यापारौ पृथगेव धात्वर्थाविति धातोः फलावच्छिन्नव्यापारार्थकत्वे कर्माख्याते फलस्य द्विधा भानापत्त्या तयोर्विशकलितयोरेव शक्तिर्ज्यायसीति तद्भावः फलस्य धातुवाच्यत्वे परं केषांचिन्न्यायविदां विप्रतिपत्तिः कर्माख्यातेन द्वितीयया च तदभानसंभवात् किंचैतद्ग्रन्थस्य धातुमात्रस्य व्यापारार्थकत्वसाधकत्वे धातोरकर्मतापत्तेः फलमात्रार्थतानहीत्येव ब्रूयान्न तु कृञ इत्यपरितोषादन्या-

अथवा व्यापारो भावनेत्यत्र न व्यापारस्य वाच्यत्वं प्रसाध्य फलांशस्यापि तत्साधयन्नैयायिकाभ्युपगतं जानातिकृञादेः केवलज्ञानयत्नादिक्रियामात्रवाचकत्वं दूषयति कृञ इति अयं भावः॥ ॥फलांशस्यावाच्यत्वे व्यापार एव धात्वर्थः स्यात् तथा च स्वार्थफलव्यधिकरणव्यापारवाचकत्वादिरूपसकर्मकत्वोच्छेदापत्तिः॥

ऽर्थपरतया मूलमवतारयति अथ चेति प्रसाध्येति पूर्वार्द्धस्य विवरणपरतया व्याख्यानादिति भावः तदिति धातुवाच्यत्वमित्यर्थः जानातिकरोत्यादेरिति निर्दिष्टयत्नार्थकभिन्नसविषयार्थकधातुमात्रोपलक्षणम् क्रियामात्रेति मात्रपदेन फलव्यवच्छेदः सकर्मकाणां प्रायशः फलावच्छिन्नव्यापारबोधकत्वं विशकलितफलव्यापारोभयार्थकत्वं वा जानात्यादीनां तु ज्ञानादिव्यापारार्थकत्वमेव अकर्मकाणां सर्वेषां न फलार्थकत्वम् तस्य ततोऽननुभवात् किंतु व्यापारार्थकत्वमेवेति प्राचीननैयायिकाभ्युपगमात् वक्ष्यमाणरीत्या कृञः फलार्थकत्वे तु तुल्यन्यायात् सर्वेषामेव तत्सिद्धिरिति भावः ननु कृञः फलावाचकत्वे कथमकर्मकत्वमत आह अयं भाव इति॥

वाचकत्वादीत्यादिनास्वार्थव्यापारव्यधिकरणफलवाचकत्वस्य नैयायिकनये फलावच्छिन्नव्यापारार्थकत्वस्यापि सकर्मकत्वात्यजस्य च सं-
ग्रहः ज्ञानात्यादीनामेव फलार्थकत्वानभ्युपगमे ऽवच्छेदपदार्थोऽव्याप्तिः सर्वेषामेव तदनभ्युपगमे त्वसंभवः तथा च त्यज धातुः फलवा-
चक सकर्मकत्वात् पच्यादिवदित्यनुमाने विपक्षबाधकतर्कप्रदर्शकं त्यजोऽकर्मकेत्यादी तिबोध्यम् वस्तुतस्तु व्यापारो भावनासै-
वेति पूर्वार्द्धमेव विवरणप्रतिपादनेन धातोः फलव्यापारोभयार्थत्वसाधकम् तथा हि धातोर्व्यापारार्थकत्वेऽसिद्धे भावनादिपदैर्व्यो-
पारपदविवरणपरतैव तस्य वाच्या व्याख्यानं च तथैव सारकृता तथा च व्यापारार्थकत्वमेव विक्लित्त्यादिफलकपाकादिपदेनापि विवरण-
दुभयोरपि धात्वर्थत्वसिद्धिः त्यजज्ञानात्यादौ फलांशे विप्रतिपन्ननैयायिकं प्रत्युक्तैर्यौ परं भक्तनयात्यजोऽकर्मकत्वेत्याद्युक्तम् धातु
मात्रे व्यापारवाचकत्वम् वदतं मीमांसकं प्रतितु तदुपपादकतयैव तस्मात्करोतीत्यादि यद्यपि व्यापारांशे विप्रतिपन्नं प्रत्यपि
रुजद्यायुपष्टम्भकम् तथापि विवरणस्यैवाख्यातपरतया सकर्मकत्वस्य व्यापारार्थकत्वं विनाप्यन्यथासिद्ध्युद्भावितायां तद्व्य-
स्यावश्यकत्वादिति नव्यनैयायिकास्तु सकर्मकधातूनां फले तज्जनकत्वेन विवक्षितव्यापारेषु चोपलक्षणीभूतसाधनाकांक्षोत्था-
पकतावच्छेदकधर्मसमानाधिकरणधर्मत्वानुगतीकृततत्तद्भावच्छिन्नेषु शक्तिः सम्भवति फलजनकतया विवक्षितानां तेषां वि-
भिन्नधर्मवत्त्वम् यत्र त्वनेकधर्मावच्छिन्नस्यैव फलानुकूलत्वविवक्षाविषयस्तदवच्छिन्न एव धातोः स्थानहि सर्वत्र समुदाय एव शक्ति-
रितिराजाज्ञास्ति क्रियानामेयमित्यादिभाष्यं तु बहुकालसाध्योऽक धात्वर्थविषयमिति न तद्व्याकोपः अन्यथा सर्वस्यागतिकगत्या
पाध्ययणापत्तेः तेषामेव च व्यापारपदव्यपदेश्यत्वे ऽनुनिष्ठस्य तादृशधर्मसमानाधिकरणधर्मत्वेऽपि न तस्य पच्याद्यर्थतावच्छेदकत्वम् तद-
शेतस्योपलक्षणमनमीकारात् अत एवास्मुन्मानामकदाचिदपि तात्पर्येण यागपाकादिपदप्रयोगस्तथा प्रयुक्तादपि न स्यात्याका... निषेध

म

श्च एतेनतस्याअपिव्यापारतयाधातोरेवलाभान्नतिङस्तत्रशक्तिरितिनिराकृतम् ज्ञानात्यादीनांतु विषयत्वंफलंतन्निर्वाहकज्ञानं
हिव्यापारश्चशक्यं कृञस्तुसाध्यत्वंयत्नस्यार्थः तेनतद्धात्वर्थफलसंबंधित्वरूपंमुख्यकर्मत्वंघटादीनांनिराबाधम् एवंस्वार्थफ
लव्यधिकरणत्वरूपंसकर्मकत्वमपियत्नाद्यकर्मकाणांतुनतद्भावच्छिन्नयत्नादिरूपव्यापारएवसः भोजनंयतनेइत्यप्रयोगेण
तद्विषयत्वस्यधातुशक्यत्वानुपगमात् यत्तद्युक्तेकर्माकांक्षायाअभावाच्च अध्याद्युपसृष्टशीङादीनांतुफलेलक्षणैव शीङादि
तः सर्वत्रफलाबोधात् तदर्थेनादितान्यथ्येग्राहिकतयेवचाधिशीङ्स्थासामित्यादिसूत्रोपयोगः कर्त्तेत्यादौतुकृञोयत्नबोधक
त्वादेवनाचेतनेस्वरसतः कर्तृपदप्रयोगः एवंचकर्तृबोधनिर्वाहार्थंपचतीत्यादावाख्यातस्यशक्तिरावश्यकीनदर्थप्रयत्नस्याश्रयाश्रयि
भावेनप्रथमांतार्थेऽन्वयात्तद्बोधोपपत्तेः यत्रतुनतद्बोधसिद्धीरथोगच्छतीत्यादौतत्रव्यापारेआश्रयत्वादौवापथायथंलक्षणास्व
तंत्रः कर्त्तेतिसूत्रसामर्थ्येनधात्वर्थव्यापाराश्रयोऽप्रतियोगिनामपिकर्तृत्वस्यपरिभाषणात्नकर्तृबोधानुपपत्तिर्यत्रप्रथमांतसम
भिव्याहारः यत्रतुनसमभिव्याहारस्तत्रकृत्यादिविशेष्यकएवबोधः अनभिहितइत्यस्याप्यबोधितइत्येवार्थः अबोधनंत्वाश्र
यातिरिक्तार्थेविशेषणतयाकृत्यादिबोधनमेवेति नाभिधानानभिधानव्यवस्थानुपपत्तिश्चेत्रः पचतीत्यादौकर्तृबोधस्यकृतिश्र
यैवनिर्वाहेनत्राख्यातशक्तिकल्पनानौचित्याच्चविक्लित्यादौव्यापारव्यपदेशाभावेनविक्लित्यादीनामुक्तधर्मत्वस्योपलक्षण
त्वानुपगमात् पृथक्शक्तिरदुष्टैव फलत्वंतुपूर्वंनिरूपितमेवः एवंसतिकश्चिद्दूषणंप्रसक्तमवगणयिष्यतेइत्याहुः एवंसकर्म
कत्वादिनिर्वचनानुपपत्त्याधातोरुभयार्थकत्वमावश्यकमितिपर्यवसितम् व्यापारमात्रशक्तिवादिनस्तुद्वितीयाद्यर्थकत्वंसकर्मक
त्वम् पच्यादिसमभिव्याहारे द्वितीयायाविक्लित्याद्यर्थकत्वात् ज्ञानात्यादिसमभिव्याहारेचविषयत्वाद्यर्थकत्वात्तदन्वयित्वंत

ज्ञानात्यादियोगे घटादीनां गौणकर्मत्वमितिवदतां मतमाशंक्य निराचष्टे नचेति भाक्त इति भज्यते आश्रीयते सेव्यते वा शक्यार्थोऽनये
ति भक्तिर्लक्षणा तया शक्यार्थस्य तिरोधानात्स्वज्ञाने घटकतया शक्यार्थस्यापेक्षणाच्च ततश्चागतो भाक्त इत्यर्थः भाक्तत्वेपि लक्षणा
निबंधनत्वेपि कर्मणीति मुख्यसकर्मकत्वमादाय शास्त्रस्य चारितार्थ्ये गौणे तत्प्रवृत्तौ मानाभावादिति भावः तत्र लौकिकं दृष्टांतमाह न
हीत्यादि भाक्तराजपदव्यवहार्येण पुरोहितादिना नदीयकार्यप्रवर्त्तनान्महद्भूतश्चंद्रमा इत्यादावान्ववारणायाश्रित गौणमुख्यन्या
यस्य विशिष्यार्थोपस्थापक विशिष्टरूपोपादानपुरस्सर पदकार्यविषयकत्वस्यान्यत्र व्यवस्थापनाच्च नात्र तद्विषयतेत्यन्ये प
रे त्वेतच्च लौकिकर्मसंज्ञकार्थान्वय्यर्थकत्वमेव सकर्मकत्वम् सकर्मकपदात्कर्मणा सहेत्यर्थकाच्च दृष्टमर्यादया पूर्वोक्तार्थालाभ

नचाक्र आदौ सकर्मकत्वव्यवहारो भाक्त इति नैयायिकोक्तं युक्तम् व्यवहारस्य भाक्तत्वेपि कर्मणि लकारः संभवा
त् नहि तीरे गंगापदस्य भाक्तत्वेपि तेन स्नानादिकार्यं शक्यं कर्तुम् एवं च न हि यत्न इत्यत्र यत्नमात्रमित्यर्थः

॥

भावे लः कर्मणीत्यादौ सकर्मकपदाद्बोधानापत्तेः तदनन्वय्यर्थकत्वमकर्मकत्वम् अतएवाध्यासिता भूमय इत्यादौ कर्मणि क्तोपपत्ति
अन्वयस्य पृथगुपस्थित संसर्गरूपतया न जीवत्यादिष्वदोष इत्याहुः अयमेव पक्षः फलावच्छिन्नव्यापारबोधकत्वं सकर्मकत्वमिति
वदद्भिराश्रितः फलस्य कर्मतायाः सर्वैरेवोपगमात् फलान्वय्यर्थकत्वस्य सकर्मकेषु सत्त्वात् यदि चैकोपस्थिति विषयत्वान्नोक्तः प्रका
रः संभवतीति विभाव्यते तदा पृथक्शक्तिवादिमते निर्दुष्टत्वमेव अवच्छिन्नपदस्य संबंधपरत्वेन कर्मीभूतफलसंबंधिव्यापारार्थः
कत्वस्य मुख्यत्वात् अकर्मकाणां फलार्थत्वानंगीकारे त्वतिव्याप्त्यभावोऽस्मत्काराणिस्त्वेवमध्यासिता भूमय इत्यादौ यथोक्तोप

नत्रुकर्मवत्स्याद्यगाद्यपीति मूलस्य कर्मवत्यगाद्यपि भवेदित्यर्थो लभ्यते सचबाधितोः विवक्षितश्चेत्यत आह कर्मेत्स्यादित्यनेनेतिसू
त्रं लक्ष्यत इति सूत्रविहितं लक्ष्यते इत्यर्थः यथाश्रुते कर्मपदान्तर्घटितत्वेन लक्षणया सूत्रोपस्थितस्यापि तस्य यगादिकमित्यनेना

अतएवाह किंतूत्पादनमेवातः कर्मवत्स्याद्यगाद्यपि कर्मकर्तर्यन्यथा तु न भवेत्तदृशेरिव ५ उत्पा
दनमुत्पत्तिरूपफलसहितं यत्नादिरूपमर्थ इत्यर्थः फलस्य वाच्यत्वे युक्त्यंतरमाह अत इत्यादि यतः
रूपमोयत्नमात्रमर्थो नेष्यते अतः कर्मवत्स्यादिति पदेन कर्मवत्कर्मणातुल्यक्रिय इति सूत्रं लक्ष्यते
अयमर्थः यत एतस्योत्पादनार्थकता अतः पच्यते ओदनः स्वयमेवेति वक्रियते घटः स्वयमेवेति य
गादयोप्युपपद्यंते अन्यथा यत्नस्य कर्मनिष्ठत्वाभावात्तन्न स्यात् दृशिवत् यथा दृश्यते घटः स्वयमे
वेति न दर्शनस्य घटावृत्तित्वात्तथा यत्नस्यापीति तथा प्रयोगानापत्तेरिति॥ ५ ॥ ५ ॥ ॥

नत्वयापत्तेः एतद्बोधनायैव स्यादिति लक्ष्यकोटावुपात्तमिति घटावृत्तित्वादिति घटमात्रवृत्तित्वाभावेन कर्मस्थक्रियकत्वाभावादि सिद्धपक्षे॥

एवमिति कर्मवद्भावानुरोधेन करणार्थकत्वेनेत्यन्ति सहितयत्नार्थकत्वाभ्युपगमे इत्यर्थः जानात्यादेरपीत्यादिपदाद्गम्यादिपरिग्रहः आवरणभङ्गादीत्यादिपदेन तु संयोगादेः स आवश्यकमित्यनेन तत्र ज्ञानस्यैव फलत्वाङ्गीकारे तदनाश्रयत्वाद्घटादेः कर्मत्वानुपपत्तिरपि सूच्यते आवरणभङ्गस्याप्यतीतादेर्यथा फलत्वं तथा सार एव सुबर्थनिर्णये वक्ष्यते सकर्मकत्वानापत्तेरिति स्वार्थफलव्यधिकरणेत्याद्युक्तरूपस्य तत्रासम्भवादिति भावः वस्तुतस्तु जानातेर्ज्ञानरूपफलार्थकत्वमेव युक्तम् न च कर्तृस्थभावकानां कर्मणि क्रियायाः प्रवृत्तिर्

नन्वेवं कृञादेरिव ज्ञानात्यादेरपि विषयावच्छिन्नावरणभङ्गादिफलवाचित्वमावश्यकम् अन्यथा सकर्मकत्वानापत्तेः तथा च ज्ञायते घटः स्वयमेवेति किं न स्यात् एवं प्राप्नोति गम्यते स्वयमेवेत्याद्यपीत्याशंकां मनसि कृत्वाह निर्वर्त्ये च विकार्ये च कर्मवद्भावो दृश्यते न तु प्राप्ये कर्मणीति सिद्धान्तोऽव्यवस्थितः ६६ ईप्सितं कर्म त्रिविधं निर्वर्त्यं विकार्यं प्राप्यं च तत्राद्ययो कर्मवद्भावो नान्त्ये प्राप्यत्वं च क्रियाकृतविशेषानुपलभ्यमानत्वमिति सुबर्थनिर्णये वक्ष्यते न ह्ययं घटः केनचिद्दृष्टो प्राप्तो वा केनचिद्वृत इति शक्यं कर्मदर्शनेनावगन्तुम् ॥ ६६ स्नीति भाष्येण कर्तृस्थभावकानां क्रियाफलस्य कर्ममात्रे वृत्तिर्वा

स्तीत्यर्थकेन कर्तृकर्मोभयसाधारणफलार्थकत्वं कर्तृस्थक्रियकत्ववत् कर्ममात्रवृत्तिफलार्थकत्वरूपकर्मस्थक्रियकत्वस्याभ्युपगमेन तत्रावरणभङ्गस्य फलत्वेन तत्पक्षे कर्मवद्भावस्य दुर्निवार्यतापत्तेः आस्तमप्यायमेव पक्षो जानातीत्यादौ ज्ञाने का घतमूले व्यापार इति शाब्दबोधप्रकारं दर्शयता यत्तदपि प्रकृते आशंकासमाधाने तु भाष्य दृष्ट्यायुक्तप्रथमकल्पाभिप्रायेणेति सारे एव स्फुटम्

नचोक्तकल्पेज्ञानस्यसमवायेनघटादावसत्त्वात्तेषांजानातिकर्मत्वानुपपत्तिः ज्ञानस्यतदनुकूलव्यापारस्याश्रयतादेश्चसामानाधिकर।
ण्यादकर्मकत्वापत्तिः कर्तृस्यभावकत्वानुपपत्तिश्चेतिवाच्यम् शाब्देज्ञानंघटेज्ञानमितिप्रतीत्याविषयतयातत्रज्ञानाश्रयताभ्युपग
मेनाद्यदोषस्यफलतावच्छेदकसंबंधघटितसामानाधिकरण्यघटिताकर्मकत्वस्यतत्राभावेनद्वितीयस्यविषयतासमवायाभ्यांक
र्मकर्त्रुभयवृत्तित्वेनांत्यदोषस्यवाभावादधिकमग्रेवक्ष्यते प्रकृतमनुसरामः किन्तस्यादिति क्रियतेघटः स्वयमेवेत्यत्रघटस्योत्पत्ति
रूपफलाश्रयत्ववदावरणभंगरूपफलाश्रयत्वस्यापिसत्वादितिभावः ननुनिर्वर्त्यविकार्यकर्मणोः कर्मवद्भावोनप्राप्यकर्मणीत्यत्र।
किंमानमतआह मूलेसिद्धांतोत्रेति अत्रकर्मवत्कर्मणातुल्यक्रियइतिसूत्रभाष्ये तत्रद्विधातोरेकाचइतिसूत्रादनुवर्त्तमानधातुग्र
हणेनधातुवाच्यक्रिययाइत्यर्थलाभेनसाध्वसिद्धिनत्तिस्थालीपचतीत्यादौकरणाधिकरणाभ्यांतुल्यक्रियेकर्त्तरिवस्तुनः सतोपि
व्यापारस्यधातुवाच्यत्वाभावादेवा नतिप्रसंगेकर्मग्रहणमतिरिच्यमानंकर्मस्थक्रियांलक्षयतीतिसिद्धांतोव्यवस्थितइत्यर्थः कर्म
स्थक्रियकत्वंचप्राप्यभिन्नकर्मण्येवसंभवतीतिदर्शयितुमादौवक्ष्यमाणमपिविभागंसुखबोधायाह ईप्सितंकर्मेति यद्यपिद्व्या
द्यनीप्सितस्याप्येषेवांतर्भावात्कर्मत्रिविधमित्येववक्तुंयुक्तम् तथापिहरिणातयोरेभ्यस्त्रिधामतंतच्चेप्सितंतमम्मित्यादिनापार्थक्ये
नविभजनात्तदनुसृत्यात्रापितथैवोक्तमितिध्येयम् प्राप्यत्वंचेति आद्ययोर्लक्षणेतुसुबर्थनिर्णयेवक्ष्येते वक्ष्यतइति क्रियाकृ
तविशेषाणामितिकारिकयेत्यर्थः कर्मगतविशेषाधायकक्रियार्थकत्वम् कर्मस्थक्रियकत्वंकर्मवद्भावप्रयोजकमितिदर्शयितुं
तदन्वयव्यतिरेकौदर्शयतिनहीत्यादि ॥७॥सोमंसुनोतीति विकार्यइति नन्वाद्ययोः कर्मस्थक्रियकत्वेनकर्मवद्भावविषयत्वेपिनत्रक

दर्शनांतरीयांयुक्तिमुपन्यस्यति धातूनामिति त्यजिगम्योरित्युपलक्षणंतादृशधातुमात्रस्य पर्यायतापत्तिरिति तच्छक्यतावच्छेदकावच्छिन्नश क्तत्वस्यैवपर्यायतापदार्थत्वादितिभावः ननुत्यजिगम्योः क्रमेणविभागसंयोगोपलक्षितव्यापारार्थकत्वमेवंचपर्य्यायलक्षणे तदुपलक्षणे नुपलक्षितत्व स्यापिविशेषणात्नोक्तापत्तिरतआह उपलक्षणत्वेपीति उपलक्षणत्वंचतत्पदजन्यबोधविषयत्वेनशक्यविषयत्वेसति शक्तिः विषयत्वम् जनकत्वादिति तथाचसंयोगविभागयोः स्वार्थव्यापारजन्यत्वाविशेषात्तन्मध्ये व्यापारेसंयोगएवोपलक्षणंनोविभागइत्यत्र विनि गमकाभावादुभयस्यैवोपलक्षणत्वेउक्तापत्तिर्दुर्वारेति फलेपिशक्तिरावश्यकीतिभावः अत्रग्रामंगच्छतीत्यादौहितीयार्थसंयोगादिरूपफ

धातूनांफलावाचकत्वेत्यजिगम्योः पर्यायतापत्तिः क्रियावाचकत्वाविशेषात् फलस्योपलक्षणत्वेप्येकक्रियाया एव पूर्व देशविभागोत्तरदेशसंयोगजनकत्वादुक्तदोषतादवस्थ्यमित्यपि वदंति तस्मादावश्यकं सकर्मकाणां फलवाचकत्वम् अकर्मकाणांतुतन्निर्विवादमेव भूसत्तायामित्याद्यनुशासनाच्च अतएवद्व्यर्थः पचिरिति भाष्यंसंगच्छते इति दिक् ॥

लान्वयितस्यैवविनिगमकत्वाद्गमनक्रियायांसंयोगस्यैवोपलक्षणत्वमित्यस्यसुवचतयाभ्यन्तरलक्षणयोपपत्तेश्चनोक्तरीतिः साध्वीत्यस्वरसो ऽपिवदंतीत्यनेनसूचितः उपसंहरति तस्मादिति उक्तयुक्तिसंहतेरित्यर्थः निर्विवादमेवेति स्वार्थफलसमानाधिकरणव्यापारवाचकत्वरूपा कर्मकत्वस्यधातोः फलवाचकत्वंविनानुपपन्नत्वादितिभावः ननुसकर्मकत्वंपूर्वोक्तमेव तद्भिन्नधातुत्वंचाकर्मकत्वमितिनोक्तानुपप त्तिरतआह भूसत्तायामिति गणेषु फलस्यैवनिर्देशादितिभावः अतएवेति धातुमात्रस्यफलवाचकत्वादेवेत्यर्थः द्व्यर्थइति द्व्यर्थपदं फलव्यापारोभयार्थकमित्याशयः ननुद्व्यर्थः पचिरितिभाष्यम् पचेरूपादानात्सकर्मकाणांफलार्थकत्वेसाधकमस्तु नत्वकर्मकाणामतआ ह दिगिति तथासतिसत्ताद्यर्थनिर्देशवैयर्थ्यापत्तेः धातुसामान्यशक्त्यापच्यादेरिवभवत्यादेरपिव्यापारबोधसंभवादितिदिगर्थोऽवसेयः

नतुव्यापारो भावनास्तिवेन्नुक्त विवरणेन न व्यापारस्य धात्वर्थता निर्णय' पचति पाकं करोतीति विवरणेन व्याख्यातार्थतायाश्च पि वक्तुं शक्य
त्वादिति मीमांसकाशंकासमाधानपरतया मूलमवतारयति नन्वित्यादिना वाच्यत्वमिति तिङ्न जन्यबोधविषयत्वमित्यर्थः तथाच
पाकानुकूलभावनेत्यादि विवरणेनापि पचतीत्यस्य पाकानुकूलभावनाबोधकत्वमस्तीत्यर्थः यथाश्रुते विवरणेन धातो भावनावाचक
त्वनिर्णये किन्त्वाख्यातवाच्यैव साङ्ग्सु तरयथासगते' प्रकृतिप्रत्ययाविति न्यायस्य सख्यादौ व्यभिचारमाशंक्याह तदागमे हीति
इदं च प्रधानं प्रत्ययार्थ इति न्यायाकार इत्यभिप्रेत्य तन्मूलसूत्रमोञ्चनेतुयः प्रत्ययार्थः सप्रधानमिति न्यायाकारो लभ्यते तेन
याहि पशुना यजेते निश्रूयते तत्रैकवचनोपात्तमेकत्वं यागे विशेषणस्तत्प्रकृत्यर्थे इति संशये पशुपदार्थस्य यागं प्रति गुणत्वात्तं

ननु त्वेवं सिध्यतु फलव्यापारयोर्वाच्यत्वम् किन्त्वाख्यातवाच्यैव सा भावना न धातो. प्रधान्येन प्रतीयमानस्य व्यापारस्य धा
त्वर्थतायाः प्रकृतिप्रत्ययौ प्रत्ययार्थस्य प्राधान्यमिति न्यायविरुद्धत्वात्तदागमे हि दृश्यत इति न्यायविरुद्धत्वाच्च।

भावितयावत्पशुकरणेन प्राधानात्तत्प्रधानं गापत्त्यायावद्गुणं प्रधानात्तेरयोगादेकत्वविशिष्टपशोर्विधाने त्वेकत्वस्य पशुविशे
षणतया यागांगत्वाभावात्सद्विवक्षितमेव स्यादित्यर्थकेन तत्रैकत्वमप्यत्रागमर्थस्य गुणभूतत्वादिति सूत्रेण पूर्वपक्षिते शब्दवत्तूप
लभ्यते तदागमे हि दृश्यते तस्य ज्ञानं यथान्येषामिति सिद्धान्तसूत्रम् शब्दवत् शब्दवाच्यम् यथा भवति तथोपलभ्यते एकत्वं हि यत
स्तदागमे एकवचनसमवधाने दृश्यते।तत्तस्य प्राधान्येन प्रतीतिर्यथान्येषामरुणादीनामित्यर्थः एवं च समानप्रत्ययोपात्तत्वप्रत्यास
त्याविभक्त्यर्थकारणान्वितस्यारुणा धिकरणन्यायेन प्रथमं क्रियायामन्वयः पश्चात्प्रकृत्यर्थेन तथा च पश्वेकत्वोभयकारणकोयाग इति

वाधेनेकत्वस्य यागांगत्वावगमान्नानेकपशुभिर्योगइतिनद्भावः प्राधान्यंच प्रकृत्यर्थविशेषणत्वमेव प्रत्ययार्थमादायन्यायावतारा
द्यः प्रत्ययार्थइतिभागस्यन्यायघटकत्वंप्रकृतेआख्यातासमवधाने भावनाबोधात्तस्याप्राधान्येन भानमितितत्संगतिरिनिबोध्य
म्॥९॥ ॥ननुसकर्मकत्वानुगतकर्तृत्वयोर्दुर्वचत्वमेवेतन्मतेदूषणमतआह एवंचेति भावनाया आख्यातवाच्यत्वेचेत्यर्थः तथा
चारब्धेपाके फलानुत्पत्तिदशायांपाकोजातोनवेति प्रश्नेभविष्यतीत्युत्तरानुरोधात्फलमात्रंधातुवाच्यमितिमीमांसकाशयः हेतोः
पूर्वमनुपादानादाह अभिप्रायस्येति त्यदादीनांबुद्धिस्थपरामर्शकत्वादितिभावः प्रयोगापत्तेरिति भावस्तूक्तगमनपदार्थसं

एवंचस्वयुक्ताख्यातार्थव्यापारव्यधिकरणफलवाचकत्वंसकर्मत्वम् आख्यातार्थव्यापाराश्रयत्वंचकर्तृत्वंवाच्य
म् इत्यादिवदंतंमीमांसकंमन्यंप्रत्याह तस्मात्करोतिर्धातोः स्याद्याख्यानंनत्वसौतिङाम् पक्कवान्कृतवान्पा
कं किंकृतंपक्कमित्यपि ७ तस्मादभिप्रायस्थहेतोः सचेत्स्यं फलमात्रस्यधात्वर्थत्वेग्रामोगमनवानिति प्रयोगाप
त्तिः संयोगाश्रयत्वात् फलानुत्पादनदशायांव्यापारसत्त्वेपाकोभवतीत्यनापत्तेः व्यापारविगमे फलसत्त्वेपाकोवि
ऽद्यतेइत्यापत्तेश्च॥

योगात्मकफलस्यग्रामेसत्त्वाद्ग्रामः संयोगवानितिवद्ग्रामोगमनवानितिप्रयोगस्यप्रामाण्यापत्तेरित्यर्थः
भवतीत्यनापत्तेरिति पाकपदार्थस्यविक्लित्तेरवर्तमानत्वादित्यर्थः फलोत्पाददशायामर्थाबाधात्तादृशप्रयोगस्येष्टत्वादाह फ
लानुत्पादेति फलानुत्पादेतादृशप्रयोगस्यसर्वाननुमतत्वादुक्तंव्यापारसत्त्वइति एवमग्रेप्यूह्यम् विद्यतेइत्यापत्तेश्चेति व्यापारांश
परित्यागेनफलमात्रस्यधात्वर्थत्वाभिप्रायेणतुभविष्यतीत्युत्तरंपाकमुत्पादयतीतिविवरणंचेतिभावः ॥ ६ ॥ ९ ॥

अनुकूलेति अनुकूलत्वोक्त्या तेनान्विताभिधानसाद्दिनामतमेतदिति सूचयितुम् नानुपपत्तिरिति भावविहितल्युड्घञाद्यर्थव्यापार-
स्य ग्रामादौ वा धात्वपूर्वोक्तप्रयोगापत्तिरित्यर्थः विक्लित्त्यनुकूलघञाद्यर्थव्यापारस्य कर्तृत्वेन याभावनाद्यन्वयात्त्व पूर्वोक्तप्रयोगानुपप-
त्त्यापत्तिरिति भावः ननु कर्तरि कृदिति विहितकृत पक्तापाचक इत्यादौ कर्त्रर्थत्वदर्शनात् हि हितघञादीनां व्यापारार्थकत्वादौ लभ्या-
नदर्थत्वबोधनाय भाव इत्यनुशासनं चारितार्थ्यमित्याशंकामपाकरिष्यन् तदनुगुणं दृष्टान्तमाह कर्माख्यातवदिति तथा च लः कर्म-
णीति विहितकर्माख्यातस्य यत्नमते व्यापारार्थकत्ववत् कर्तरि कृदिति विहितघञादीनामपि व्यापारार्थकत्वसंभवादित्यर्थः विरोधापत्ते

र्गुभावप्रत्ययस्य घञादेरनुकूलव्यापारवाचकत्वान्नानुपपत्तिरिति तन्न कर्माख्यातवत् कर्तरि कृदित्यनेनैव तद्वि-
धानलाभे भावे विधायकानुशासनवैयर्थ्यापत्तेस्तद्विरोधापत्तेश्च अथ व्यापारोऽपि धात्वर्थ इत्यभ्युपेयमिति चेत्तर्हि
धातुनैव सकलव्यापारलाभसंभवेनाख्यातस्य पृथक्शक्तिकल्पने गौरवमिति पचतीत्यस्य पाकं करोतीति विवर-
णात्माकरोतिर्धातोरेवाख्यानं विवरणम् अतस्तदपि नाख्यातार्थत्वसाधकमिति भावः॥ ॥चेति चेदिति यतो वैयर्थ्यम
तस्तद्विरोधापत्तिरित्यर्थः उक्तिवैचित्र्यमेतत् यद्भावविहितप्रत्ययस्य नाधात्वर्थानुवादकत्वात्प्रयोगसाधुतामात्रार्थकत्वमिति त्वदी-
यसिद्धान्तविरोधापत्तेरित्यर्थः व्याख्यानमित्यस्य विवरणम् विवरणमिति अतस्तदपीति पचतीत्यस्य पाकं करोतीति विवरणमपीत्य-
र्थः अपिना वक्ष्यमाणप्रकृतिप्रत्ययावितिन्यायसमुच्चयः धातोः पृथग्विवरणं तु तथाख्यातार्थसंख्याकालव्यापाराणां मध्ये व्या-
पारस्य संख्यादेरिव द्युतरतिङा विवरणवदाख्यातार्थव्यापारस्याप्युपपन्नमिति न तदाख्यातार्थत्वसाधकम् अत एव कश्यपशायते

तेन विवरणमपिधातोरेवेतिस्पष्ट
क्रियावचनाः पचादयो यदेवं करोतिना सामानाधिकरण्यं किं करोति पचतीति भूवादिसूत्रभाष्य उक्तं तेन विवरणमपि धातोरेवेति स्पष्ट अनन्वय
मेव बोध्यते इति भावः ॥ ॥ पक्ववानिति मूलमपि करोतेराख्यातविवरणत्वाभावसाधकपरतया व्याचष्टे पक्ववानित्यादावपीति अनन्वय
मेव विशदयति अयंभाव इत्यादि सहार्थमिति संबद्धार्थमित्यर्थः बूतो बोधयतः तयोः प्रकृतिप्रत्ययार्थयोर्मध्ये प्रत्ययार्थः प्रत्ययद
मेव विशदयति अयंभाव इत्यादि सहार्थमिति संबद्धार्थमित्यर्थः नादृशव्युत्पत्तिसिद्धकार्यकारणभावमभिनयेनतद
त्तिग्रह विशेष्यः प्रधानमिति प्रकृत्यर्थप्रकारतानिरूपितविशेष्यताशालीत्यर्थः

मीमांसकोक्तबाधकमुद्धरन् तन्मतं दूषयति नन्वित्यादिना नासौ तिङां व्याख्यानम् पक्ववानित्यादावनन्वयापत्तेरित्यर्थः
अयंभावः प्रकृतिप्रत्ययौ सहार्थं ब्रूतस्तयोः प्रत्ययार्थः प्रधानमित्यत्र हि विशेष्यतया प्रकृत्यर्थप्रकारकबोधे तदुत्तर
प्रत्ययजन्योपस्थितिर्हेतुरिति कार्यकारणभावः फलितः तथा च पक्ववानित्यत्र पाकः कर्मकारकं क्तवतुप्रत्ययार्थः क
र्तृकारकं तयोश्चाहृणाधिकरणरीत्या वक्ष्यमाणास्मद्रीत्या वान्वयासंभव इति प्रकृतिप्रत्ययार्थयोरन्वयनियमस्यैवा
भावेन क प्राधान्यबोधक उक्तः कार्यकारणभावः ॥ ॥ शेयति विशेष्यतयेति प्रत्ययस्य प्रकृत्यर्थप्रकारतानिरूपितविशेष्यतासं
बंधेन शाब्दबोधं प्रतीत्यर्थः हेतुरित्यस्य विशेष्यतासंबंधेनेति शेषः अरुणाधिकरणोक्तरीत्येति अरुणयेति पदोपात्तारुण्यस्य प्रथमं कारणत्वेने
तर क्रियायामन्वयो नामार्थान्वयस्तु पार्ष्ठिक इति तत्रोक्तम् वक्ष्यमाणेति कारकत्वस्य क्रियाजनकत्वरूपत्वेन क्रियाजनकमिति ज्ञाते का
सा क्रियेत्याकांक्षोदयेन क्रियाया अपि साध्यरूपायाः साधकाकांक्षया च परस्परान्वयौचित्यमित्याशयेन क्रियात्वमेव हि कारकान्वयिता
वच्छेदकमिति सुबर्थनिर्णये वक्ष्यमाणरीत्येत्यर्थः ॥

कृतपूर्वीत्यत्र भावविहितक्तेन सिद्धावस्थापन्नो भाव उच्यते तद्विशेषणं च प्रकृत्यर्थक्रियेत्याशयेन मूलमवतारयति एवमित्यादिना क
र्त्रादावित्यादिना भावपरिग्रहः इत्यादीनामित्यादिना क्तानुमनादीनां संबध्यत इति कारकप्रकारकबोधं प्रति विशेष्यतया धातुजन्य भाव
नोपस्थिते र्हेतुतायाः पूर्वमुक्तत्वादिति भावः कृतपूर्वी कटमिति नन्वत्र कर्मणि क्ते कट शब्दादनभिहिताधिकारीय द्वितीयानुपपत्तिः भा
वे क्तस्तु सकर्मकाद्गगनकुसुमायमान एव तयोरेवेति नियमात् अत एव नपुंसके भावे पि न सः तथा च कथमुक्तदार्ष्ट्यं निकवाक्योप
पत्तिरिति चेदत्राहुः कर्मणो विशेषरूपेणाविवक्षयाऽकर्मकत्वाद्भावे प्रत्ययेन तदंतस्य पूर्व शब्देन समासे सपूर्वाच्चेतीनिः पश्चात्तु क

एवं कर्त्रादौ विहितानामित्यादीनां क्रियये वान्वय इत्याह अविग्रहा गतादिस्था यथा ग्रामादिकर्मभिः क्रिया संबध्यते
न इत कृतपूर्व्यादिषु स्थिता न विविच्य ग्रहो ग्रहणं यस्याः सा अविग्रहा गुणीभूतेति यावत् यथा च ग्रामं गत इत्यत्र क्तप्र
त्ययार्थगुणीभूतापि क्रिया ग्रामादिकर्मभिः संबध्यते तथा कृतपूर्वी कटमित्यत्रापि गुणभूता इ(त्या)दिभिरित्यर्थः ॥ ६० ॥

र्मणो विशेषरूपस्य विवक्षया तत्र द्वितीयेति इदं च कर्तृकर्मणोः कृतीति भाष्यस्पष्टं ईदृशविवक्षाविवक्षे च तद्भाष्यप्रामाण्यात् कृतपूर्वी
त्यादिविषये एव नान्यविषय इति बोध्यम् इत्यादिभिरिति तदर्थकर्त्रादिभिरित्यर्थः वस्तुतस्तु दार्ष्टांतिके स्ववाचकप्रकृतिकप्रत्य
यार्थेऽन्यस्मिन्वा गुणीभूतकटादिकर्मभावादिभिरिति व्याख्येयम् तान् कृतपूर्वीति प्रयोगघटकक्तस्य धात्वर्थानुवादकत्वे पि क्त
नीः पूर्वकालिकक्रियाकर्त्तेति ततो बोधेन तादृशक्रियाया इन्यर्थकर्त्तरि गुणत्वात् नाप्ययं भावाधिकारीयस्तान्त्र्येणाप्रयोगात् अत
एव भोक्तुं गतमेतेनेत्यादिप्रयोगोपपत्तिः भावानधिकारीयभावविहितप्रत्ययस्य धात्वर्थानुवादकत्वात्प्रकृत्यर्थक्रियाया अगुणत्वा
त् एवमव्ययकृतो भाव इत्युक्ते पाक इत्यादिप्रयोगस्थघञर्थानुमनाद्यर्थे वै लक्षणानुभवात्तुमुनादीनामपि साध्यमात्रस्वभाव भावा

वृत्तिमात्रेदृति मात्रपदं कृत्स्नार्थकम् वक्ष्यमाणत्वादिति समासे खलु भिन्नैवेत्यनेनेत्यादिः तत्र समासपदस्य वृत्तिसामान्यपरत्वेन
व्याख्यास्यमानत्वादिति भावः कथमिति गतइत्यादौ कृद्वृत्तिः सत्त्वे नगमनकर्तृरूपगतपदार्थैकदेशभावनायां कर्मान्वयासंभवा
दृष्टानासिद्धिरिति भाव नित्यसापेक्षस्थले हि यक्षद्वयी चैत्रस्य गुरुकुलमित्यत्र विशेषणस्य चैत्रादेर्गुर्वादिद्वारकसंबंधेन कुलादि
रूपविशेष्य एवान्वय इति नवैक पक्ष. सर्वो कोहरिणा समुदायेन सबंधो येषा गुरुकुलादिना संसृष्ट्याव यवालेनुयुज्यते तद्वृत्ता
सहेति उक्तस्थले समुदायनिरूपितसंबंध एव देवदत्तस्येति षष्ठी तत्रैव तदन्वयः उक्तं च संबंधिशब्दः सापेक्षो नित्यसर्वः सम
नच वृत्तिमात्रे समुदाय शक्तेर्वक्ष्यमाणत्वात्तदन्तर्गतभावनापदार्थैकदेश इति कथं तत्रान्वय इति वाच्यम्
नित्यसापेक्षेष्वेकदेशेपि देवदत्तस्य गुरुकुल चैत्रस्य नप्त्र्यादाविवान्वयाभ्युपगमात्॥ २ ॥ २ ॥
स्यते वाक्यवत्साव्यपेक्षा हि वृत्तावपि न हीयते इति नित्यमपि सापेक्षपदार्थान्वयी हि यतो देवदत्तस्य गुरोः कुलमित्यादिव्यस्तेप
व्यपेक्षा सा समासेपि न हीयत इति कारिकार्थः पदार्थः पदार्थेनान्वेतीति व्युत्पत्तिस्तु नित्यसापेक्षातिरिक्तविषये ति तद्भावः।
तत्रोतिम पक्षमभिप्रे त्य समाधत्ते नित्यसापेक्षेष्विति गतपाचगुरुत्वादेरन्यनिरूप्यत्वेन तदुपस्थितौ नियमेन जायमानाया
निरूपकाकाङ्क्षाया निवृत्तये देवदत्ताद्यन्वय एवं प्रकृते पि किं साधनकं गमनरूपसाध्यमिति साधनाकाङ्क्षानिवृत्तये ग्रामादिक
र्मान्वयस्यावश्यकत्वात् दृष्टान्तसंगतिरिति भावः आदिनाशरे शातितपभद्रत्यादे संग्रहः॥

अवतरणिकास्यादिपदयार्थं स्पष्टयति एवंभोक्तुमिति अत्राप्यादिपदयार्थं भुक्त्वापाकइति घञर्थभावगुणभूतायांपच्यर्थक्रिया यांतुमुनंतार्थक्रियान्वयइति बोध्यमित्यर्थः अत्रनव्यास्तु तुमुन्विधायके क्रियार्थायांक्रियायामित्युक्त्या प्रत्यासत्त्या क्रिययो रेकजातीयत्वलाभेन स्ववाचकप्रकृतिकप्रत्ययार्थप्रत्यगुणीभूतायाः साध्यमात्रस्वभावाया एव क्रियायामित्यनेन ग्रहणाद्भोक्तुं गतं भोक्तुंपाकइत्यसाध्वेव ध्वनितं चेदमुपपदमतिङिति सूत्रभाष्ये यत्र तु क्रियामात्रार्थकस्य ग्रहणं तत्र क्रियामात्रविशेष णादपीति गतपाकादियोगेपि सुच्क्त्वादीत्याहुः तेषामयमाशयः घञाद्यंतस्थले प्रकृतिप्रत्ययाभ्यां विशेष्यविशेषणभावात् पन्नसत्त्वासत्त्वस्वभावक्रियाद्वयमुपस्थाप्यते तत्र प्रत्ययार्थक्रियायाः प्राधान्यं एवंच धातूपस्थाप्यक्रियायाः साध्यमात्रस्वभा

एवं भोक्तुं पाकः भुक्त्वा पाक इत्यत्रापि द्रष्टव्यम्

वत्वेपि तस्या घञर्थं प्रतिगुणत्वान्न तत्र तुमुनादीति तत्रेदं चिंत्यम् भावानधिकारीयथान्वर्यानुवादकप्रत्ययांतयोगे तुमुनो दुर्वा रत्वात् किंच सुञ्विधायके युक्तविशेषणविशिष्टायास्तस्या ग्रहणमावश्यकं तत्तद्विशेषणीभूतक्रियायाः साध्यमात्रस्वभावत्वे न तज्जन्मगणने द्वौ पाकावित्यत्र सुजापत्तेर् अशक्यवारणत्वात् नचतत्रेष्टापत्तिः क्रियापदोपादानवैयर्थ्यादभ्यावृत्तिपदसामर्थ्ये नैव क्रियायालाभादिति वक्ष्यमाणत्वात् किंच साध्यत्वेन क्रियानत्रेति हरिपद्यव्याख्यावसरे एकस्यैव संबंधिभेदादाचार्यत्वमातुल त्वादिवदेकस्या एव क्रियायाः प्रकृतिप्रत्ययरूपवाचकसंबंधिभेदादुपस्थितिरितिस्वोक्तिविरोधः क्रियाद्वयबोधांगीकारे द्वित्वा

सिद्धान्त इति वैयाकरणसिद्धान्त इंद्रियाणां स्वविषयेष्वित्यादिना प्रतिपादिता बोधकतारूपा शक्तिराख्यातेप्यबाधितैव ततो भावनाबोधस्य
जायमानत्वादित्यर्थः साधुत्वपरेति तथा च हरिः साधुत्वज्ञानविषया सैषा व्याकरणस्मृतिरिति तत्र साधुशब्दे अवच्छेदकतया बोधज
नकतावच्छेदकतयेत्यर्थः अतिरिक्तशक्तिवादे साधुत्वं न शक्तिवादे साधुत्वं न शक्तत्वमसाधोरपि बोधात् किंतु बोधकत्वमिति वक्ष्य
माणसिद्धांतिमतेपीत्यर्थः असाधुतास्यादेवेति आख्यातांशक्तिभ्रमेण भावनाबोधेपि तत्र तस्यासाधुतास्यादेवेत्यर्थः तथा च भा

ननु सिद्धांते बोधकतारूपा शक्तिराख्याते शक्तिग्रहवतां बोधादावश्यकीति धातोरेव भावनावाच्यानाख्यातस्येति कथं
निर्णय इत्याशंकां समाधत्ते भेद्यभेदकसंबंधोपाधिभेदनिबंधनम् साधुत्वं तदभावेपि बोधो नेह निवार्यते भेद्यं विशेष्यं
भेदकं विशेषणं तयोर्यः संबंधस्तस्य यो भेदस्तन्निबंधनं साधुत्वम् अयमर्थः व्याकरणस्मृतिः शब्दसाधुत्वपरा तत्रैवाव
च्छेदकतया कल्प्यधर्मस्य शक्तत्ववदतो मीमांसकानां पुनः शक्तत्वं साधुत्वमित्येकमेवेति तद्रीत्या विचारे साधुत्वनिर्ण
य एव शक्तिनिर्णय उच्यते अतिरिक्तशक्तिवादे प्याख्यातानामसाधुता भावनायां स्यादेवं च चतुर्थ्यर्थे तृतीयाप्रयोगव
त् धात्वर्थभावनायामाख्यातप्रयोगे याज्ञिकमंत्रेष्वसाधुशब्दप्रयोगवत्त्वात् नैवं वदेदिति निषेधोऽपत्यप्रसक्तं प्रायश्चित्तं तद
र्शनान्तरीयत्वमित्यनतास्यादेवेति॥ ॥ख्यकतासिद्धे शब्दार्थसंबंध इत्यत्र समानायामर्थावगतौ साधुभिर्भाषितव्यं नासाधुभिरिति नि

म्याग स्येति वन्नियमः क्रियतेइति पस्पशायामुक्तम् एवं यादृशविशेषणान्वितयादृशविशेष्यबोधे यादृशानुपूर्व्याः ॥॥ सूत्रकृदादि
न्यतमसंमतत्वं तादृशबोधे तादृशानुपूर्वीकः शब्दः साधुर्नान्यत्र अत एवास्वशब्दोऽश्वेन साधुः किंतु निः स्वे अ॥ ॥स्वशब्दो निः स्वे न सा
धुः किंतु तुरग इति संगच्छते ननु स्तु साधुतेत्यत आह एवं चेति याज्ञिकमंत्रीत्यनेन नाहृतं वदेन्नापभ्रंशितं वा इत्यादिश्रुतिः क्रतुप्रक

र्भ्यादेकेनापरस्य बाधो वक्तव्यः स च बलवता दुर्बलस्येति कस्य दौर्बल्यमित्याकांक्षायां परदौर्बल्यप्रतिपादकं श्रुतिलिंगवाक्यप्र-
करणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षादिति सूत्रं प्रणिनाय महर्षिर्जैमिनिः श्रुत्यादीनां पठितानां समवाये एक
त्रोपनिपाते पारदौर्बल्यमिति परं एव पारः उत्तरपठितं तथा चैषां मध्ये यदपेक्षया परत्वं तद्दुर्बलमित्यर्थः तत्र हेतुमाह अर्थवि
प्रकर्षादिति अर्थस्य विनियोजकस्य लिंगादितो विप्रकर्षादुत्तरत्र विलंबात् लिंगादेर्विलंबेन पूर्वापेक्षया विनियोजकत्वावगतेरि
ति यावत् तत्र श्रुत्यादीनामुदाहरणानि निरपेक्षाण्येव स्तुः इतरप्रमाणानधीनप्रामाण्यकत्वं च निरपेक्षत्वम् यथा व्रीहीनवहंती
ति अत्र क्रियाजन्यफलभागित्वं कर्मत्वं बोधयंती द्वितीया श्रुतिरितरनिरपेक्षैव व्रीहीणामवघातशेषित्वं प्रतिपादयति १ ॥ अर्थ
विशेषप्रकाशनसामर्थ्यं लिंगं यथा बर्हिर्देवसदनं दामीति अत्र लवनार्थप्रकाशकतया लवनस्य विनियोगः २ परस्पराकांक्षाव
शादेकस्मिन्नर्थे पर्यवसन्नानि पदानि वाक्यम् यथा देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् अग्नये त्वा जुष्टं
निर्वपामीति अत्र मंत्रलिंगेन निर्वापे प्रयुज्यमानस्य समवेतार्थभागस्यैकवाक्यताबलेन देवस्य त्वेत्यादिभागस्यापि तत्रैव वि
नियोगः ३ लब्धवाक्यभावानां पदानां कार्यांतरापेक्षावशाद्वाक्यांतरेण संबंधः आकांक्षापर्यवसन्नम् प्रकरणं यथा स
मिधो यजतीति अस्य हि दर्शपूर्णमासे कथम्भावाकांक्षायाः प्रकरणपाठवशाच्छेषत्वम् ४ स्थानं क्रमः स चानेकस्याम्नात
स्य सन्निधिविशेषाम्नानम् यथा दधि रसीत्यत्राग्नेयाग्नीषोमीययागाः क्रमेण पठिताः एवं मंत्रभागेऽपि क्रमेणानुमंत्रण
त्रयं पठितं तत्राग्नेयाग्नीषोमयोर्द्वयोर्लिंगेनैव विनियोगसिद्धिः दधि रसीत्यत्र तु न लिंगादि विनियोजकम् किंतु यस्मिन्प्रदे
शे ब्राह्मणउपांशुयागविधानं तस्मिन्प्रदेशे मंत्रेऽप्यस्य पाठ इति क्रमादुपांशुयागानुमंत्रणे तस्य विनियोगः समाख्यायोगबलं

यथा होत्रमौद्गात्रमित्यादि तत्र हि होतुरिदं होत्रमित्यादियोगबलेन होत्रादिसमाख्यानानि कर्माणि होत्रादिभिरनुष्ठेयानीति विरोधोदाहरण
ऽन्यथा श्रुतिलिङ्गयोर्विरोधे श्रुतिर्बलीयसी लिङ्गं तु दुर्बलं अर्थविप्रकर्षात् यथा कदाचनस्तरीरसीन्द्रदिकायामृचो विनियोजिका श्रुति
ऐन्द्र्या गार्हपत्यमुपतिष्ठत इति इन्द्रप्रकाशनसामर्थ्याल्लिङ्गादिन्द्रोपस्थापने विनियोगः स्या प्रतिभाति अन्यप्रकाशकस्यान्यत्र विनि
योगायोगात् श्रुत्या गार्हपत्योपस्थापने सम्प्रतीयते गार्हपत्यमिति द्वितीया हि कर्मविभक्तितया काममपि क्रियामपेक्ष्य प्रवृत्त्यर्थस्य
शेषित्वं बोधयति क्रियाजन्येष्टफलभागित्वस्य तदर्थत्वात् एवमैन्द्र्येति तृतीया प्रकृत्यर्थस्य शेषत्वं क्रियाप्रति साधकतमत्वरूपक
रणत्वस्य तदर्थत्वात् तदनयोर्विरोधः तत्रायं पूर्वपक्षः सामर्थ्यज्ञानमपेक्ष्य श्रुतिर्विनियोजिका न ह्यसमर्थं श्रुतिसहस्रमपि विनि
योक्तुमलम् अतो लिङ्गस्य बलवत्त्वादिन्द्रोपस्थापने स्याद्विनियोगः तदविरोधितया द्वितीया सप्तम्यर्थतया व्याख्येया गार्हपत्यसमीप
इन्द्रोऽनयोपस्थातव्य इत्यर्थे पर्यवस्यतीति सिद्धान्तस्तु श्रुतिः स्वरूपसत्सामर्थ्यमपेक्षते न तु तज्ज्ञानमपि येन लिङ्गबलवद्भवेत् तस्य
च पूर्वं सत एव विनियोगान्यथानुपपत्त्या ज्ञानं पश्चादुपजायते लिङ्गं तु विनियोजने श्रुतिमपेक्षते तेन[illegible]न ऐन्द्र्या इन्द्र उपस्थातव्य इति लिङ्ग
स्वरसतः प्रतीयते किन्त्विन्द्र एतादृगित्येतावन्मात्रं तथा च प्रकरणाम्नानसामर्थ्यादिन्द्रप्रकाशनसमर्थया ऋचोऽन्यथानुपपत्त्या लि
गेनाऽनयैन्द्र उपस्थातव्य इति श्रुतिः कल्पनीया यथा विनियोगो भवेत्ततो यावल्लिङ्गं श्रुतिकल्पनाय प्रक्रान्तव्यापारं तावत्तत्र स्थ श्रु
त्या विनियोगः सिद्ध इति प्रकरणेनिराकाङ्क्षैकयानुपपत्त्या श्रुतिः कल्पनीया तस्माच्छ्रुतेर्बलवत्त्वात्तदनुगुणतया सामर्थ्यं नीयमान
इन्द्रपदं परमैश्वर्यार्थवाचकतया गार्हपत्यतात्पर्यकमित्यवधार्यते इति विरोधोदाहरणं तथापि त्वन्यतोऽवधार्य्योपि गौरवभया
न्नेह प्रपञ्चितानि तदर्थे निर्गलितोऽर्थः श्रुतिर्निरपेक्षत्वात्सर्वतो बलवती लिङ्गं तु विनियोगे एकान्तरितत्वाद् द्व्यन्तरितवाक्यादिदुर्बलतर

यद्दिवकर्तुरप्राधान्येपि कर्तृवृत्तिभावनाया। प्राधान्यात्तस्यानर्थान्वयेन द्वारत्वानार्थकर्तुरप्यन्वयात्तस्य श्रौतपुरुषार्थत्वा
नुपपत्तिरिति विभाव्यते तदा प्रकृतेपितुल्यमत आह। स्तुवेति अनुत्थानदूर्तिनावृतंवदेदिति निषेधस्य क्रतुयुक्तपु
रुषधर्मत्वे यजमानस्य प्राधान्यात्प्रधानीभूतकर्मैवानृतवदनं वर्ज्यस्यात्क्रत्वर्थत्वे नयत्नप्रवृत्तेन यजमानेन निषिद्धवर्जनं सि
द्धातीति विशेषात्कथमेतदिति वाच्यम् श्रुतिप्रकरणाभ्यां क्रतुसंबंधपुरुषकर्तृकानृतवदनाभाव इति बोधेन क्रतुकर्तृके
तिबोधे मानाभाव इति क्रतुयुक्तेतिवदतोभिप्रेतत्वादिति दृष्टं कतूइति दर्शपूर्णमासप्रकरण एवैतन्मंत्रवचनं श्रूयते अंज
भ्यमानोनुब्रूयान्मयि दक्षक्रतू इति तत्र किमेतन्मंत्रवचनं पुरुषधर्म उत क्रतुयुक्तपुरुषसंस्कारकतया क्रत्वंगमिति
संदेहे वाक्येनैतावज्जंजभ्यमानपुरुषधर्मतयैवायं प्रतीयते शतृप्रत्ययस्य शानचः कर्तृवाचकत्वात् प्रकरणेन तु क्रत्वंगतया
प्रकरणं च वाक्यापेक्षया दुर्बलमिति पुरुषधर्मेनैवयुक्तो सत्याच फलाकांक्षायां प्राणापानावेवात्मान् धत्त इति वाक्यशेषे श्रुतस्य
फलस्यापि स्वन्यायेन कल्पनादिति पूर्वपक्षे सिद्धांतः वाक्यप्रकरणयोर्विरोधो बाध्यबाधकभावो न त्वस्ति विरोधः जंजभ्य
मानपदस्य कर्तृवाचकतयाहि पुरुषस्य क्रतावपि संस्कारमुखेन क्रत्वंगतासंभवादेव चार्थवादोपस्थितफलकल्पना
गौरवमिति नेति तथा च बलाबलचिंताया विरोध एवोचितत्वे जंजभ्यमानवाक्योनुवचनस्य वाक्यप्रकरणाभ्यां क्रतुयुक्तपुरुषधर्मता
वत्प्रकृतेप्यनृतवदननिषेधस्य श्रुतिप्रकरणाभ्यां क्रतुसंबंधपुरुषधर्मत्वेनोचिता उक्तं च भट्टपादैः स्त्युपायमासभक्षादिपुरु
षार्थमपि स्थितः प्रतिषेधः क्रतोरंगमिष्टः प्रकरणाम्नायादितीति मया प्रपञ्चितमिति मर्यंचस्तु उक्तः नन्वसाधुत्वस्थानं विनापि शा
स्त्रबोधोदयेन व्यभिचारात्कथमेतत् साधुत्वस्य ज्ञानकारणतायानिराकरिष्यमाणत्वाच्चात आह अधुनेति तदानिरंकनिर्णय

तकारसामान्यार्थे निरूपिते तद्विषये कजिज्ञासानिवृत्त्यावश्यंवक्तव्यत्वत्वा नादिशेषार्थनिरूपणेऽवसरस्य संगतित्वं सूचयन्ना
हप्रत्येकमिति दश लकाराणामिति लट् लिट् लुडित्यादिक्रमेण पठितानामित्यर्थः आदेशानां वाचकत्वमिति पक्षेपि तिङादावादेशानि
ष्ठबोधकतारूपा शक्तिं लडादिष्वारोप्यत ङिधानात् दर्थकत्वं तेषामक्षतमिति भावः प्रारब्धापरिसमाप्तत्वमिति विनष्टाद्यवयव
प्रागभावकत्वे सत्यनुत्पन्नध्वंसान्त्यावयवकत्वमित्यर्थः भाविभूतक्रिययोरतिप्रसंगवारणाय क्रमेण पदद्वयम् लक्ष्ये लक्षणं ग्राहयति पचतीति अधि
श्रयणादीति साध्यत्वप्रकारकप्रतीतिविषयपूर्वापरीभूतावयवसमुदायस्यैव क्रियात्वादिति भावः तदिति उक्तवर्त्तमानत्वमित्यर्थः यद्यपि भाव
कालकारकसंख्याश्च त्वारोऽर्था आख्यातस्येति निरुक्तभाष्यात् क्रियातिरिक्तकालस्यैव वर्त्तमानत्वादिकं प्रतीयते तथापि निरुपाधिकस्य तस्य वर्त्तमान

प्रत्येकं दश लकाराणामर्थं निरूपयति वर्त्तमाने परोक्षे श्वो भाविन्यर्थे भविष्यति विध्यादौ प्रार्थनादौ च क्रमाज्ज्ञेया ल
डादयः लडादयः श्लिष्टत्वः क्रमेणैष्वर्थेषु द्रष्टव्याः तथाहि वर्त्तमाने लडिति सूत्रात् प्रारब्धापरिसमाप्तत्वं भूतभ
विष्यद्भिन्नत्वं वा वर्त्तमानत्वम् पचतीत्यादावधिश्रयणाद्यधःश्रयणान्ते मध्ये तदस्तीति भवति लट् प्रयोगः ॥ ॥

त्वादिना प्रत्येतुमशक्यत्वादुपाधिभूतक्रियामादायैव तत्र तत्त्वस्य वक्तव्यतयावश्यकत्वात् क्रियायामेव तत्त्वमुक्तमित्यवधेयम् वस्तुतस्तु दंडमु
हूर्त्ताद्यात्मकः खंडकाल एव वर्त्तमानत्वादिना लडादिवाच्यः तद्गतं वर्त्तमानत्वं च तत्तच्छब्दप्रयोगाधिकरणत्वमेव तदादिन्यायेन शब्द
प्रयोगाधिकरणत्वेनानुगमाच्च न शक्यानंत्यं यद्येवमपि तत्तत्कालत्वेन तत्तत्कालबोधस्यानुपपत्तिरिति विभाव्यते तदा तु शब्दप्रयो
गाधिकरणवृत्तिकालत्वव्याप्यधर्मत्वेनोपलक्षिततत्तत्कालत्वावच्छिन्न एव लटः शक्तिः क्रियारंभात्पूर्वं समाप्त्युत्तरं चाधीते पचतीत्या
दिप्रयोगापत्तिस्तु स्ववृत्तिप्रागभावाप्रतियोगिवृत्तित्वस्ववृत्तिध्वंसाप्रतियोगि प्रकृतक्रियानुयोगिकत्वाभ्यां विशेषितेनाधेयतासंबंधे
नान्वयनियमोपगमेन वारणीया यत्र तु खंडक्रियैव धात्वर्थस्तत्र शुद्धाधेयतासंबंधेनैव तदन्वयान्नास्तीत्यादौ दोषः इति भूतभ

नतु सत्ताश्रयत्वादीनां धात्वर्थत्वे तन्नासंगतिः तेषामखण्डत्वेनावयवघटितोक्तलक्षणवर्त्तमानत्वासंभवात् तस्मात् आत्मास्तीति अनि
त्यत्वादिति सावयवत्वेन प्रागभावप्रतियोगित्वे सति ध्वंसप्रतियोगित्वादित्यर्थः तद्विशिष्टस्याः नित्यराजक्रियादिविशिष्टसत्तादिरूपा
र्थस्येत्यर्थः तथा च केवलसत्तादिरूपार्थेन तदसत्त्वेप्युक्तविशेषणविशिष्टे तस्मिन् विशेषणांशमादाय तत्सत्त्वे नानुपपन्नमिति भावः
यद्वा तद्विशिष्टस्य तदाश्रयव्यवहितत्वादनित्यत्वस्यैव परामर्शः तादृशक्रियागतवर्त्तमानत्वमारोप्य सत्ताद्यर्थको लडित्यर्थः तत्र
तन्त्रस्योत्प्रेक्षितत्वं निरस्यति उक्तं हीति तिष्ठतेरधिकरणमिति आधेयतासंबंधेन तादृशक्रियात्मककालविशिष्टत्वात्तास्यमिति ध्य

आत्मास्ति पर्वताः सन्तीत्यादौ तत्तत्कालिकानां राज्ञां क्रियाया अनित्यत्वात् तद्विशिष्टस्योत्पत्त्यादिकमादाय वर्त्तमान
त्वमूह्यम् उक्तं हि भाष्ये इह भूतभविष्यद्वर्त्तमानानां राज्ञां क्रिया तिष्ठतेरधिकरणमिति परतो भिद्यते सर्वमात्मा तु न
विकल्पते पर्वतादिस्थितिस्तस्मात् पररूपेण भिद्यते इति वाक्यपदीये च एवं तमआसीदित्युक्तेनाप्यपि हितं यदासीः
त् अहमेकः प्रथममासं वर्त्तामि भविष्यामि चेत्यादिश्रुतयो पि योज्याः ॥ १४ अनेन भाष्येण वस्तुतस्त्वित्यादिनोक्तकल्प

स्यैव साधुत्वं लभ्यते न त्वित्युक्तलक्षणलक्षित —— कालस्यैव सर्वत्र क्रियाया आधेयतयान्वयलाभात् परतो भिद्यत इति सर्वपच्या
दिधात्वर्थसामान्यपरतः स्वापेक्षयान्येन वर्त्तमानत्वादिना भिद्यते आत्मा त्वित्यत्रात्मादिपदमात्मसत्ताद्यर्थकं न विकल्पते सनात
नत्वेन निरवयवत्वादुक्तविशेषणसंबंधाभावेन भेदानुमितिविषयो न भवतीत्यर्थः तथा चात्मास्तीति प्रयोगानुपपत्तिरिति पूर्वा
र्द्धार्थ समाधत्ते तस्मादिति विशेषातिरिक्तपदार्थस्य समोत्पादनत्वासंभवादित्यर्थः पर्वतादीत्यादि आत्मादिपरिग्रहः पररूपेण
ति परमात्म... [illegible]

पक्षद्वयस्यैवाकारारूढतां प्रदर्शयन्प्रथमद्योतकत्वपक्षेऽउपपत्तिमाह नचेति क्रियासामान्येति कालसामान्यवृत्तिक्रियावाचकस्येत्यर्थः तद्विशि
ष्टेवर्त्तमानकालादिविशिष्टेवर्त्तमानत्वादिविशिष्टेवा व्यापारइत्यर्थः लडादेरित्यादिनालिडादिपरिग्रहः उपयोगादितिसचप्राकृप्रतिपादितः तथाचलडा
यादेशत्वे नतिवादीनांवर्त्तमानात्वादिद्योतकत्वात्तापाक्षीदित्यादौवर्त्तमानक्रियाप्रतीतिः क्रियासामान्यशक्तधातोस्तत्तद्विशिष्टेलक्षणयै
वतत्तद्विशिष्टक्रियाबोधोपपत्तौपृथग्वर्त्तमानत्वादौतेषांशक्तिकल्पनेगौरवादितिभावः वाचकत्वपक्षमवलंब्याह अन्वयव्यतिरेका
भ्यामित्यादि नचतत्कौंडिन्यन्यायात्कर्त्राद्यर्थबाधः शक्तताव‌च्छेदकभेदात् किंचैवंलः कर्मणीतिसूत्रंनिरवकाशंस्यात् स्थलांतरे।

नचवर्त्तमानत्वादिलडादिभिर्द्योत्यते क्रियासामान्यवाचकस्यतद्विशिष्टेलक्षणायांलडादेस्तात्पर्यग्राहकत्वेनोपयोगा
त् अन्वयव्यतिरेकाभ्यांतद्रूपंलडादिवाच्यमेव अन्यथा प्रत्ययानांवाचकत्वविलोपापत्तिरित्यपिपक्षांतरंलिडर्थमाहप
रोक्षइति परोक्षेलिडितिसूत्रात् कालस्तावद्द्यतनानद्यतनभेदेनद्विविधः द्विविधोपिभूतभविष्यद्रूपः तत्रानद्यतने
भूतेपरोक्षेलिडित्यर्थः तेनाद्यतनेभूतेऽनद्यतनेभविष्यतिभूतेप्यपरोक्षेचनलिट्प्रयोगः॥२२

ति पिविध्याद्यर्थैर्बोधसंभवादिति
भावः अन्यथाऽन्वयव्यतिरेकयोः शक्यग्राहकत्वे विलोपापत्तिरिति सर्वत्रप्रकृत्यैवतत्तत्प्रत्ययार्थत्वाभिमतबोधसंभवादितिभावः अ
धिकंसुबर्थनिर्णयेवक्ष्यते अनद्यतनेभूतइति भूतइति अनद्यतनेलङिति सूत्राभ्यांतत्तत्पदानुवृत्तिरितिभावः नलिट्प्रयोगइतिउक्ता
र्थस्यबाधात्पपाचेत्यादिजबोधानंतरमनद्यतनत्वादिसंदेहानुदयाद्वा तत्वादिवनयोरपितद्वाक्यजबोधेक्रियांशेविशेषणतयाभानं
मभ्युपेयम् नचवाचकतांद्योतकतांवाविनानुपपन्नमितिलिटस्तदभ्युपगमआवश्यकइतिभावः॥ ॥ ॥

ननु परोक्षत्वं प्रत्यक्षमन्यज्ज्ञानविषयत्वं तथा च प्रत्यक्षक्रियायामपि श्रुतानुमितत्वयोः सत्त्वात् पपाचेत्यादिप्रयोगापत्तिरत आह परोक्षत्वं चेति यथाश्रुतप्रत्यक्षाविषयत्वस्योपनीतक्रियायामभावेन तत्र पपाचेत्यादिप्रयोगानुपपत्तिरत आह साक्षात्करोमीति साक्षात्करोमीत्येतत्प्रतीतिसाक्षिकलौकिकविषयत्वाभाववत्त्वमित्यर्थः उक्तस्थले प्रत्यक्षविषयतासत्त्वेपि तादृशविलक्षणविषयत्वाभाववत्त्वमक्षुण्णमिति न तदनुपपत्तिः प्रत्यक्षतादृशशब्दप्रयोक्तृणां हृदयं दशमस्त्वमसीत्यादौ शाब्दज्ञानसहकृतमनसैव दशमसाक्षात्कारो न तु शब्दात् लौकिकविषयतानियामकेन्द्रियसंयोगादेरभावे शाब्देन तदुत्पत्त्यसंभवात् अत एव तत्त्वमसीत्याद्याचार्योपदेशश्रवणमारि

परोक्षत्वं च साक्षात्करोमीत्येतादृशविषयताशालिज्ञानाविषयत्वं न च क्रियानामेयमत्यंतापरदृश्या पूर्वापरीभूतावयवा न शक्या पिंडीभूता निदर्शयितुमिति भाष्यात्तस्याः अतीन्द्रियत्वेन परोक्षत्वव्यावर्त्तकमिति शंक्यम् पिंडीभूताया निदर्शयितुमशक्यत्वेपि अवयवशः साक्षात्करोमीतिप्रमितिविषयत्वसंभवात् अन्यथा पश्य मृगो धावतीत्यत्र तस्याः दर्शनकर्मता न स्यादिति प्रतिभाति ॥ ५ वस्तुतः मनश्चात्मदर्शने कारणमिति गीताभाष्ये उक्तमिति सर्वं समंजसं क्रियानामेयमिति भाष्ये सा सा अनुमानगम्येति शेषः क्रियासाध्यत्वेन प्रतीयमानाद्रूपपचतीत्यादिव्यवहारविषयीभूतायतः पूर्वापरीभूतात्मिकानेकव्यापारसमूहात्मिका अतोत्यंताऽपरदृश्या परेण प्रत्यक्षप्रमाणेनात्यंतमदृश्या तज्जन्यज्ञानाविषया द्रुतियावत् पिंडीभूतेति अवयवानामाशुविनाशित्वेन पिंडस्याभावादिति भावः ननु तर्हि तत्र किं प्रमाणमत आह सा सा इति विक्लित्त्यादिरूपकार्यानुमेयेति अन्यथेति क्रियायाश्चावयवशोपि साक्षात्कारानभ्युपगमे दृश्यत्वं प्रतिभासीति कार्येण सा सद्बुद्धिविषयीभवतीत्यर्थः ॥

ननु क्रियावयवा अपि क्रियावदतींद्रिया एव यथा पचेरुदकसेचनादयोवयवास्तथा तेषामप्यवयवास्तेपि समूहरूपेणैव धातुवाच्याः यस्तु क्षणावच्छिन्नस्तद्रूपोवयवः स तु न धातुवाच्यः किंत्ववयवसमूहात्मनैव आश्रितक्रमरूपत्वात्तद्वाच्यस्य एवं च सदसद्रूपा क्रिया न सद्विषयेंद्रियग्राह्याः तदुक्तं क्रमात्सदसतां तेषामात्मनानसमूहिनः सद्वस्तुविषयैर्यांति संबंधं चक्षुरादिभिरिति अत्यंतापरदृष्टेति भाष्यस्याप्यवयवरूपेण समूहात्मा चादृष्टेत्येवार्थः अत एव वर्त्तमाने लडिति सूत्रे भाष्ये ऽस्ति वर्त्त

व्यापारविष्ठानां क्रियानुकूलसाधनानामेवात्र पारोक्ष्यं विवक्षितमतो नोक्तदोषः अयं पपाचेत्याद्यनुरोधाद्व्यापारविष्ठानामितीत्यपि वदंति कथं तर्हि व्याने नेकिरणावलीमुदयनइति स्वक्रियायाः स्वप्रत्यक्षत्वादिति चेत् असंगतमेव ॥ ८ ॥

मानकालः परं त्वादित्यगतिवन्नोपलभ्यत इत्युक्तं तस्य प्रत्यक्षेणेति शेषः एवं च वर्त्तमानत्वाक्रांतक्रियाणां स्पष्टमेवाप्रत्यक्षत्वं नन उपलभ्यते पश्य मृगो धावतीत्यादौ तु दृशिर्ज्ञानार्थको धावतिर्वा फलपर इति न कश्चिद्दोषः किंच अवयवस्य प्रत्यक्षत्वे प्रकृतः कटमित्यादावव यवातीतत्वेन समुदायातीतत्वमादाय क्लाद्युपपादनवदवयवप्रत्यक्षत्वेन समुदायप्रत्यक्षत्वमादाय परोक्ष इत्यस्य चारितार्थ्ये भाष्यस्य पूर्वपक्षस्य निर्दलत्वापत्तिरित्यपरितोषान्मतांतरमाह व्यापारविष्ठानामिति एवं चातीत

न्व्यापारविषयपरोक्षकर्तृकक्रियात्वाद्वानो लिङ्ङिति परोक्षे लिङ्ङिति सूत्रार्थः अयंपपाचेति तदानीं कर्तुः पारोक्ष्येपि व्यापारदशायामप
क्ष्यासत्वादुक्तप्रयोगोपपत्तिरिति भावः इत्यपि वदन्तीति मतांतरानादरेणापि पूर्वोक्तार्थस्यापातरमणीयत्वमन्वानाभाष्यानुसारिणइति
घोष अत्राहुर्नैयायिकाः पूर्वापरीभूतावयवसमुदायात्मकपारिभाषिकक्रियायाश्चाप्रत्यक्षत्वं युक्तमेवसमुदायस्यैवाभावात् तदवयवा
नामपि पारोक्ष्यन्तु सर्वानुभवविरुद्धम् तत्प्रत्यक्षकारणचक्षुःसंयुक्तसमवायादेः सत्वात् यथा घटपुस्तकादेरप्यप्रत्यक्षत्वापत्ति
रितितदुव्याकोपः अपि च पचनंसाक्षात्करोमीति सार्वजनीनप्रतीतेश्च प्रतीतेः पदार्थासाध्यकत्वे व्यवहारमात्रोच्छेदापत्तिश्च सदसता
तेषामित्यस्यविद्यमानाविद्यमानावयवरूपाणामित्यर्थात्समूहात्मकक्रियायाः पारोक्ष्यप्रतिपादनपरत्वान्नहरिवाक्यविरोधोपि
अन्यथा क्रियासदसद्रूपेति वदतो व्याघातः स्पष्ट एव कालस्य प्रत्यक्षत्वाभावेन तदनुवादकमाख्यापदं मत्वासौ पित्तावयवानां पारो
क्ष्योपपादकः प्रकृतकूटमित्यत्राप्यवयवातीतत्वमादायैव प्रयोगोपपत्तौ समुदायातीतत्वारोपे मानाभावेन तद्दृष्टांतासंगतिश्च दा
तीत्यनेन लौकिकविषयताशास्त्रार्थकदर्शिकर्मत्वं धावतेः प्रतिपादितं कथमन्यथाऽऽसनांतरस्थितस्यतत्तादृशप्रयोगः स्वर्गकर्तृक
धावने ज्ञानविषयत्वरूपज्ञानकर्मत्वाबाधात् धावने संयोगरूपफलार्थकत्वे व्यापारवाचकत्वाभावाद्धातुप्रसंगश्च तज्जनकव्या
पारगतपौर्वापर्यारोपेण क्रियात्वोपपादने चाप्रत्यक्षत्वापत्तिजदवस्थैवेति न किंचिदेतत्तस्मात्पूर्वोक्तमतमेव निराबाधमिति

व्यासंगादिनेति यथा मत्तोहं किल विललापेत्यत्र मदादिना मनोऽसन्निधानात्क्रियापारोक्ष्यं तद्वदित्यर्थः लिडसंभवादिति अत्रेदं चिंत्यम्
न वास्तवं पारोक्ष्यादि लिडादि नियामकम् अध्यास्त सर्वर्तुसुखामयोध्यामित्यत्र लङो साधुतापत्तेः किंतु वैवक्षिकं न तथा वक्ष्यति च स्व
यमेव सारस्वत् अनद्यतनभूतत्वेन विवक्षिते लङ् तथैव पारोक्ष्यविवक्षायां लिडिति प्रकृते चानायासनिष्पन्नत्वशीघ्रनिष्पन्नत्वप्र
तीतिफलकभूतानद्यतनत्वविवक्षाया एवं सूक्ष्मकालेन करिष्यामि यत्र काले मयापि साक्षात्कर्तुमशक्यमिति प्रतीतिफलकपारोक्ष्य

स्यासंगादिना स्वव्यापारस्य परोक्षत्वोपपादने पि बहुतरमनःप्रणिधानसाध्यशास्त्रार्थनिर्णयजनकशब्दरचनात्मके ग्रं
थेऽनद्यतनत्वातीतत्वयोर्विस्तारक्रियायामसत्त्वेन लिटो योगात् लुडर्थमाह श्वो भाविनीति अनद्यतने भाविनीत्यर्थः अन
द्यतने लुडिति सूत्रात् यथा श्वो भवितेत्यादौ लृडर्थमाह भविष्यतीति भविष्यत्सामान्य इत्यर्थः लृट् शेषे चेति सूत्रात् य
था घटो भविष्यतीत्यादौ तत्त्वं वर्त्तमानप्रागभावप्रतियोगिसमयोत्पत्तिमत्त्वम् लेटोर्थमाह विध्यादाविति लिङर्थे लेडिति
सूत्रात् लिङर्थश्च विध्यादिरिति वक्ष्यते लोडर्थमाह प्रार्थनइति आदिना विध्याद्याशिषो गृह्यंते आशिषि लिङ् लोटौ लो
ट् चेति सूत्राभ्यां तथावगमात् यथा भवतु ते प्रसाद इत्यादौ एतयोरर्थो लिडर्थ एव त्रयाणां समानार्थत्वादिति तन्निर्णये नै

विवक्षायाश्च सत्त्वाल्लिडुपपत्तिसंभवादिति अनद्यतनइति अतीताव्यवहितरात्रिपश्चार्द्धविशिष्टागामिरात्रिपूर्वार्द्धोपेतं दिनमद्यत
नं तद्भिन्नकालत्वमनद्यतनत्वमिति वृत्तिकारादयः कैयटस्तु लुङ्सूत्रेऽतीतरात्रेरंत्ययामेनागामिरात्रेराद्ययामेन सहितो दिवसोऽद्यतन
इत्यूचे अत्रेदमवधेयम् अनद्यतनभूते यदा भूतत्वमात्रविवक्षा न तदा लुङेवानेन ह्योपाक्षीदित्यादौ भूतत्वमात्रविवक्षायां लुङि

॥लकारार्थ॥

पश्चात्तु परेनसंबंधेन यतनत्वप्रतीतिरिति नलुङोः साधुता एवमनद्यतनभविष्यति भविष्यत्त्वमात्रविवक्षयाद्य लृट् श्वोपक्ष्यमाणे देवतावः
सतीत्यत्र पश्चाद्य नयतनत्वप्रतीतिरिति परेतु सागयागस्य द्व्यहात्मककालसाध्यत्वात्तदधिकरणद्व्यहात्मककालस्यानद्यतनत्वाभावे
नलुटोनवसरा लृडुपपत्तिः अद्यप्रभृति मेदाशब्ब्रह्मचर्य्यं भविष्यतीतिवदित्याहुः नन्वहमेकः प्रथममासवर्त्तामि भविष्यामि चेः
त्मधात्वर्थसत्तायावर्त्तमानप्रागभावप्रतियोगित्वस्य भविष्यत्त्वस्य बाधात्तदर्थकाद्भविष्यदर्थकप्रत्ययाप्रसक्तिरत आह नन्व
वेति वर्त्तमानप्रागभावप्रतियोग्युत्पत्तिकसमयवत्त्वमिति पाठः तथा च तदर्थव्यापाराधिकरणस्य कालस्यानित्यराजक्रियायात्मका
स्योक्तभविष्यत्त्वात्तदा तदर्थे वलृडुपपत्तिरिति पथ्यास्तुनार्थानुसारिणः अन्येतु ननु येषां मतेन नश्यत्यादिधातूनां नाशमात्रमर्थस्तेषां म॰
विष्यत्वस्य वर्त्तमानप्रागभावप्रतियोगित्वस्तत्वे श्वोभाविनाशके परश्वो नंक्ष्यतीति प्रयोगापत्तिः वर्त्तमाननाशप्रागभावप्रतियोगिनित
न्नाशे परश्वस्तनकालवृत्तित्वसत्वात् न च परश्वस्तनकालस्य भविष्यत्त्वघटकप्रागभावेन्वयास्तु परमात्तस्य च तत्प्रागभावे बाधश्चे
क्तप्रयोगापत्तिरिति वाच्यं तथा सति श्वोभाविनाशके पि श्वो नंक्ष्यतीति प्रयोगानुपपत्तिः तन्नाशप्रागभावे श्वस्तनकालसंबंधबाधा
द तथाह तत्रत्वेति अत्र समयपदोपादानं कालेसड्डाद्यर्थे उत्पत्तिभिन्नेत्यनतुतस्य लक्षणे निवेशः प्रयोजनाभावाद्व्रियमानप्रागभाव
प्रतियोग्युत्पत्तिकत्वस्यैव सम्यक्त्वात् यतनूत्पत्तिरेव धात्वर्थस्तत्र तद्घटितमेव तन्निर्वक्तव्यं अन्यथोत्पत्तेर्द्वैधामानप्रसंगात्
एवं चोक्तस्थले भविष्यत्त्वघटकोत्पत्तौ परश्वस्तनकालवृत्तित्वबाधान्नोक्तप्रयोगापत्तिरितीत्यमवतारयंति अत्रेदमवधेयम्
द्व्यहाद्यघटो भविष्यतीत्यादौ देशकालविशेषादेरधिकरणत्वेन धात्वर्थोत्पत्तावेवान्वयः नतु भविष्यत्त्वघटकप्रागभावे उत्पत्तिम
त्तिवा तथा सति कपालनाशजन्यघटनाशस्थले इह कपाले घटध्वंसो भविष्यतीति प्रयोगापत्तेर्घटरूप प्रतियोग्यात्मकघटध्वंसप्रा

गभावस्यकपालेसत्वादेवंश्वोभाविन्यद्यभविष्यतीति प्रयोगप्रसंगश्च अद्यतनकालवृत्तित्वस्यप्रागभावेसत्वात्तथाभवनेश्वःसमुत्प
द्यप्रांगणेपरश्वोगमिष्यति मैत्रेप्रांगणेपरश्वोभविष्यतीतिप्रयोगापत्तिरुत्पत्तिमतोमैत्रस्यप्रांगणवृत्तित्वात्परश्वस्तनकालवृत्तित्वाच्च य
थात्वेतुतस्यपरश्वस्तनकालवृत्तित्वेप्युत्पत्तेस्तत्कालवृत्तित्वान्नकश्चनदोषः एवंचवर्त्तमानप्रागभावप्रतियोग्युत्पत्त्यनुकूलोघटाश्रयको
व्यापारइतिबोधस्तथाचोत्पत्त्यघटितेभविष्यत्वेऌडादेः शक्तिलाघवात्तदघटितेनुलक्षणेतिन नंक्ष्यतीत्यादुक्तस्थलउत्पत्तिबोधानु
पपत्तिरिति विध्याशिषाविति आशीस्तुहितविषयकलोडाद्यंतशब्दप्रयोक्तिच्छा भवतुतेइति हितविषयकमदिच्छाविषयत्वत्संबंधि
शिवप्रसादकर्त्तृकंभवनमितिबोधः एतयोरिति लेट्लोटो रित्यर्थः त्रयाणांलेट्लोट्लिङामित्यर्थः तन्निर्णयेनैवेति लिङर्थनिर्ण

लङादिक्रमेणङितामर्थमाह ह्योभूतेप्रेरणादौचभूतमात्रेलङादयः सत्यांक्रियातिपत्तौचभूतेभाविनिऌङ्स्मृतः
लङर्थमाह ह्योभूतइति अनद्यतनेभूतइत्यर्थः अनद्यतनेलङितिसूत्रात् यथास्यपुत्रोभवदित्यादि लिङर्थमाह प्रे
रणादाविति विधिनिमंत्रणामंत्रणाधीष्टसंप्रश्नप्रार्थनेषुलिङितिहिसूत्रंतत्रविधिःप्रेरणंभृत्यादेर्निकृष्टस्यप्रवर्त्तनं

येनइत्यर्थः॥८॥ ॥ह्यःपदस्याव्यवहितातीतदिवसेरूढतयातदात्मककालस्यलङर्थत्वेनैकदिनांतरितभूतेलङनुपपत्तिरतआह
अनद्यतनइति तथाचह्यःपदंलक्षणयानद्यतनत्वेनाद्यतनमात्रबोधकमितिनोक्तदोषावकाशः एवंश्वोभाविनीत्यत्रापिबोध्यम् अ
स्यपुत्रइति वर्त्तमानध्वंसप्रतियोग्यनद्यतनकालवृत्तिरेतत्संबंधिपुत्रकर्त्तृकोत्पत्त्यनुकूलोव्यापारइतिबोधः अध्यास्तेत्यादौतुभूता
नद्यतनत्वमात्रविवक्षयालङुपपत्तिः स्वत्वाद्धित्यादीनांलिङर्थत्वप्रतीतेः कथंप्रेरणादेर्विध्यर्थत्वमतआह तत्रेतितेषुमध्येइत्यर्थःवि
धिःप्रेरणमिति प्रेरणापर्यायोविधिशब्दइत्यर्थःप्रेरणायाःलिङादिशब्दस्वरूपतांवदतांमतंनिराकर्त्तुंप्रेरणायाःस्वरूपंदर्शयति भृ

श्रावेदमधीयीयोतनकेमिति स्वोद्देश्यकत्वसंबंधेन संबोध्य विशिष्टामन्निस्वाचवेदाध्ययनतर्कोध्ययनान्यतरभावनेष्टसाधनत्वप्र
कारकनिर्णयेच्छाविषयइतिबोधः एवमग्रेपि विधिः प्रेरणमिति प्रेरणं प्रवर्त्तनमित्यर्थः अप्रवृत्तप्रयोज्यस्याज्ञातस्वाभिलषितो
पायइष्टसाधनताबोधनमितियावत् अपकृष्टोद्देश्यकतादृशेष्टसाधनत्वबोधविषयाप्रयुक्तम् लिङादिघटितंवाक्यमेवाज्ञोप
देशपदाभ्यांव्यपदिश्यते तदेवाह भृत्यादेरिति आदिनाशिष्यादिपरिग्रहः तत्रलौकिकमुदाहरणम् भवाञ्जलमानयेदित्यादि
वैदिकेस्वर्गकामोयजेतेत्यादि नियोगकरणमिति निमंत्र्यतेनियुज्यतेऽनेनेतिव्युत्पत्त्यानियोगानुकूलोव्यापारोनिमंत्रणपदार्थइ
त्यर्थः आवश्यकइतिश्राद्धभोजनादावित्यर्थः प्रेरणेत्यस्यदौहित्रादेरित्यादिः तथाचावश्यकेश्राद्धभोजनादौदौहित्रादेरिष्टसाधनताबो
धनंनिमंत्रणमितिफलितं यथेहभुंजीतभवानिति कामचारेति स्वाभिलषितेकामचारेणप्रवृत्तस्येष्टसाधनताबोधनमित्यर्थः यथे
हासीतेति अनुज्ञातुःप्रवृत्तप्रयोजनस्येतरप्रवृत्तिप्रतिबंधेनतत्प्रवृत्तिविषयेइष्टसाधनताबोधनम् यथारथ्यंकुरुतनकुरुतवय
थाहितमितिच एतदादिसर्वोपलक्षणम् सत्कारपूर्वकोव्यापारइति संमानपूर्वमध्यापनादिव्यापारइष्टसाधनमित्यर्थः अयमेव
चाभ्यर्थनेतिव्यवह्रियते उदाहरणं माणवकमध्यापयेद्भवानिति संप्रश्नःसंप्रधारणम् प्रार्थनानुस्वाभिलषितवस्तुदानादौस्वीये
च्छाबोधनम् यथाभोजनंलभेयेति॥९॥ ॥एतच्चतुष्टयेति विध्यादिचतुष्टयेत्यर्थः लाघवादिति तस्यशक्यतावच्छेदकत्वकल्प
नेलाघवादित्यर्थः विधिवाक्याद्विध्यादीनांबोधस्यसर्वसिद्धत्वेपितत्तद्रूपस्यशक्यतावच्छेदकत्वकल्पनेगौरवादुक्तानुगतरूपस्यै
वशक्यतावच्छेदकत्वमुचितमितिभावः नव्यहरिसम्मतिमाहउक्तंचेति किंभेदस्येति तत्तद्रूपेणपार्थक्यस्येत्यर्थः तत्तद्रूपेणश
केरनंगीकारादितिभावः तर्हितथोपादानंस्वलक्षताकिमितिकृतमतआह न्यायेति न्यायःशक्तिःतद्व्युत्पत्तयेतद्ग्रहायेत्यर्थः॥ ९॥

ननु प्रवर्त्तनात्वेन प्रवर्त्तनापाशक्तिपक्षे विध्यादिसमस्तधर्मिक एवेत्यत आह अपपंचार्थमिति प्रवर्त्तने तिव्युत्पत्ते एवं नाद्युचितिनिष्पन्नप्रवर्
त्तनाशब्दात्प्रवृत्त्यनुकूलव्यापारलाभ इत्याहत्वेति निरुक्तावच्छेदकावच्छेदकत्वावचेत्यर्थः तदेवेति इष्टसाधनत्वमेवेत्यर्थ एवकारेण कृतिसाध्यत्वा
दिव्यवच्छेदः इष्टत्वं च समभिव्याहृतपदोपस्थापितकामनाविषयत्व स्वर्गकामो यजेतेत्यत्र स्वर्गकामपदोपस्थापितकामनाविषयत्व
स्य स्वर्गे सत्त्वादिष्टत्वं तस्याक्षतम् तेनैव च स्वर्गादीनामनुगमः यदि च सामान्यत इष्टसाधनत्वज्ञाने प्रवृत्त्यनुदयात्तद्रूपेण स्वर्गत्वा
दिना स्वर्गसाधनताज्ञानं तथावाच्यं तथाप्यनेन रूपेणेष्टसाधनत्वस्य श्रुतेरनवगमाद्विधिवाक्यात्कथं प्रवर्त्तकज्ञाननिर्वाह इति विभा

एतच्चतुष्टयानुगतप्रवर्त्तनात्वेन वाच्यता लाघवात् उक्तं च प्राक्प्रवर्त्तनारूपमनुस्यूतं चतुर्ष्वपि तत्रैव लिङ्घानत्र
किं भेदस्य विवक्षया १ न्यायस्तुत्यादरार्थेवा प्रपचार्थमथापि वा विध्यादीनामुपादानं चतुर्णामादितः कृतमिति २ प्रवर्त्त
नात्वं प्रवृत्तिजनकज्ञानविषयतावच्छेदकत्वम् तच्चेष्टसाधनत्वस्यास्तीति तदेव विध्यर्थ । ॥ व्यते तर्हीष्टतावच्छेदकत्वेन

स्वर्गत्वादीननुगमय्य तदवच्छिन्नसाधनत्वे विधेः शक्तिरुपगन्तव्या एवं च न विधेर्नानार्थत्वमपि तदादिवत् इष्टतावच्छेदकत्वस्योप
लक्षणत्वोपगमाच्च न स्वर्गत्वादीनां तद्रूपेण भानापत्तिः अपवर्गकामो ज्योतिष्टोमेन यजेतेत्यत्र श्रुत्या स्वर्गसाधनत्वं ज्योतिष्टोमे बोधनी
यम् तच्च न संभवति वाजपेयादिपि स्वर्गोत्पत्तेर्व्यभिचारात् तैजसस्य चोत्तरकालकल्प्यत्वेन पूर्वमनुपस्थितत्वादिति चेन्न यथा द्रव्यत्वेनै
व जानाति इत्यादौ घटत्वोपलक्षितव्यक्तिर्हि विशेष्यकद्रव्यत्वप्रकारकज्ञानावगमः स्वर्गत्वाश्रयत्वं किंचिद्धर्मसमानाधिकरण्यमावाप्र
ति योगित्वमेव श्रुत्याप्यवगम्यतेऽथवा यागानन्तरकालावृत्तित्वमेव स्वर्गत्वसामानाधिकरण्येनेति न कश्चिद्दोषः अत एव साध्येष्टकात्व

स्यविध्यर्थत्वमामनंति अन्यथासिद्धत्वंतु विधेः प्रवृत्तितात्पर्यकत्वावधारणादुत्तरकालकल्प्यम् इत्थंचग्रहणश्राद्धादौ नित्यत्वनैमित्ति-
कयोरिव नित्यश्राद्धसंध्यादौ नित्यत्वकाम्यत्वयोरप्यविरोधात् लाघवाद्रात्रिसत्रन्यायेनदर्थवादहरहः श्राद्धं पितृभ्यः प्रीतिमावहन् संध्या
मुपासते ये तु सततं संशितव्रताः विधूतपापास्ते यांति ब्रह्मलोकमनामयमित्याद्यर्थवादोपस्थितपितृतृप्तिब्रह्मलोकावाप्त्यादिकमेव फ
लं कल्प्यते यद्यप्यन्यत्र समवायघटितसामानाधिकरण्येनैव यागस्वर्गयोः कार्यकारणभावः क्लृप्तस्तथाप्युक्तवाक्यप्रामाण्याच्छ्राद्धपितृ
तृप्त्योरुद्देश्यत्वसमवायघटितसामानाधिकरण्येन संकल्पनीयः कर्तृनिष्ठादृष्टस्य तु न पितृतृप्तिजनकत्वम् व्यधिकरणत्वात् श्रा
द्धानंतरं तत्कर्मनाशाजलस्पर्शादिना तन्नाशेन पित्रादिस्वर्गानापत्तेश्च पितॄणां मुक्तत्वे तु स्थानार्थ्येव तत्कल्प्यताम् अत एव शास्त्र
देशितं फलमनुष्ठातरीत्युत्सर्गइतिवृद्धाः स्वतः पुरुषार्थदुःखप्रागभावः प्रत्यवायानुत्पादो वा न तथा कल्पनीयः तत्साधनत्वं च योग
क्षेमसाधारणम् नित्यकृते प्रत्यवायानुत्पाद नियमात्तत्त्वेदुःखप्रागभावावश्यंभावाच्च तथा च सर्व शक्तौ प्रवृत्तिः स्यात्तथाभूतो
पदेशादिति सर्वशक्त्यधिकरणपूर्वपक्षसूत्रपुरुषार्थस्य माध्यस्यो भयत्र तौल्येन यथा काम्ये फलापातं तथा नित्यमपीतिव्याख्यान
भेदः नन्विष्टसाधनत्वस्य विध्यर्थत्वे साधनत्वस्याख्यातेनाभिधानाज्ज्योतिष्टोमेनेत्यत्र तृतीयानुपपत्तिरिति चेन्न द्रव्यं कारकमिति
पक्षे शंकानवकाशात् शक्तिः कारकमिति पक्षेपि फलार्थव्यापारनिष्ठभावनाभाव्यनिर्वर्तकत्वरूपकरणत्वस्याभिधानेपि याग
निष्ठस्य तस्यानभिधानेन तत्समानाधिकरणज्योतिष्टोमपदात्तदुपपत्तेः न कलंजं भक्षयेदित्यादे निषेधविधित्वोपपत्तये नञ्स
मभिव्याहारे विधेरनिष्टसाधनत्वे शक्तिरुपगंतव्या तस्यापि धात्वर्थेन्वयः नञ्तात्पर्यग्राहकः कलंज कर्मकभक्षणमनि-
ष्टसाधनं इति बोधः यद्वा नञर्थाभावविशेष्यक एव बोधः तेन च स्वप्रतियोगिन्यनिष्टसाधनत्वाक्षेपात्ततो निवृत्त्युपपत्तिरिति भावः

२

बलवदनिष्टाजनकेष्टसाधने चंद्रमंडलानयने बलवदनिष्टाननुबधिनि साध्ये निष्फले न प्रवृत्तेरिष्टसाधने कृतिसाध्यमधुविषसं
पृक्तान्नभोजने च प्रवृत्त्यदर्शनात्प्रवर्तकज्ञाने विषयतावच्छेदककोटौ निवेशस्यावश्यकतया विधिवाच्यत्वं श्रुतेः प्रवर्त्तकत्व
निर्वाहार्थमावश्यकमिति नैयायिकमतं निराकर्तुमाशंकते यद्यपीति एतेन प्रवर्तकज्ञानविषयतावच्छेदकत्वम् मत्समन्वेपुर्तिः
माह तज्ज्ञानस्येति कृतसाध्येऽपि तज्ज्ञानात्प्रवृत्तिदर्शनादिति भावः। निराचष्टे तथापीति लोकत एवेति लौकिकप्रमाणादेवेत्यर्थः
अनन्यलभ्यो हि शब्दार्थ इति न्यायादिति भाव वस्तुतस्तु उक्तन्यायस्य फलान्तरलभ्ये च शक्तिरन्यथा कस्यापि पदस्य शक्तिर्न सिद्ध्ये

मद्य्येन तत्कृतिसाध्यत्वस्यापि तज्ज्ञानस्य प्रवर्त्त- कत्वात् तथापि यागादौ सर्वैर्न लोकत एव वागम्यत इत्यनन्यलभ्य
त्वान्न तत्क्षतम् बलवदनिष्टाननुबंधित्वज्ञानं च न हेतुः द्वेषाभावेनान्यथासिद्धत्वात् व्यालिककामुकस्य न(?)
धनताज्ञानदशायामप्युत्कटे द्वेषाभावदशायां प्रवृत्तेर्व्यभिचाराच्च तस्मादिष्टसाधनत्वमेव प्रवर्त्तकता ॥ २ ॥

त्वर्वस्यापि शब्दातिरिक्तप्रमाणगम्यत्वात् किंच इष्टसाधनत्वादीनां सामान्येण यदि शक्यत्वं तदा स्वर्गपुत्रकरीति निर्णयकरण
क्षमा किन्तु प्रवर्त्तकज्ञानविषयतावच्छेदकत्वोपलक्षणानुगतीकृते पुंसाद्यपलक्षण स्य च कृतिसाध्यत्वस्साधारणतया तन्मापि सि
ध्यंती शक्तिः केन प्रतिषेध्येति सत एवावधारयतु यत्तु कृतिसाध्यत्वे वेदादवगतेप्यशक्तस्य यागादौ प्रवृत्त्यनुदयादर्शयाविधि
एतज्ज्ञानस्यैव प्रवृत्तिहेतुत्वावश्यम् तस्य च यागो मत्कृतिसाध्यो मत्कृतिसाध्यत्वविरोधिधर्मानधिकरणत्वान्मत्कृतिसाध्यपा-
कवदित्यनुमानेनैवागमान्नास्य शक्यत्वमित्याशय इति तन्न इष्टसाधनताज्ञानस्यापि मरणविषयकस्यैव प्रवर्त्तकत्वापत्तेस्त

विधिवाक्यादलाभेनेष्टसाधनत्वेशक्त्यभ्युपगमेपिप्रवर्त्तकत्वानुपपत्तेरपरीहारात् यदितुप्रतिपुरुषविधेय [illegible] नेनैवतत्पु-
रुषीयेष्टसाधनताबोधकत्वात्प्रवर्त्तकत्वोपपत्तौ नानुमानावश्यकत्वमितिविभाव्यतेतदाकृतिसाध्यत्वेपितुल्यमिति बलवद् निष्टाननु-
बंधित्वस्यविध्यशक्यत्वेनकलंजंभक्षयेदित्यत्रभक्षयेदित्यस्यभक्षणेऽनिष्टसाधनत्वाबोधकतयानिषेधविधित्वानुपपत्तिरिति
तत्रापिविधिशक्तिरभ्युपेया अनिष्टेबलवत्त्वंचेशेन्यनिनांतरीयकदुःखातिरिक्तत्वं तेननायाससाध्येकर्मणिप्रवृत्त्यनुपपत्तिःक-
ष्टंकर्मेतिन्यायेनसुखमात्रजनककर्मासंभवात्तनोकार्थस्यसिद्धिः यदिचकदाचित्तत्संभवस्तदेशेन्यत्वनांतरीयकत्वमेवतद्वाच्यं
एतेनबलवदनिष्टाननुबंधित्वज्ञानस्यप्रवर्त्तकत्वमेवनबह्वायाससाध्येकर्मणिप्रवृत्त्यनापत्तेः बहुतरदुःखस्यतत्रजायमानत्वा
दल्पदुःखस्यापिकुतश्चिद्बलवत्त्वेनानुगतबलवत्त्वस्यनिर्वक्तुमशक्यत्वाच्चेति कृतस्यविधिशक्यत्वसंभावनेतिकेचित्तल्लपितं
[illegible] अथोक्तयुक्त्यानिष्टत्वेनानिष्टसाधनत्वाभावज्ञानस्यनप्रवर्त्तकत्वं किंत्वगम्यांनगच्छेत्कलंजंनभुंजीतेत्यादिवाक्या
नो [illegible]पपत्तयेविशिष्यनरकत्वादिरूपेणतदसाधनस्यतथात्वंवाच्यम् तथाचशक्यानंत्यंशक्तिग्रहानुपपत्तिश्चेतिचेन्न द्वे-
षविशेषतावच्छेदकत्वोपलक्षितनरकत्वाद्यवच्छिन्नसाधनतात्वावच्छिन्नाभावकूटे तादृशाभावत्वेनानुगतएवविधिप्रत्यय
स्यशक्तिःउपलक्षणत्वादेवचद्वेषविषयतावच्छेदकत्वंपरित्यज्यनरकत्वाद्यवच्छिन्नसाधनत्वमात्रंप्रतीयते क्वचिन्नरकासा-
धनत्वंक्वचिद्दुःखासाधनत्वंप्रतीयतेइत्यत्रतात्पर्यमेवनियामकम् नचातिप्रसक्तस्योपलक्षणत्वाभ्युपगमेप्रमेयत्वस्यैवतथात्वमस्तु
[illegible]त्वादितिवाच्यं सुखाद्यसाधनत्वस्यविध्यर्थताविरहेणतत्साधारणप्रमेयत्वस्योपलक्षणत्वासंभवात् अन्यतानजनकसाधारणरू-
[illegible]साधारणतावच्छेदकत्वाद्द्विष्टसाधारणरूपस्यापिद्विष्टोपलक्षणताकल्पनानौचित्यात् तात्पर्याभावादेवसुखाद्यसाधनता-

वोधनापत्तौ तस्य विध्यर्थत्वे पि न क्षतिरिति गुरुमतयुक्तं तथा सति तात्पर्येण पुरुषकामनां न भुंजीतेति प्रयोगापत्ते तस्माद्द्वेषविषयतावच्छे
दकत्वोपलक्षितनरकत्वाद्यवच्छिन्नसाधनतात्वावच्छिन्नप्रतियोगिताकाभावत्वेनानुगतेनारण्याभावे विधिप्रत्ययस्य शक्तिरिति प
रिष्कृतप्राचीननैयायिकमतं नव्यरीतिमवलम्ब्य दूषयति बलवदनिष्टेति निरुक्तस बलवदनिष्टाजनकत्वज्ञानं चेत्यर्थः न हेतुः
न प्रवृत्तिहेतु कश्चित्तु एवं पाठः तथा च न तद्विषयस्य विधिवाच्यत्वमिति भावः तस्य प्रवृत्त्यजनकत्वे हेतुमाह द्वेषाभावेनेति मधुवि
षसंपृक्तान्नभोजने इष्टसाधनताज्ञानाद्द्वेषविषये प्रवृत्तिवारणाय तद्विषयकप्रवृत्तिं प्रति तद्विषयकद्वेषस्य प्रतिबन्धकतया
प्रतिबन्धकाभावविधया अवश्यक्लृप्तनियतपूर्ववर्तिताकद्वेषाभावेनैवोपपत्तेर्बलवदनिष्टसाधनत्वज्ञानस्य न हेतुत्वं तेनान्यथासि
द्धेरित्यर्थः ननु अन्वयव्यतिरेकसहचारज्ञानस्य कारणताग्राहकस्य भयत्रसत्त्वात्तेनैवास्यान्यथासिद्धिर्दुर्वारेत्यत आह आस्तिकेति सच
परलोकाङ्गीकारवान् तदनङ्गीकर्तुर्नरकसाधनताज्ञानासंभवात्तद्विशेषणमुपात्तम् आस्तिकस्य नरकसाधनताज्ञाने ततो द्वेषाव
श्यंभावेन प्रवृत्त्यसम्भवादाह कामुकेति तत्त्वचोत्कटरागवत्त्वं रागे उत्कटत्वं जातिविशेषो विषयिताविशेषो वा प्रवृत्तेरित्यस्यागं
म्यागमने इत्यादिः द्वेषाभाववद्भार्यामित्यनेन द्वेषसामग्रीवैकल्यं दर्शितं तच्च विषयतया द्वेषं प्रति उत्कटेच्छासामग्रीविरहविशि
ष्टइष्टसाधनताज्ञानस्य हेतुतया तादृशसामग्र्याः तेन रूपेण प्रतिबन्धकतया बोध्यम् व्यभिचारादेवेति न हेतुरिति पूर्वेणान्वितं
अत एव स्येनेनाभिचरन् यजेतेत्यत्र न विध्यर्थबाध. बलवदनिष्टाननु बन्धित्वज्ञानस्याप्रवर्तकत्वेन तद्विषयस्य तस्य विध्य
र्थत्वस्यैकाभावादिति भाव उपसंहरति तस्मादिति इष्टसाधनत्वमेवेत्येवकारेण कृतिसाध्यत्वबलवदनिष्टाननुबन्धित्वयोर्व्यव
च्छेदः आद्यस्य लौकिकप्रमाणेनैवावगमादन्त्यस्य प्रवर्तकज्ञानाविषयत्वादिति भाव प्रवर्तनेति लिङाद्यर्थ इत्यर्थ ॥

इष्टाभ्युपायत्वादित्यादि इष्टसाधनत्वादन्यः कृतिसाध्यत्वादिः क्रियासु यागादिरूपासु पुंसां प्रवर्त्तकोन ज्ञाननिष्ठप्रवृत्तिजनक
तायां विषयतयावच्छेदकोनेत्यर्थः यजेतेत्यादिवाक्यांतर्गतलिङादिशक्योनेतियावत् चोहेतौ यतः प्रवृत्तिहेतुं तद्धेतुतावच्छे
दकमेव प्रवर्त्तनापदेन व्यपदिशंतीत्यर्थः परेतु बलवदनिष्टाननुबंधित्वज्ञानस्य द्वेषाभावेनान्यथासिद्धतयाऽप्रवर्त्तकत्वेपिकृ
तिसाध्यताज्ञानस्य प्रवर्त्तकतायाः सर्वसिद्धत्वेन तद्विषयस्य तस्य विध्यर्थत्वमावश्यकम् नच तद्धेतुतायामेव मानाभावः कृ
त्यसाध्ये प्रवृत्तिस्तु कृत्यसाध्यता ~~~ ज्ञानस्य प्रतिबंधकतया तत्र तदभावादेव नेतिवाच्यं कृत्यसाध्यताज्ञानस्य प्रतिबंधकत्वे

उक्तंच मंडनमिश्रैः पुंसां नेष्टाभ्युपायत्वात्क्रियास्वन्यः प्रवर्त्तकः प्रवृत्तिहेतुं धर्मंच प्रवदंति प्रवर्त्तनामिति प्र
पंचितं चैतद्वैयाकरणभूषणे॥

ऽऽकृतिसाध्यत्वाभावतद्व्याप्यतदवच्छेदकधर्मदर्शनादीनां प्रतिबंधकत्वस्य वक्तव्यं
तया तावदभावानां प्रवृत्तिंप्रति हेतुताकल्पनापेक्षया कृतिसाध्यताज्ञानत्वेन हेतुतायां लाघवस्य स्फुटतरत्वात् कृतिसाध्यताज्ञा
नाभावस्य सर्वदा सत्वेन प्रवृत्त्यापत्तेश्च अपिच कृतिसाध्यताज्ञानस्य प्रवर्त्तकत्वे कृतिसाध्यत्वप्रकारक पाकविशेष्यकज्ञानत्वा
वच्छिन्नाभाव मानसं प्रति पाकादिगोचरप्रवृत्तिसामग्र्याः प्रतिबंधकत्वं न कल्प्यते इति लाघवं तादृशप्रवृत्तिसामग्रीकाले पाक
विशेष्यक कृतिसाध्यत्वप्रकारक निर्णयस्यावश्यकत्वेन तस्य च स्वरूपसत एवोक्तज्ञानाभावमानसेल्कप्त प्रतिबंधकतयैवो
पपत्तेः भवन्मते तादृशमानसे तादृशप्रवृत्तिसामग्र्याः प्रतिबंधकत्वकल्पनेन गौरवं स्पष्टमेव एवमप्रामाण्यविशिष्टपाक

रकज्ञानवानहमिति मानसे पाकगोचरप्रवृत्तिसामग्र्याः प्रतिबन्धकत्वाकल्पनेनापि लाघवम् तादृशविशिष्टविषयिताशालिमानससा
मग्रीकाले प्रामाण्यज्ञानास्कन्दितो कृज्ज्ञानस्यावश्यकत्वेनाप्रामाण्यज्ञानानास्कन्दितपाकादिविशेष्यककृतिसाध्यत्वप्रकारकज्ञानघ
टिततादृशप्रवृत्तिसामग्रीतादृशमानससामग्र्योर्मेलनस्यैवाभावात् भवन्मते कृतिसाध्यत्वाभावप्रकारकपाकादिविशेष्यकज्ञानाभा
वघटिततादृशप्रवृत्तिसामग्रीतादृशमानससामग्र्योर्मेलने बाधकाभावेन तादृशमानसेन तादृशप्रवृत्तिसामग्र्याः प्रतिबन्धकत्वस्यावश्य
कल्पनीयत्वेन गौरवस्यातिस्फुटत्वात् न चैवं दिशानिष्टसाधनत्वज्ञानाभावादीनामपि हेतुता निरसनीयेत्याहुः गुरुमतेनेष्टसाधनत्वनि
ष्पर्थे क्षणिकतयावगते यागे तस्य बोधयितुमशक्यत्वादेव परम्परासाधनत्वमपि तथा द्वारानुपस्थितेः शाब्दबोधप्रयोजकान्वय
प्रयोजकरूपवत्त्वयोग्यतायास्तत्राभावात् साधनतासामान्यबोधस्त्वेकविशेषबाधे तदितरप्रकारकत्वनियमादस्तु भवतु किंकः
किंच यागेन कर्तव्यतया प्रतीयते काम्यादन्यत्काम्यं हि न पूर्ववर्त्ति साधनमेव कामीकर्तव्यतया वेतीत्यस्यान्यत्र स्फुटत्वात् तस्माद्धु
रीभूतकाम्याव्यवहितपूर्ववर्त्तिसाधनमपूर्वमेव कार्यत्वेन शाकाम् कार्यत्वं च कृत्युद्देश्यत्वं तत्र विशेषणीभूतकृतेराश्रयविषय
योराकाङ्क्षाया विषयतया यागाश्रयतया स्वर्गकामः संबध्यते सुखदुःखाभावादेर्लौकिकप्रमाणेनैवापूर्वस्यापि वेदेन कृत्युद्दे
श्यत्वबोधनादपौरुषेयेन स्विन्नप्रामाण्यशङ्कानवकाशात् तस्य तत्त्वम् तथा च स्वर्गकामो यजेतेत्यत्र स्वर्गकामवत्कृत्युद्देश्यो या
गविषयको नियोग इति बोधः अत्रापूर्वस्य यागविषयककृत्युद्देश्यत्वमेव यागविषयकत्वम् यागस्य तादृशकृतिविषयत्वे पु
रुषस्याश्रयत्वे चान्वयितावच्छेदकमपूर्वकारणत्वस्यैव योग्यता यथा घटेन जलमाहरेत्यत्र छिद्रेतरघटत्वं योग्यतावच्छेदकोप
स्थितिर्घटेनेत्यादावर्थाध्याहारात् प्रकृते चोपादानिकप्रमाणवशात् चकोव तच्छक्यैव वा शक्योपस्थितिमभ्युपगमे लक्षणोच्छेदः

तिनसां प्रतं स्वशक्यान्वयबोधकस्यैव स्वोपपादकसकलपदार्थबोधकत्वोपगमान्नच गंगायां घोष इत्यादौ गंगादिपदानां स्वशक्या-
न्वयबोधकत्वं येन तदुपपादकसकलपदार्थबोधनायौपादानिकप्रमाणावकाशः स्यात् अजहत्स्वार्थलक्षणानुनासन्मतसिद्धा-
तथा च लीयत्वेन कार्यबोधो नियोज्यः समभिव्याहृतपदोपस्थापितफलकामश्च तथेति काम्ये स्वर्गकामो नियोज्यः एवं च वेदबो-
धितमपूर्वमुद्दिश्य पुरुषप्रवृत्त्युपपत्तौ नेष्टसाधनत्वं विध्यर्थः इच्छाविषयसाधनतात्वेन तत्र शक्तौ प्रवर्त्तकाज्ञानानिर्वाहः स्वर्ग-
जनकतात्वेन शक्तौ नानार्थतापत्तेरिति तन्मतस्य विकल्पग्रस्तत्वाच्च अपि च नित्यनैमित्तिकस्थलेषु चित्वकालजीवितोराहूप
रागवतश्च मम संध्यास्नानविषयको नियोग इति बोधात् फलापेक्षाभवन्मा तेन तु चंद्रसूर्यग्रहे स्नायादहरहः संध्यामुपासीतेत्या-
दौ फलाश्रवणाद्विध्यर्थबाधः प्रसज्येत मम तु वैदिककर्मणि वेदबोधितमपूर्वमुद्दिश्यैव पुरुषः प्रवर्त्तते तस्यैव वेदेन पुरुषार्थ-
त्वबोधनात् काम्ये फलावाप्तिरानुषंगिक्येव अत एव नित्येपि तदुद्देशेन प्रवृत्तिरुपपद्यते इत्याहुः तदपरे न क्षमंते लौकिकप्रवर्त्तक-
त्वेन सर्वसंमतं यदिष्टसाधनत्वज्ञानं तद्विषये इष्टसाधनत्वे विधिशक्तिकल्पनयैव विधेः प्रवर्त्तकत्वोपपत्तौ नियोगस्य विधिवा-
च्यत्वे मानाभावात् वेदबोधितस्वर्गसाधनत्वानुपपत्त्या हि तत्कल्पनं न च तस्य पूर्वमुपस्थितिरस्ति येन तत्र शक्तिग्रहः एकविशे-
षबाधे सामान्यज्ञानस्य तदितरप्रकारकत्वनियमेपि साक्षात्साधनतातिरिक्तसाधनतात्वेन बोधे बाधकाभावात् तादृशसाधन-
तायोग्यतावच्छेदकं च परंपराघटकमपूर्वं तथा च स्वर्गसाधनत्वशक्त्यैव निर्वाहे औपादानिकप्रमाणवशादपूर्वोपस्थितावपि
न तद्वाच्यम् अपूर्वानुपस्थितौ परंपरासाधनत्वमपि कथं वेदो बोधयेदिति त्वनुपस्थितेः पूर्वं कथं शक्तिग्रह इत्यनेन तुल्ययोग-
क्षेमम् एवं काम्याव्यवहितपूर्वं साधनं कामी कर्त्तव्यतया वेत्ति नित्यपि नकाम्यसाधनताज्ञानस्यैव प्रवर्त्तकत्वान्नतु तत्राव्यव-

द्वितत्वनिवेशोपिगौरवान्मानाभावाच्च दृश्यतेचतदर्थिनस्तत्प्रयोजकेजलाहरणादौप्रवृत्ति इष्टसाधनत्वेयथाशक्तिप्रहस्तयोक्त
अपूर्वस्याशक्यत्वेपि यथानित्यनैमित्तिकेप्रवृत्तिस्तथोपपादितम् अस्तुननच नत्वेवसादुरुपपादा निष्फलत्वात्‌दुःखैकफलत्वाच्चप्र
त्तिमात्रदृष्टसाधनताज्ञानस्यहेतुत्वावधारणात् प्रवृत्तिविषयसाध्यत्वेसतीष्टत्वरूपसाध्यत्वमपिनापूर्वस्येननदुद्देशेनापिप्र
वृत्ति. सम्भाव्येत निष्फलतयावगतेप्रवृत्तिस्तुश्रुतिसहस्रेणाप्युत्पादयितुमशक्येतिवेदबोधितत्वान्नित्येप्रवृत्तिरितिचेन्नतारण
मात्र अतएवयज्ञोदानंतपः कर्मेत्यादिनाऽनिर्दिष्टोपिप्रत्यवायपरीहारः स्वर्गादिफलमनुद्दिश्यक्रियमाणानामेषांफलंभवतीत्यर्थ
केनाष्टादशाध्यायेभगवद्गीतासुपावनत्वमुक्तं किंचपचेतेत्यादिलौकिकविधेरिष्टसाधनत्वबोधकत्वेनप्रवर्त्तकत्ववद्वैदिकविधे
रपितत्त्वमेवप्रवर्त्तकत्वात्ज्ञाननिर्वाहेतस्यानुपस्थितापूर्वशक्तिकल्पनंनिष्प्रमाणकमेवेति परेतुलिङादिश्रवणेऽयंमांप्रेर
यतीतिनियमेनप्रतीतेरभिधानामकः प्रेरणापरपर्य्यायोव्यापारोलिङादिवाच्यः साचलिंगसंख्यानन्वयित्वाद्व्यापारपदेनप्रव
र्त्तकनिष्ठत्वात्प्रवर्त्तनापदेनचव्यवह्रियते प्रेरणात्वेनतस्याःसविषयत्वमपिशक्यतावच्छेदकंच प्रैष्यादिधात्वर्थतावच्छेदक
यासिद्धप्रेरणात्वमखंडोपाधिः सचव्यापारः सम्भवाल्लोकेप्रवर्त्तकपुरुषनिष्ठोभिप्रायविशेषएवततःप्रवर्त्तकत्वंचसिद्धान्तमु
चारयितृत्वम् वेदेतुअपौरुषेयवाल्लिङ्श्च तच्छब्दस्वरूपएव तत्वेसतिस्वतंत्रत्व राजादिप्रेरितपदानेलिंङगुच्चारयितृत्वे
पिप्रवर्त्तकत्वेनाव्यवह्रियमाणत्वात्स्वतन्त्रेति अदृष्टयाप्रोक्तयाचतयास्वविषयेइष्टसाधनत्वानुमानंततश्चप्रयोज्यप्रवृत्तिःश्रा
श्राद्धभुंक्ष्वेत्यतो विषभोजनेइष्टसाधनत्वानवगते एष्टोक्तयेति आप्तोक्तयापि विषंभुंक्ष्वमाचास्यगृहेभुंक्थाइत्यादि
कयापितस्मिन्निष्टसाधनत्वानुमानादृष्टेति तत्रविषभोजनविषयकाभिप्रायस्यतदीयद्वेषविशिष्टत्वान्नव्यभिचार ॥

भवतु वा लिङादिसमभिव्याहारे व्यापारांतरस्यानुभवात्सर्वत्र लिङार्थं न शब्दस्वरूपेव सा अतएव हेतुमति चेति सूत्रे भाष्ये लिङादिश
ब्दाप्रयोगरूपप्रयोजककर्त्तृव्यापारस्य सत्त्वादित्याशयेन पृच्छतु मां भवानित्यत्र णिच् कस्मान्न भवतीति प्रश्ने अकर्तृत्वादित्युत्तरं स
क्रियप्रेरणायां णिच् निष्क्रियप्रेरणायां लोडादि न त्वप्रयोजकइत्यत्र तत्पदेन व्यापारविशिष्टः कर्त्तोच्यत इति तद्भावः अथापि कथं चि
कर्त्ता स्यादेवमपि न दोषो लोटोक्तत्वात्प्रेषणस्य णिज्न भविष्यतीत्युक्तम् ततश्चाह त्वेव प्रेरणाया विध्यर्थत्वं लभ्यते विधिनिमंत्रेति
सूत्रभाष्येपि विधिः प्रेरणमित्युक्तेश्च तस्मान्नेष्टसाधनत्वादि विध्यर्थः किंचेदं तेइष्टसाधनं तस्मात्त्वं कुर्विति सांसारिकव्यवहाराद
पि न तस्य विध्यर्थत्वं पौनरुक्त्यापत्तेः पौनरुक्त्यस्य सर्वत्रेष्टसाधनत्वबोधनतात्पर्यकत्वेपि तस्मादित्यस्यानन्वयापत्तेश्चेत्याहुः न
चप्रायशो भट्टमतानुवाद एव यतो भट्टमते लिङर्थोभिधाख्यो व्यापारः स च लोके प्रयोक्तृपुरुषनिष्ठोभिप्रायविशेष एवेत्यादि प्रा
ग्वत् वेदे त्वन्यस्यासंभवाल्लिङाद्यं तशब्दनिष्ठ एव सः स मवेतश्चात एव सा शाब्दी भावनेति व्यवह्रियते भावनायाः शब्दार्थभेदेन
द्वैविध्यादाख्यातवाच्यार्थीति व्यवह्रियते भावनात्वेन लिङर्थशाब्दीभावनायाः सविषयत्वमपि भावनाया भाव्यकरणेतिकर्त्तव्यतारू
पांशत्रयविशिष्टत्वादभिधाभावनायाः सविषयकत्वेनावगतायाः किं भावयेदिति भाव्याकांक्षायां समानप्रत्ययोपात्तत्वप्रत्यासत्त्यांश
त्रयविशिष्टास्वविषयप्रवृत्तिरूपाख्यातवाच्यार्थीभावनाविषयत्वेनोपतिष्ठते इयमेव साध्याकांक्षेति व्यवह्रियते साध्यताख्यविष
यतयेव तस्याः सविषयत्वात् एवं च तस्याः साध्यत्वेवगते केनेति करणाकांक्षायां लिङादिपदज्ञानं करणत्वेनान्वेति करणत्वं च
भावनाभाव्यनिर्वर्त्तकत्वमेव कुठारादेरपि पुरुषव्यापारनिर्वर्त्यच्छिदानिर्वर्त्तकत्वेनैव करणत्वात् इयमेव भावनाकरणाकां
क्षेत्युच्यते कथंकर्मेतिन्यायादुपाये द्वेषेणालस्यादिना वा प्रवर्त्तमानपुरुषं प्रति प्रशस्तफलवत्ताबोधनेन द्वेषाद्यपसारणेनार्थ

वाद्वाक्यजन्याभावनारूपास्तुतिः सहकारिकारणमितीयमितिकर्तव्यतेत्युच्यते एवमार्थीभावनायाः अप्यत्र यत्नेशिष्टोनन्तर
वगतौ किंभावयेदित्याकांक्षायां स्वर्गकामादिपदसन्निधानात्स्वर्गो भाव्यतयान्वेति स्वर्गं भावयेदिति यद्यपि तद्व्यापारस्त्यागविष
योपितयापितस्यापुरुषस्वरूपतयापुरुषार्थत्वेनकरणत्वेनैवोपस्थित्याचनभाव्यत्वम् अतएवतत्समानाधिकरणज्योतिष्टोमादि
पदान्नतीया केनेत्याकांक्षायांत्याग. करणत्वेनान्वेति करणत्वंतूक्तमेव सहकार्याकांक्षारूपकथंभावाकांक्षायांचसमिधोयजती
त्यादिवाक्यावगतसमिन्नामकयागादिक्रियाजातमितिकर्तव्यतयान्वेतीत्यधिकमन्यत्रोपपाद्यम् तदुक्तं अभिधाभावनामाहु
रन्यामेवलिङादयः अर्थात्मभावनात्वन्यासाचात्मातस्यगोचरः १ सिद्धोभिधासेवचशब्दभावनाभाव्याचतस्याः पुरुषप्रवृ
त्ति. सबंधबोधः करणंतदीयप्ररोचनाचागतयाप्रयुज्यनइति २ उक्तोर्थः तत्रपूर्वोक्तमते भट्टमतादियान्विशेषोयद्भट्टमते
ऽभिधाख्योवैदिकलिङर्थोव्यापारः शब्दसमवेतस्तदतिरिक्तश्च तस्मिंश्च लिङाद्येतच्छब्दात्मकएवलोकवेदसाधारणश्च
सविषयकत्वंतुमतद्वयेप्यविशिष्टमिति अत्रवदंति अभिधालिङादिनिरूपिताशक्तिरेव नतुतदतिरिक्तः कश्चनशब्दस
मवेतोव्यापारः मानाभावात् विधेः प्रवर्तकत्वस्यपूर्वमुपपादनात्तदनुपपत्तेरप्यभावात् अन्यथाशब्दातिरिक्त. शब्दसम
वेतएकोव्यापारः कल्पनीयस्तस्यचस्वप्रवृत्तौ परप्रवृत्तौवाकारणत्वेमास्तुप्रसक्तत्वेनकारणत्वम् प्रवर्तनात्वेनपरनिष्ठव्याप
रबोधकत्वेनक्लृप्तस्यशब्दस्यस्वनिष्ठव्यापारबोधकत्वसविषयकत्वंपूकल्पनीयमिति गौरवस्यस्फुटत्वाच्च प्रेरणायाविध्य
र्थत्वेपिसामान्यस्यविशेषेपर्यवसानात् कोसौव्यापारइति विशेषगवेषणायां समीहितसाधनत्वमेवसइत्येवचसकृत्सुधियं
लिङः स्वदर्थकत्वं विनाप्रवर्तकत्वस्यैवासंभवात् प्रेरणाविषय यावदिति बोधस्येष्टसाधनत्वाद्यः विषयकस्यप्रवर्तकत्वम्॥

लोकविरुद्धमेव मखकारणस्य स्वनिष्ठव्यापारद्वारैव फलजनकत्वमिति नियमस्तु नास्त्येव व्याप्तिज्ञानादौ व्यभिचारात् नस्मात्लिङादि
जन्यबोधविषयाभिधायाइष्टसाधनत्वादिज्ञाननिरपेक्षायाः प्रवर्त्तकत्वं निर्युक्तिकमेव शब्दरूपप्रेरणावादिनापि तद्विषयइष्टसा
धनत्वानुमितिद्वारैवोक्तयुक्त्या प्रवर्त्तकत्वं वाच्यम् तच्च वैदिकविधिस्थले न संभवति तस्यैव महाभूतस्य निश्वसितमेतद्यदृग्वे
दो यजुर्वेदः सामवेद इति श्रुत्युपष्टंभेन निश्वसितवद्वेदे तैर्जन्यत्वांगीकारेण यथार्थज्ञानवदुच्चरितत्वरूपोक्तत्वरूपविशेषणवै
कल्येनोक्तानुमानाप्रवृत्तेः एवं सविषयत्वमप्यात्मविशेषगुणातिरेकिण्यास्तस्याः सर्वतंत्रविरुद्धं न च प्रेरणैव स्वातंत्र्येण प्रवृत्ति
हेतुः स्वतंत्रप्रवृत्तौ व्यभिचारात् सर्वद्रुमेस्वभूत्यर्थे प्रवर्त्तेनद्रुति समीहितसाधनताज्ञानप्रवर्त्तकताप्रतिपादकहेतुमतिचेति सू
त्रभाष्यविरोधाच्च कः प्रयोज्यस्य प्रेरणपार्थो यदभिप्रायेषु सज्जनद्रुति तत्सूत्रस्य भाष्येण णिजर्थप्रेरणायाश्च पिस्वातंत्र्येणा
प्रवर्त्तकत्वबोधनाच्चेति वैदिकविधेः प्रेरणार्थकत्वासंभवेन प्रवर्त्तकत्वानुपपत्त्येष्टसाधनत्वार्थकत्वमेवांगीकरणीयमेवं चा
लौकिकविधेरपि तच्छक्त्यैव प्रवर्त्तकत्वोपपत्तौ न तदर्थोऽपि साभिप्राय एव न तत्र विध्यर्थ इति कल्पस्तु वक्ष्यमाणाचार्यमतनिं
रासेनैव निरस्तः विधिः प्रेरणमिति भाष्यं तु प्रेर्यते प्रवर्त्यते अनेनेति व्युत्पत्त्या प्रवर्त्तकज्ञानविषयेष्टसाधनत्वपरम् ज्ञानस्य त
द्विषयकत्वेनैव प्रवर्त्तकत्वात् यदपि तदुपष्टंभकतया पृच्छतु मां भवानित्यादि भाष्योपन्यसनं तदपि नास्माकं प्रतिकूलं यत
स्ते न प्रवर्त्तकज्ञानजनकत्वेन प्रवर्त्तनापदव्यपदेश्याया लोडाद्यं तशब्दप्रयोगरूपायाः प्रेरणाया णिजर्थत्वं प्रतिपाद्यते ननु वि
ध्यर्थत्वमपि अर्थभेदस्य दर्शितत्वात् अकर्त्रत्वादित्यनेनापि गमयत्यादेर्गच्छंतं प्रेरयतीति व स्यच्छतुद्रुत्यस्य प्रच्छंतं
प्रेरयतीति विग्रहस्यादर्शनेन कर्त्रसंबद्धधात्वर्थविषयकप्रवृत्तिजनकज्ञानानुकूलायास्तस्या णिजर्थत्वाभावप्रतिपादना

धनतादिज्ञानहेतुतायाआवश्यकत्वेनतद्विषयेष्टसाधनत्वादीनांविध्यर्थत्वोपगमेनैवप्रवृत्तिनिर्वाहेऽस्माभिप्रायस्यविध्यर्थत्वे
मानाभावात् नहीष्टसाधनत्वज्ञानमंतरेणाप्रेच्छाविषयत्वज्ञानमात्रात् प्रवृत्तिः कस्यापिदृश्यतेस्वतंत्रप्रवृत्तौव्यभिचारेणनाभिप्रा
यज्ञानस्यप्रवर्त्तकत्वासंभवाच्चेत्यलम् प्रकृतमनुसरामः प्रपंचितंचैतदिति बलवदनिष्टाननुबंधित्वज्ञानस्यप्रवर्त्तकतानिराक
रणमिष्टसाधनताज्ञानस्यप्रवर्त्तकत्वावधारणंचेत्यर्थः प्रपंचसूक्तप्रायः॥ ॐ ॥आदिनेति प्रेरणादौचेत्यत्रोपात्तादिशब्देनेत्यर्थः

आदिनाहेतुहेतुमतोर्लिङ् आशिषिलिङ्लोटाविति सूत्रोक्ताहेतुहेतुमद्भावादयोगृह्यंते योब्राह्मणायावगुरेत्तं शा
तेनयातयेदितियथा लुङर्थमाह भूतमात्र इति भूतसामान्य इत्यर्थः भूते इत्यधिकृत्यलुङिति सूत्रात् अत्रविद्य
मानध्वंसप्रतियोगित्वं तच्चक्रियायां निर्बाधमिति विद्यमानेपिघटेघटोभूदितिप्रयोगः विद्यमानध्वंसप्रतियोगि
घटाभिन्नाश्रयकउत्पत्त्याद्यनुकूलोव्यापार इतिबोधः अयमत्रसंग्रहः कालोद्विविधः अद्यतनोऽनद्यतनश्च आ
द्यस्त्रिविधः भूतभविष्यद्वर्त्तमानभेदात् अन्त्योद्विविधः भूतोभविष्यंश्च तत्रवर्त्तमानत्वेलट् भूतत्वमात्रेलुङ् भ
विष्यत्त्वमात्रेलृट् हेतुहेतुमद्भावाद्यधिकार्थविवक्षायामनयोर्लृङ् अनद्यतनेभूतत्वेनविवक्षितेलङ् तत्रैवपरो
क्षत्वविवक्षायांलिट् तादृशेभविष्यतिलुट् इतिद्रष्टव्यः॥ ११ योब्राह्मणायावगुरेदिति यत्कर्तृकोब्राह्मणोद्देश्यकोवधोद्य
मस्तत्कर्मिकाताडशब्दबोध्यमजन्यात्रासंवत्सरयातनेतिबोधः हेतुहेतुमतोर्लिङि त्यनेनप्रकृत्यर्थयोः भावेलिङोविधानात्॥ ॥

वर्त्तकत्वेननिवर्त्तकत्वेनवावेदस्यप्रामाण्यात्तेनन्नधोद्यमनिवृत्तिपरत्वग्रहेनस्नान्तावगुरितव्यमितिविधि॰ कल्प्यतइतिभाव मा॰
नपदंरूढत्वार्थकमित्यभिप्रायवानाह भूतसामान्यइति तेनविशेषविवक्षायालङादीनामवकाशसूचयति भूतेलुङिति भूतइत्यं॰
धिकृत्यलुङ् इतिसूत्रादित्यर्थः ननुवर्त्तमानध्वंसप्रतियोग्युत्पत्तिकत्वंभूतत्वम् अतएवनाशस्यविद्यमानतादशायामपिवि
नष्टोघटइतिप्रयोगस्तदुत्पत्तेर्वर्त्तमाननाशप्रतियोगित्वात् तथाचयत्रोत्पत्तिरेव धात्वर्थस्तत्रोत्पत्तेर्ध्वंसाभानप्रसंगोऽतआह॰
वर्त्तेति भूतइतिसूत्रेइत्यर्थः वर्त्तमानेत्यादि नचोक्तरीत्या. असन्मतेनष्टस्यादेर्नाशानुकूलव्यापारार्थकतयाकालान्वयस्या
ति व्यापारएवसमर्थितत्वेनचतदप्रसक्तेरुत्पत्त्यघटितत्वेनध्वंसाभानासंभवाच्च क्रियायामिति फलानुकूलायांतस्यामित्यर्थः
द्यमानेपीत्यपिनासमानप्रत्ययोपात्तत्वप्रत्यासत्त्याख्यातार्थेकारकेकालान्वयोपगमेउक्तप्रयोगानुपपत्तिः सूच्यते नैया
यिकास्तु उत्पत्तिघटितत्वेनलाघवादुक्तार्थएवभूतपदस्यशक्तिः परंतुनष्टस्त्यादौवानाशातिरिक्तस्यव्यापारांतरस्यानतुभव
त्तेनोत्पत्तिघटितेप्रत्ययस्यलक्षणावश्यकीत्याहुः॥

भूते भाविनीति कार्यकारणभावापन्नप्रकृत्यर्थयोर्भूतत्वे भविष्यत्वे वा गम्यमान इत्यर्थः हेतुहेतुमद्भावादीति आदिना शक्यादिपरिग्रहः तत्र भविष्यदर्थे उदाहरणमाह सुवृष्टिश्चेदिति अत्रैकस्यैव धात्वर्थस्य कर्त्तृरूपोपाधिभेदेन कार्य्यकारणभावावगतिरु

लृङर्थमाह। सत्यामिति क्रियायाअतिपत्तिरनिष्पत्तिः तस्यां गम्यमानायां भूते भाविनि हेतुहेतुमद्भावे सतिलृङित्यर्थः लिङ्निमित्ते लृङ् क्रियातिपत्ताविति सूत्रात् लिङो निमित्तं हेतुहेतुमद्भावादि यथा सुवृष्टिश्चेदभविष्यत् सुभिक्षमभविष्यत् वह्निश्चेत्प्राज्वलिष्यत् ओदनमपक्ष्यदित्यादौ अत्र वृष्ट्यभिन्नाश्रयकप्रज्वलनानुकूलव्यापाराभावप्रयुक्त ओदनाभिन्नाश्रयकविक्लित्त्यनुकूलव्यापाराभाव इति शाब्दबोध इति रीत्या द्रष्टव्यम् अस्य स्वार्थनिर्देश उपलक्षणम् अर्थान्तरेपि बहुशो विधानदर्शनात् प्रसिद्धत्वादेष्वेवार्थेषु शक्तिरन्यत्र लक्षणेति मतान्तररीत्या चोक्तम् एतेषां क्रमनियामकश्चानुबन्धक्रम एव अत एव पञ्चमो लकार इत्यनेन मीमांसकैर्लेड् व्यवह्रियत इति दिक्॥॥ इति वैयाकरणभूषणसारे लकारविशेषार्थनिरूपणम्॥॥ ॥

तत्र तु स्वरूपतोभिन्नयोस्तयोरिति विशेषः व्यापाराभावेति धात्वर्थयोर्भविष्यत्त्वप्रदर्शनार्थं परमभावविशेष्यकबोधोत्कीर्तनं वृष्ट्यभिन्नाश्रयकभाविप्रज्वलनजन्यौदनाश्रयकविक्लित्त्यनुकूलव्यापार इति शाब्दबोधः सूचितः प्रयोज्येति व्यापाराभावान्वयिप्रयो

ज्यत्वोक्तौ र्नेनचवह्निप्रज्वलनौदनपाकयोः कार्य्यकारणभावप्रदर्शनाय यदभावोयदभावप्रयोज्यस्तत्तज्जन्यइतिनियमात् तथाचप्र
ज्वलनौदनपाकाभावेवह्निप्रज्वलनाभावप्रयोज्यत्वेऽवगतेतत्प्रतियोगिनोस्तयो कार्यकारणभावःसुबोधोभवतीतिभावः एवंभू
ते परस्परेणस्पृहणीयशोभं नचेदिदद्वंद्वमयोजयिष्यत् अस्मिन्द्वयेरूपविधानयत्नः परस्तु प्रजानांविफलोभविष्यद्यदिदं
वद्वतोनाभविष्यदित्यादिबोध्यमित्याह एवरीत्येति अयचेतिवर्त्तमानेलडित्यादिनोपात्तइत्यर्थः अर्थांतरेपि अर्हप्रशं
साप्राप्तकालाद्यर्थेपीत्यर्थः एषु वर्त्तमानत्वादिषु शक्ति तत्तेतद्रूपापदार्थांतररूपावा अन्यत्र अर्हाद्यर्थे मतांतररीत्याचे
बोधकत्वमेवशक्तिरितिवदतामस्माकंतुकेषांचित्प्रयोगोपाधित्वमितरेषामशक्यत्वमेवेतिभाव. अनुबंधकमइति अकार
ाद्यनुबंधकमइत्यर्थः ननुयत्रप्रत्ययस्यतिबादेरदर्शनंतत्रद्योतकत्ववाचकत्वंवेतिपक्षद्वयेप्यनुपपत्तिः वाचकस्य
तकस्यवाऽसत्त्वेनवर्त्तमानत्वादिबोधस्योपपादयितुमशक्यत्वादतआह द्विगिति तदर्थेस्तुपदंवाचकमितिपक्षे प्रकृ
प्रत्ययविभागकल्पनयावाचकत्वंतत्रारोप्यपदशक्तिरेवव्युत्पाद्यते यत्रप्रत्ययस्यप्रकृतेर्वाऽश्रूयमाणत्वंतत्रश्रूयमाण
स्यैवतदर्थकत्वंकल्प्यते तदाहुः श्रियमाणंलुप्यमानार्थाभिधायीति अतएवव्यतिसेइरित्यादावित्यादौप्रत्ययमात्रात्प्र
कृत्यर्थविषयकोबोधइत्यादिः ॥२१॥ ॥ ॥इतिभूषणसारदर्पणेलडाद्यर्थनिर्णयः॥ ॥ ॥ ॥

अवसरसंगत्या सुबंतार्थे निरूपणीये प्रातिपदिकार्थविशेष्यत्वात् क्रियाकांक्षितत्वाच्चादौ विभक्त्यर्थनिरूपणमित्यभिप्रायवानाह
सुबर्थमिति आश्रयो र्थ इति किंचिद्धर्मानवच्छिन्नाश्रयतावानित्यर्थः तेन चतुर्थीपंचम्योरर्थयोरुद्देश्यावध्योराश्रयात्म
कत्वेपि न क्षतिः तत्र द्वितीयाया आश्रयार्थकत्वे मानमाह तथाहीत्यादिना ननु यथाश्रुते कर्तुरीप्सिततममित्यनेन कर्त्र
संबंधि आप्तीच्छाविशेष्यस्यैव कर्मत्वं प्रतिपादनेन तु क्रियाजन्यफलाश्रयस्येत्यत आह क्रियाजन्यफलाश्रयत्वेनेति अयं

सुबर्थमाह आश्रयोवधिरुद्देश्यः संबंधः शक्तिरेव वा यथायथं विभक्त्यर्थाः सुपां कर्मेति भाष्यतः
२४ द्वितीयातृतीयासप्तमीनामाश्रयोर्थः तथाहि कर्मणि द्वितीया तच्च कर्तुरीप्सिततमं क्रियाजन्यफ
लाश्रय इत्यर्थः क्रियाजन्यफलवत्त्वेन कर्मण एव कर्तुरीप्सिततमत्वात् तथायुक्तं चानीप्सितमित्या
ऽऽदिसंग्रहाच्चैवमेव युक्तम् ॥ ९ ॥

भावः सूत्रे ईप्सिततमशब्दः आप्तोतेरिच्छा सन्नंतात्कर्मक्तांतात्प्रकृत्यर्थातिशय
द्योतकेन तमपि निष्पन्नः लडादौ गाच्च कर्तृशब्दात्तस्य च वर्तमाने इति कर्तरि षष्ठी तथाच कर्त्रोपस्थितत्वात्स्वीयव्यापारेण
व्याप्नुमिष्यमाणतमं व्यापारजन्यफलसंबंधितया कर्तृनिष्ठोत्कटेच्छाविषयः कर्मेति पर्यवसानात् क्रियाजन्यफला
श्रय स्य कर्मतालाभ इति न चैवं अकर्मीभूतार्थधातोरेव धातोः कर्मण इति सूत्रेणेच्छायां सनो विधानाद्आप्तीच्छार्थकसन्नंतधा

तुनाव्याप्तिरूपकर्मोपसमर्हो जीवत्यादिवदकर्मकतयाननं कथं कर्मक्तोपपत्तिरिति वाच्यम् धात्वर्थोपसंगृहीतकर्मत्वमित्यनक
र्मणानन्धात्वर्थीयकर्मान्तरानाकाङ्क्षत्वविशेषणेन सन्प्रकृतिधात्वर्थकर्मण. कर्मान्तरसाकाङ्क्षत्वेनोक्ताकर्मकत्वस्य सन्नतेऽसंभवात्
एवं सन्नन्तस्य वृत्तिनयानद्ध घटककर्मादायकर्मसंज्ञकान्वय्यर्थकत्वरूपसकर्मकत्वाभावेऽपि न दुहिभूतकर्मान्वयित्वमादायैवस॰
कर्मकत्वबोध्यमेव फलेनावच्छेदकसंबंधेन तद्धात्वर्थफलव्यधिकरणव्यापारवाचकत्वरूपं तदपीति नेऽसत्यादिन. कर्मप्रत्य
यानुपपत्तिः जिघ्रतेरपि स्वार्थान्तरभूतकर्मणस्तदीयपुष्पादिकर्मान्तरसाकांक्षत्वमस्त्येव गंधनिरूपितलौकिकविषयितास्य
पुष्पादेराधेयत्वीयसांसर्गिकविषयतानिरूपितप्रकारतानिरूपकत्वेनान्वयेनाकर्मत्वात् क्तसायराध्यतीत्यस्य क्तसस्य शुभाशु
पर्यालोचयतीत्यर्थात् धात्वर्थान्तर्भूतशुभकर्मणः कर्मान्तरसाकाङ्क्ष त्वमिति न तत्राप्रसंगः बुभूषत्यादीनानुभवनादिकर्मण.
कर्मान्तरानाकांक्षस्य धात्वर्थतावच्छेदककोटिप्रविष्टत्वादकर्मकत्वं व्यक्तमेव एवं स्वयंतद्गु तिभाष्यप्रयोगस्य स्वरवद्रूपं
विकृतिकर्मण सन्निहितशब्दरूपप्रकृतिकर्मसाकाङ्क्षतया करोत्यर्थ णिजन्तात्कर्मप्रत्ययोपपत्तिरिति बोध्यम् केचित्तु सना
द्यंतस्य धात्वर्थोपसंगृहीतत्वेनाकर्मकत्वेऽपि नप्रकृते. सकर्मकत्वमादाय तस्मात्कर्मप्रत्ययोपपत्तिमाहुः ननु तथापीष्टाऽघटि
तस्य भवदुक्तस्य कथं कर्मलक्षणत्वमतआह तथायुक्तमिति कर्मव्यवहारस्य द्वेष्योदासीनयोरप्यविशिष्टत्वात् तत्साधारणस्यैव
लक्षणत्वमुचितम् इच्छाघटितस्यैव तस्य लक्षणत्वे तु द्वेष्यादिकर्मण्यव्याप्तिः स्यात् तथा च तत्साधारण्यापेदमेवाश्रयितुं युक्त
मिति भावः एवमेषेति द्वयमेवेत्यर्थः॥ति

ननुद्वितीयायाउक्तकर्मार्थकत्वेहरिंभजतीत्यादौहर्य्यादेरीप्सितत्वादिनाभानानुपपत्तिरतआह ईप्सितानीप्सितत्वयोरिति भानाभावेने
ति सार्वजनीनतयानुभवादितिभावः ननुतर्हिक्रियाजन्यफलाश्रयः कर्मेत्येवसूत्र्यतामतआह संज्ञायामेवेति अयमाशयः क्रियाजन्य
फलाश्रयः कर्मेतिसूत्रप्रणयनेयद्यपीप्सितानीप्सितयोरविशेषेणसंज्ञासिद्धास्तिनथाप्यग्नेर्माणवकंवारयतीत्यादौक्रियाजन्यफलभा
गित्वेनेष्यमाणवकस्यापिविशेषविहितेनवारणार्थानामित्यनेनापादानसंज्ञाप्रसज्येत सूत्रंतुहरिंभजतीत्यादौचरितार्थं तत्परि
हारायेप्सिततमत्वस्यसंज्ञिकोटौनिवेशःप्राप्तद्वेष्योदासीनसंज्ञाविधानार्थमुत्तरसूत्रमिति तथानोक्तमिति ननुतथापिपंचम्यादिव

ईप्सितानीप्सितत्वयोः शाब्दबोधेभानाभावेनसंज्ञायामेवतदुपयोगोनतुवाच्यकोटौतन्निवेशः तथाचक्रिया
याःफलस्यचधातुनैवलाभादनन्यलभ्यआश्रयएवार्थः तत्त्वंचाखंडशक्तिरूपमवच्छेदकम् ओदनंपचतीत्यत्र
विक्लित्त्याश्रयत्वात्कर्मता घटंकरोतीत्युत्पत्त्याश्रयत्वात् उत्पत्तेर्धात्वर्थत्वात्॥ ११ नद्वितीयायाआश्रयमात्रार्थकता

किंतुविशिष्टस्यैवेत्यतआह तथाचेति आश्रयएवेत्येवकारेणविशिष्टार्थस्यशक्यत्वव्यवच्छेदः नन्वाश्रयत्वस्यतत्तत्स्वरूपात्मक
स्यतत्तदाश्रयभिन्नत्वात्कथंतस्यशक्यतावच्छेदकत्वमनुगतधर्मस्यैवतत्त्वादतआह तत्त्वंचेति आश्रयत्वंचेत्यर्थः अखंडशक्तिरू
पमिति शक्तिर्धर्मः इतरपदार्थाघटितमूर्तिकधर्मरूपमितियावत् आश्रयइत्यनुगतव्यवहारादाश्रयपदशक्यतावच्छेदकत्वा
च्च तत्सिद्धिर्द्रव्यत्वादिवदितिभावः नैयायिकास्तु आश्रयतायानियतान्यनिरूपितस्वरूपायाअनुगमकत्वासंभवः शक्यतावच्छे

दकत्वस्यापि विभुत्वान्यतरत्वादौ व्यभिचारेण नाखण्डत्वसाधकत्वमिति न द्वितीयाया आश्रयोऽर्थः तस्य प्रकृत्यैव लाभात् प्रकृत्यर्थभिन्नत्वे
ननत आश्रयस्याननुभवाच्च किंतु फलान्वयिनी कृतिरेव तदर्थः कर्मणि द्वितीयेत्यस्य फलनिष्ठाधेयत्वान्वये प्रकृतितात्पर्यं तदुत्तरं द्वि
तीयेत्यर्थात् तद्विरोधोपि अनादितात्पर्यग्राहकत्वेन परं — परया शक्तिग्राहकत्वाच्च न तद्द्वैयर्थ्यं आश्रयत्वं तु ननु च्छेदकतया निरू
पकतासंबन्धेनैव फलान्वयित्वस्याभ्युपगन्तव्यतया निरूपकत्वस्य च वृत्त्यनियामकतयाऽभावप्रतियोगितानवच्छेदकत्वेन विहगो
भूमिं गच्छति न महीरुहमित्यादौ धात्वर्थफलसंयोगे महीरुहनिष्ठाश्रयताया स्तेन संबन्धेनाभावस्याप्रसिद्धतया तद्बोधनासंभवा
न च स्वरूपसंबन्धः शक्तिः कारकमिति पक्षे तद्योगात् आधेयताया अपि निरूपकतया कारकत्वमेवेत्याहुः विभक्त्यर्था
यत्वात् कर्मतेति कर्मसंज्ञेत्यर्थः एतेन कर्तृगतप्रकृतधात्वर्थव्यापार — प्रयोज्यतदधिकरणप्रकृतधात्वर्थफलाश्रयत्वं कर्मत्वम्
भवतिपदस्यानुक्तप्रायत्वादिति अपेनोमाणवकं वारयतीत्यादावग्न्यादावतिव्याप्तिनिरासाय व्यापारे कर्तृगतत्वमुपात्तम् वारयतेश्च संयो
गानुकूलव्यापाराभावानुकूलव्यापारोऽर्थः चैत्रो ग्रामं गच्छतीत्यादौ चैत्रादेर्वारणाय व्यधिकरणेति वैयधिकरण्यं च तदनधिक
रणवृत्तित्वम् न तु तदधिकरणावृत्तित्वम् तस्य संयोगस्य चैत्रेन ग्रामादावव्याप्ते तादृशवैयधिकरण्यविशिष्टाधिकरणता
पार्थ्वे ग्रामादावसत्त्वान्नातिप्रसङ्गसंभावनापि माषेष्वश्वं बध्नातीत्यादौ बन्धनप्रयोज्यभक्षणाश्रयमाषाणां तत्त्ववारणाय प्रकृत
धात्वर्थत्वं फलविशेषणम् प्रकृतत्वं च तत्र तत्र विशिष्योपादेयम् पयसौदनं भुङ्क्ते इत्यादौ तु कर्मत्वाविवक्षणान्न द्वितीया कृ
तभोजनस्य पयोलोभेन प्रवृत्ताविच्छितं तत्मत्त्वस्यापि पयसि संभवादिति नव्याः कृतो यत्न मात्रार्थकत्वाभ्युपगमात्कर्मत्व
मि० प्रकृतधात्वर्थत्वमतस्याहोत्पत्तेरिति तथा च कृञ्जन्यनिरूप फलार्थकत्वस्य प्रागुपपादनान्नाव्याप्तिसंगतिरिति भाव धात्व

आवरणभंगेति प्राचीनमतानुसारेणेदं निष्कृष्टमते तु ज्ञानरूपफलस्य विषयतया घटादौ सत्त्वात्कर्मतेति बोध्यम् नचाकर्मकता
पत्तिः फलतावच्छेदकसंबंधेन सामानाधिकरण्याभावात् नैयायिकमते त्वेतादृशस्थलेयथाघटादीनांकर्मत्वम् तथोपपा
दितम् धात्वर्थनिरूपणावसरे ननु विद्यमानघटे ज्ञानजन्यावरणभंगस्य संभवेपि भाविविनष्टघटे निराश्रयस्य तस्यासंभवे
न तस्य कर्मत्वानुपपत्तिरत आहातीतानागतेति तत्राश्रयतांगीकारे युक्तिमाह अन्यथेति तत्रावरणभंगास्वीकार इत्यर्थः
यथापूर्वमिति जानाति क्रियाविशेषणम् पदार्थानतिवृत्तावव्ययीभावः पूर्वमनतिक्रम्येति पूर्वज्ञानानतिक्रमोयस्मिंस्तदिति
यावत् घटस्य विद्यमानतादशायां तात्कालिकज्ञानस्य न दृष्टे आवरणभंगजनकतयातीतदशायामाधुनिकज्ञानस्य तज्ज

जानातीत्यत्रावरणभंगरूपधात्वर्थफलाश्रयत्वात् अतीतानागतादिपरोक्षस्थलेपि ज्ञानजन्यस्य तस्याव
श्यकत्वात् अन्यथा यथापूर्वं न जानामीत्यापत्तेः अतीतादेराश्रयता च विषयतया ज्ञानाश्रयतया नैयायिका
ऽऽनामिव सत्कार्यवादसिद्धांताद्युपपद्यत इति

नकत्वेन पूर्वातिक्रमस्य तत्त्वात्पूर्वानतिक्रांतज्ञानाभावस्य विषयस्याबाधा
तादृशप्रयोगस्याप्रामाण्यापत्तेरित्यर्थः अतीतघटे आधुनिकज्ञानेनावरणभंगोत्पादाभ्युपगमे तु तेन पूर्वज्ञानानतिक्रमात्तद
भावस्य बाधाद्भवति तस्याप्रामाण्यमिति भावः ननु विनष्टे घटे वास्तवतदाश्रयत्वे च कथमत आह अतीतादेरिति आदिनाभावि
परिग्रहः नैयायिकानामिवेति यथानुभवानुरोधेन तस्मिन्विषयतया ज्ञानाश्रयतांगीकारस्तेषां तथास्माकमपीति भावः नन्वती
तो घटो ज्ञानविषय इति प्रतीतेरस्तु नाम तादृशघटस्य विषयतया ज्ञानाश्रयता आवरणभंगाश्रयतायां तु न तथा साधकोपलब्धि
रतत्राह सत्कार्येति॥

शाब्दबोधइति चैत्रनिष्ठसंयोगानुकूलश्चैत्रकर्तृकोवर्तमानोव्यापारइतिशाब्दबोधइत्यर्थः तद्विषयस्याबाधादितिभावः तथाव्युत्पन्ना
नामिति सामान्यतोधात्वर्थफलविशेष्यतानिरूपितप्रकारतासंबंधेनशाब्दबोधेऽन्याश्रयोपस्थितेर्हेतुत्ववादिनामित्यर्थः बोधस्यस्वस
व्युत्पत्त्यनुसारित्वादितिभावः चैत्रकर्मकचैत्रकर्तृकव्यापारशाब्दबोधस्यचैत्रोग्रामंगच्छतीत्यादावननुभवादाह उच्यतांवेति
कार्यकारणभावांतरमिति सामान्यतः कार्यकारणभावकल्पनेउक्तातिप्रसंगेनाश्रयंप्रकृतधात्वर्थव्यापारानधिकरणत्वेनविशे

शाब्दबोधश्चैत्रश्चैत्रमित्यत्रस्यादितिचेन्न तथाव्युत्पन्नानामिष्टापत्तेः उच्यतांवाद्वितीयार्थाश्रयप्रकारकबो
धंप्रतिधात्वर्थव्यापारव्यधिकरणस्यधातुजन्योपस्थितिर्हेतुरितिकार्यकारणभावांतरम् प्रकृतेचैत्रनि
ष्ठसंयोगस्यतदीयव्यापारव्यधिकरणत्वाभावान्नदोषः प्रयागस्यकर्मत्वंतुसंभावितमपिन समभिव्या
हृतधात्वर्थफलशालित्वस्यैवक्रियाजन्येत्यनेनविवक्षणस्योक्तप्रायत्वात् ॥ ६ ॥ ६ ॥ ॥

व्यतादृशाश्रयोपस्थितेर्हेतुत्वस्यकल्पनान्ननादृशशाब्दबोधापत्तिरितिभावः समभिव्याहृतेतिप्रकृतेत्यर्थः उक्तप्रायत्वादिति धा
त्वर्थव्यक्तित्वाश्रयत्वात्कर्मेत्यादिग्रंथेनेत्यस्यादिः गमेस्तत्रपार्थक्येनानुपादानादुक्तप्रायेति वस्तुतस्तुफलव्यापारयोरित्यत्रफ
लत्वस्यतद्धात्वर्थजन्यत्वेसतितद्धातुजन्योपस्थितिविषयत्वरूपस्यनिर्वचनाद्व्यापारव्यधिकरणफलाश्रयत्वरूपकर्मत्वोक्त्यै
वानतिप्रसंगेनोक्तविशेषणपार्थक्येननिवेशइतिध्येयम् ॥

तत्वांशाविषयकस्य द्वितीयाधीनफलजनकत्वबोधस्य कुत्राप्यनभ्युपगमेन तादृशबोधे तज्ज्ञानसामग्र्या अप्यपेक्षणात्स्याश्च प्रकृ
तेऽसत्वात् अथ स्वस्यापि द्वितीयावच्छिन्नभिन्नत्वात्स्वं गच्छतीति प्रयोगवारणाय द्वितीयाप्रकृत्यर्थस्य प्रकृत्यर्थतावच्छेदकाव-
च्छिन्नप्रतियोगिताकत्वसंबंधेनान्वयो वाच्यस्तथा च चैत्रो द्रव्यं गच्छति मल्लो मल्लं गच्छतीत्यादिवाक्यानामप्रामाण्यापत्तिश्चेन्न म
त्वादिनिष्ठक्रियाया द्वितीयाप्रकृत्यर्थतावच्छेदकद्रव्यत्वमल्लत्वावच्छिन्नभिन्नासमवेतत्वात्तद्व्यक्तित्वानुपस्थितावपि शाब्दबोधस्यान
त्वसिद्धत्वात्तद्व्यक्तित्वावच्छिन्नप्रतियोगितयान्वयासंभवात् तद्व्यक्तित्वोपस्थापकत्वाभावाच्च एकधर्मावच्छिन्नप्रतियोगिताया अन्य
धर्मावच्छिन्नसंसर्गत्वे मानाभावाच्च प्रतियोगिविशेषिताभावबुद्धेर्विशिष्टवैशिष्ट्यावगाहित्वनियमात्तदुक्तं दीधितिकृता प्रतियोगिवि
शेषिताभावभानं तु विशिष्टवैशिष्ट्यमर्यादां नातिशेत इतीति चेन्नहि क्रियान्वयि भेदप्रतियोगितावच्छेदकत्वं द्वितीयार्थः भेदे प्रकृ
त्यर्थस्याधेयतयान्वयान्न पूर्वोक्तापत्त्यनुपपत्ती नञ्समभिव्याहारे च नञाताद्यर्थस्यैव प्राच्चैत्रश्चैत्रं न गच्छतीत्यादौ द्वितीयाप्रकृ
त्यर्थवृत्तित्वविशिष्टतद्यरार्थभेदप्रतियोगितावच्छेदकत्वाभावः क्वचित्तु चैत्रो ग्रामं न गच्छतीत्यादौ द्वितीयार्थवृत्तित्ववि
शिष्टधात्वर्थसंयोगजनकत्वाभावः क्रियायां बोध्यते येन प्रकृत्यर्थवृत्तित्वविशिष्टसंयोगादिरूपफलस्यैव जनकत्वस्याश्रय
निष्ठभेदप्रतियोगितावच्छेदकत्वोभयसंबंधेन क्रियायामन्वयोपगमाद्भेदप्रतियोगितावच्छेदकत्वस्य द्वितीयार्थत्वमतेरे
णाप्युक्तापत्तिमुद्धरंति तन्मते वृत्त्यनियामकसंबंधस्याभावप्रतियोगितावच्छेदकतयोक्तस्थलउक्तसंबंधेनासंयोगा-
भावबोधानुपपत्तिः परसमवेतत्वं द्वितीयार्थ इति दीधितिविरोधश्च एवं च चैत्रो ग्रामं गच्छतीत्यत्र ग्रामवृत्तिसंयोगजनि
का ग्रामवृत्तिभेदप्रतियोगितावच्छेदिका च या क्रिया तदनुकूलकृतिमांश्चैत्र इति नैयायिकमतपरिष्कारः अत्र प्रत्यवतिष्ठंते न

७० नर्थप्रसज्यप्रतिषेधस्यप्रतियोगितयाक्रियान्वयित्वमितिव्यवस्थापनात्कथंचैत्रोग्रामंनगच्छतीत्यादौनञः संयोगजनकत्वाभाव
बोधकत्वं उक्तंच पर्य्युदासः सविज्ञेयोयत्रोत्तरपदे नञ्प्रसज्यप्रतिषेधस्तु क्रिययासहयत्रनञिति यत्रनञर्थाभावः क्रिययाधा
त्वर्थव्यापारेणप्रतियोगितयासंबद्धोभवतीत्युक्तएवार्थः तस्मात्तिङ् तेनञ्समभिव्याहारे क्रियाप्रतियोगिकाभावबोधएवन्याय्यो
नतुक्रियायाफलाभावस्यविभक्त्यर्थाभावस्यवाश्रूयमाणार्थेवातिङ् र्थाभावस्यलक्ष्मकारणविरहादितिश्चेदच्यते यद्धर्मावच्छिन्नेय
र्मावच्छिन्नत्वंयेनसंसर्गेणनञ्समभिव्याहारेप्रतीयतेतद्धर्मावच्छिन्नेतद्धर्मावच्छिन्नस्यतत्संसर्गावच्छिन्नप्रतियोगिताकाभावोनञ्सम
भिव्याहारेबुध्यते इतिसकललोकानुभवसिद्धोयमर्थः प्रतियोग्यभावान्वयोस्तुल्ययोगक्षेमाविनिबद्धनादीधितिकृतोपनिबद्ध
एवंचचैत्रोग्रामंगच्छतीत्यत्रनञ्समभिव्याहारे क्रियायाद्वितीयार्थवृत्तित्वविशिष्टसंयोगजनकत्वस्यबोधात्तत्समभिव्याहारेत
त्तदभावस्यबोधोजायमानः केनवार्य्यतीय नचकारणाभावः नञर्थाभावप्रकारतानिरूपितविशेष्यतासंबन्धेनशाब्दबोधे
प्रतियोग्यन्वययोग्यार्थोपस्थितेर्हेतुतयातत्स्याच्च क्रियायासत्त्वात् नतुनञर्थनिष्ठविशेष्यतानिरूपितप्रकारता
संबन्धेनबोधेधातुजन्यभावनोपस्थितेर्हेतुताचेत्र्थैत्रनगच्छतीत्यादिवाक्यानामप्रामाण्यापत्तेः चैत्रकर्मकचैत्रकर्तृकग
मनक्रियारूपप्रतियोगिनोऽप्रसिद्ध्यानञातदभावस्यबोधयितुमशक्यत्वात् मन्मतेतुचैत्रकर्तृकक्रियायांचैत्रवृत्तिसंयोगजनक
त्वेपिचैत्रवृत्तिभेदप्रतियोगितावच्छेदकत्वस्यतस्यामसत्त्वेननञातदभावस्यप्रत्यायनात्प्रामाण्योपपत्तेरतएवपरसमवेतत्व
स्यद्वितीयार्थत्वमप्यावश्यकम् नचतन्मतेपिचैत्रस्याकर्मत्वात्कथंतद्वाचकाद्द्वितीयोपपत्तिरुक्तस्थलइतिवाच्यम् चैत्रोगच्छ
तिचैत्रेणचैत्रइत्यत्रचैत्रक्रियावच्छिन्नप्रतियोगिताकभेदवत्त्वतदीयसंयोगाश्रयत्वयोरुभयोर्द्वितीयार्थयोरभावेनतदुपपत्ते

रधिकमग्रेवक्ष्यते तस्माच्चैत्रो गच्छतीत्यादौ चैत्रो न कर्मेति व्यवहाराच्च सर्वथा कर्तृव्यावृत्तं धात्वर्थव्यापारप्रयोज्यतद्व्यधिकरण
धात्वर्थफलाश्रयत्वं कर्मत्वं निर्वाच्यम् तत्र फलव्यापारयोर्धातुलभ्यत्वेपि वृत्तित्वभेदप्रतियोगितावच्छेदकत्वपर्य्यवसिते वैय-
धिकरण्ये च द्वितीयादेः शक्तिरनन्यलभ्यत्वात्स्वीकरणीयेति प्रकृतमनुसरामः विक्लित्त्यनुकूलेति तंडुलान्यसमवेतक्रियान्व
यित्वं यथाश्रुतं दूषयति तन्न रोचयामहे इत्यादिना तत्र परसमवेतत्वस्य द्वितीयार्थत्वं विनातिप्रसंगानिरासाद्गौरवं न दोषायेत्य
तआह अतिप्रसंगः किमिति तावदिति परसमवेतक्रियाजन्यधात्वर्थतावच्छेदकफलशालित्वरूपकर्मत्वस्य द्वितीयार्थत्वस्वी-

तन्न रोचयामहे परसमवेतत्वादेर्गौरवेणावाच्यत्वात् अतिप्रसंगः किं द्वितीयायाः शाब्दबोधस्यवानाद्यः तावद्वा
च्यकथनेपि तत्तादवस्थ्यात् गमयति कृष्णं गोकुलमितिवत् पाचयति कृष्णं गोपइत्यापत्तेस्तंडुलं पचति चैत्र इति
वत् तंडुलं पच्यते स्वयमेवेत्यापत्तेश्च विक्लित्त्यनुकूलतण्डुलान्यसमवेताग्निसंयोगधात्वर्थाश्रयत्वात् शाब्दबोधा
तिप्रसंगोप्युक्तरीत्यैव निरस्तः ॥ २२ ॥

कारेपि द्वितीयातिप्रसंगस्य तादवस्थ्यादित्यर्थः तमेवाह गमयति कृष्णमित्यादिना द्वितीयापत्ते
यापत्तेरिति द्वितीयोत्पत्तावुक्तकर्मत्वस्य तंत्रत्वे गमयति गोकुलं कृष्णमित्यत्र णिजर्थनिरूपितनिरुक्तकर्मत्वस्येव पचि प्रकृतिक-
णिजर्थकर्मत्वस्य कृष्णे सत्त्वेन पाचयत्यादिप्रयोगेपि प्रयोज्यकर्तृवाचकाद्द्वितीयापत्तेरतः संज्ञाया एव द्वितीयोत्पत्तौ प्रयोजकतांगी
करणीया एवं च तत एवातिप्रसंगभंगे कृतं तत्र द्वितीयाशक्त्येति भावः ननु तादृशकर्मत्वमेव द्वितीयानियामकं निरुक्तस्थले कृष्णे
तत्सत्त्वेप्युपात्तगत्यर्थकाद्यतिरिक्तणिजंतधातुयोगे गतिबुद्धीति सूत्रेण तद्विवक्षाबोधनात्तोक्तापत्तिः विवक्षाया एव विभक्त्युत्प

नैनियामकतायावत्प्रमाणत्वादतआह तंडुलंपच्यतइति तत्र तंडुलेभवदुक्तद्वितीयानियामककर्मत्वस्य सत्त्वात्तदापत्तिर्मन्मतेतुक
र्तृसंज्ञयाकर्मसंज्ञायाबाधान्नतदापत्तिरितिभावः तंडुलान्यसमवेतेत्यनेन परसमवेतक्रियाजन्यत्वविशिष्टतावत्तीति बोधितम् धा
त्वर्थाश्रयत्वादित्यनेन कर्तृसंज्ञासत्त्वमावेद्यते उक्तरीत्यैवेति तथाव्युत्पन्नानामित्याद्युक्तरीत्यैवेत्यर्थः धात्वर्थव्यापारानधिकर
णाश्रयोपस्थितिरूपहेत्वभावादिति भावः ॥ ९ ॥ ॥ननुमास्मन्मतेप्युक्तप्रयोगापत्तिः तत्र व्यापारत्वेन फलस्यैव भानांगीकारेण तंडु
लस्य धात्वर्थतावच्छेदकफलशालित्वाभावात् निष्कृष्टभवन्मतेपि व्यापारगतपौर्वापर्यारोपेण फलस्य व्यापारतायाः स्वीकारेत्यतो
दूषणान्तरमाह परसमवेतत्वस्येति दृष्टान्वयेति दृष्टस्य प्रकृत्यर्थस्य प्रतियोगितासंबन्धेन परसमवेतत्वस्यैकदेशे परत्वे परसमवेत

परसमवेतत्वस्य ग्राहकत्वेपि परसमवेतत्वस्य चेष्टान्वयलाभायानेकधाः कार्यकारणभावाभ्युपगमे गौरवान्त
॥वत्त्वादिति सर्वं भूषणे १

त्वस्य चाश्रयतया क्रियायामन्वयस्य लाभाय भानायेत्यर्थः अनेकधा इति प्रकृत्यर्थप्रकारकशाब्दबु
द्धिप्रति द्वितीयाधीनाधेयत्वोपस्थितेरिव तदधीनपरसमवेतत्वोपस्थितेः प्रकारतासंबंधेन एवं परसमवेतत्वप्रकारकबुद्धिंप्र
ति धातुजन्योपस्थितेर्व्यापारत्वावच्छिन्नविशेष्यतासंबन्धेन हेतुत्वकल्पने चातिगौरवादित्यर्थः मन्मते तु फलप्रकारकशाब्दबो
धं प्रति हेतुताकव्यापारोपस्थितिविषयव्यापारे द्वितीयाप्रकृत्यर्थोपस्थितित्वेन विशिष्य निवेशो नैव नातिप्रसंग इति भावः नन्वेवं चै
त्रमैत्रश्च परस्परं गच्छत इत्यादौ धात्वर्थव्यापारस्य द्वितीयाप्रकृत्यर्थवृत्तित्वात्तत्फलानन्वयप्रसंगो नत्राह स्पष्टमिति तथा च द्वि
तीयाप्रकृत्यर्थावृत्तित्वेन द्वितीयाप्रकृत्यर्थप्रतिभेदप्रतियोगितावच्छेदकस्य तस्याविवक्षणात्परस्परं गच्छत इत्यादौ क्रियायाः परस्

हरिकृतं कर्मविभागमाह तच्चेति क्रियाजन्यफलाश्रयरूपं कर्मेत्यर्थः यदसज्जायत इति असत्कार्यवादमवलंब्य सद्वेत्यादि तु सांख्यमतेन
प्रकाशत इत्यनंतरं प्रकृतेस्तु विवक्षायां विकार्य्यम् केश्चिदन्यथात न्निर्वर्त्यमित्येव वाक्यपदीयपाठः अन्यथा सामान्यधर्मेण लक्षितस्य॰
विकार्य्यस्य विशेष्यरूपेण प्रदर्शने थीतरतापत्तेः तदर्थस्तु केश्चित्प्रसिद्धेराचार्यैः प्रकृतिविवक्षायां निष्पाद्यं विकार्य्यमित्युच्यते ऽन्य
थात दविवक्षायां तन्निष्पाद्यं निर्वर्त्यमिति तदर्थः तत्र घटं करोतीत्यादौ सत्या अपि मृदादि प्रकृतेः परिणामित्वेनाविवक्षा भस्मक

तच्च सप्तविधम् निर्वर्त्यं च विकार्यं च प्राप्यं चेति त्रिधा मतम् तच्चेप्सिततमं कर्म चतुर्धान्यत्तु कल्पितम् १ औदासि॰
न्येन यत्प्राप्यं यच्च कर्तुरनीप्सितम् संज्ञांतरैरनाख्यातं यद्यच्चाप्यन्यपूर्वकम् २ इति वाक्यपदीयात् यदसज्जायते सद्वा
जन्मना यत्प्रकाशते तन्निर्वर्त्यं विकार्यं तु द्वेधा कर्म व्यवस्थितम् १ प्रकृत्युच्छेदसंभूतं किंचित्काष्ठादि भस्मवत् किं
चिद्गुणांतरोत्पत्त्या सुवर्णादि विकारवत् २ क्रियाकृतविशेषाणां सिद्धिर्यत्र न गम्यते दर्शनादनुमानाद्वा तत्प्राप्यमि
ति कथ्यते इति च तत्रैवोक्तम् ॥ ॥रोतीत्यादौ च सत्या एव तस्यास्तत्त्वेन सा यद्यपि निर्वर्त्यं ते निष्पाद्यत इति व्युत्पत्त्या निर्वर्त्य॰
वोडुस्तानोदनं पचतीत्यादावोदनादौ विकार्यकर्मण्यप्यस्ति तथापि प्रकृतिवाचकपदासमभिव्याहृतपदोपस्थाप्यत्वे सति निष्पा
[illegible]रिभाषिकनिर्वर्त्यत्वस्य विवक्षणान्न दोषः तदुक्तं सती वा विद्यमाना वा प्रकृतिः परिणामिनी यस्य नाश्रीयते तस्य निर्वर्त्यतं
[illegible]स्य विकृतिकर्मणः नाश्रीयते न प्रयुज्यते न विवक्ष्यत इति यावत् अन्यत्तु कार्यं विकार्यं त्विति तल्लक्षणं तु प्रतीयमान
[illegible]भागकत्वे सति क्रियानिर्वाह्यविशिष्टासत्त्वोत्पत्त्यन्यतर फलवत्त्वं घटं करोतीत्यादि निर्वर्त्ये क्रियानिर्वाह्योत्पत्तिमत्त्व॰

त्विप्रकृतिविकृतिभावाभावानान्तातिप्रसङ्गः प्रकृतिकर्मणस्तादृशविशिष्टासत्त्वाद्विकृतिकर्मणश्चतादृशोन्यत्वाश्रयत्वाल्लक्षणसङ्गः
ति इदं तावत्स्थलेफलद्वयप्रयोजकव्यापारार्थकत्वधातोरावश्यकम् उक्तंच भाष्येद्वयर्थः पचिरिति अन्यथैकफलैकव्यापारार्थका
त्वस्याकर्मकेष्वपिसत्त्वाद्विशेषोपादानानर्थक्यप्रसङ्गात् परंतुद्व्यर्थः पचिरिति भाष्याद्विक्लेदननिर्वर्त्तनंच पचेरर्थः तण्डुलानोदनं
पचतीत्यस्यतण्डुलान्विक्लेदयन्नोदनंनिर्वर्त्तयतीति विवरणात् तथाचप्रकृतेतण्डुलाश्रयविक्लित्त्यनुकूलव्यापारः अयाश्रयकश्चोदना
श्रयकोत्पत्त्यनुकूलोव्यापार इतिबोधः एवंकार्यंभस्मकरोतीत्यादावप्यूह्यमित्याहुः तदसत् भावनाप्रकारकबोधेहेतुत्वेनक्लृप्ताः
याः कृदन्यतरजन्योपस्थितेर्विशेष्यतासंबंधेनाख्यातार्थैः भावेनतादृशबोधासंभवात् एकयैवक्रियया फलद्वयोत्पत्तिसंभवे
नतद्व्यजन्यबोधस्यव्यापारद्वयविषयकत्वकल्पनानौचित्यादाख्यातशब्दान्निरुक्तभेदापाएव क्रियायाअवगमादितिरूप पूर
वीयकैयटाच्च किंच पचेर्व्यापारद्वयार्थकत्वेनव्यमते क्रियायाद्वित्वाबाधेनद्विवचनापत्तिर्दुर्वारा वस्तुतस्तु विक्लेदनं विक्लित्ति नि
र्वर्तनमुत्पत्तिरेवोक्तपदयोर्भावल्युडन्तत्वात् तथाचफलद्वयानुकूलएकएवव्यापारो भाष्यार्थनयाभाष्यकृत्संमतः व्यापारद्वयार्थ
कत्वोक्तिस्तुकेषांचिन्मतदयोर्णिजंतप्रकृतिकल्युडंतत्वभ्रमनिबंधनैवेत्यवधेयम् यद्यपि विकार्यद्विधा प्रकृतिर्विकृतिश्चेत्येवं
वकृस्यचितम् तथापिविकृतिद्विविध्येऽवगते प्रकृतावपि विकार्यत्वस्पष्टनप्राप्नभवतीत्याशयेन तदनुक्त्वैव विकृतिकर्म विभजते प्र
त्युच्छेदेति एतेनक्रियानिर्वाह्याभावः प्रतियोगितावच्छेदकधर्मवत्त्वंप्रकृतिकर्मत्वमिति ध्वनितं काष्ठान्यस्तंकरोति कुसुमानिस
जंकरोति सुवर्णंकुण्डलंकरोति मृदंघटंकरोति काष्ठंभस्मकरोति तण्डुलानोदनंपचतीत्यादौक्रियानिर्वाह्योयः पूर्वभावविशिष्ट ए
काष्ठकाष्ठादिप्रतियोगिकाभावोविशिष्टासत्त्वरूपस्तत्प्रतियोगितावच्छेदकवैशिष्ट्यवत्त्वकाष्ठकाष्ठादेरितिनतत्प्रकृतेलक्ष

णसंगतिः सर्वत्र विशिष्टाभावप्रतियोगितावच्छेदकवैशिष्ट्यत्वादतिप्रसंगवारणाय क्रियानिर्वाह्येति प्रकृत धात्वर्थव्यापारनिर्वाह्यार्थकम् कचित्काष्ठतंडुलादिधर्मिनाशादेव विशिष्टाभावो भस्मौदनादिसंपादकः कचिद्धर्मिणः सत्त्वेपि कटस्रगादिसंदर्भविशेषविरहरूपपूर्वभावविशिष्टासत्त्वं कटसंदर्भादिनिष्पादकं क्रियातो निर्वहति संभूतमिति प्रकृतिनाशप्रयोज्योत्पत्तिमदित्यर्थः इदं च भस्मवदित्यन्वयि काष्ठादीति पृथक्पदं अन्यथा काष्ठसुवर्णादेस्तु[illegible]मापत्तेः भस्मवदिति तत्तोत्येन वर्तमानमन्यदपि विकारजातमित्यर्थः सादृश्यं च प्रकृतिनाशप्रयोज्योत्पत्तिसत्त्वेनैव एवमग्रेपि तथा च प्रकृतिविकृतिभावापन्नकाष्ठभस्मादि विकार्यमित्यर्थः पर्यवस्यति एवं च काष्ठं भस्म करोतीत्यत्र करोतेर्नाशजन्यत्पत्तिश्च फलद्वयम् तदनुकूलं व्यापारश्चार्थः नाशे प्रतियोगितया काष्ठस्योत्पत्तौ भस्मन आधेयतया काष्ठप्रतियोगिकनाशानुकूलो भस्मोत्पादको वर्तमानो व्यापार इति बोधः एवं तंडुलानोदनं पचतीत्यादावपि नैयायिकास्तु तंडुलानोदनं पचतीति विकार्यस्थले प्रकृतिकर्मोत्तरद्वितीयाया नाशकत्वमर्थः विकृतिकर्मोत्तरद्वितीयायाश्चोत्पादकत्वम् तंडुलाद्यन्वितं नाशकत्वं च पाकेन्वेति ओदनान्वितोत्पादकत्वस्य नाशकत्वविशिष्टे पाकेन्वयः नाशे चोत्पत्तेः प्रयोजकत्वमुद्देश्यविधेयभावमहिम्ना भासते तेन पाकस्य तंडुलारंभकसंयोगनाशकत्वेपि संयोगमोदनम् पचतीति न प्रयोगः तंडुलारंभकसंयोगनाशस्योदनोत्पत्तौ तंडुलनाशेनान्यथासिद्धतया प्रयोजकत्वात् वस्तुतस्तु विकृतिकर्मसमभिव्याहृते तंडुलं पचतीति वत्संयोगं पचतीति प्रयोगवारणाय नाशद्वारा नाशकत्वमेव द्वितीयार्थो वाच्य इति प्रकृते प्रयोज्यप्रयोजकभावाभानेपि न क्षतिः तथा च तंडुलनाशकश्चोदनोत्पाद

कोयंव्यापारस्तदनुकूलकृतिमानितिबोधः ईदृशस्थलेचकर्माख्यातेनप्रकृतेःकर्मत्वमेवाभिधीयते।नएवंकाष्ठानिभस्मराशि.
क्रियतइत्यादौकाष्ठपदसमानवचनत्वमाख्यातस्यनतुभस्मादिविकारवाचकपदसमानवचनत्वम् भावनान्वयिनिसंख्यान्वय
नियमात् ननुप्रधानाप्रधानकर्मवाचककर्मपदसमभिव्याहृतनीवहादिदुहादिप्रकृतिककर्माख्यातस्यैवाप्रधानेनीहृकृष्वहामि
त्यनुशासनात्कर्मत्वद्वयानभिधायकत्वानियमेनप्रकृतेकर्मत्वद्वयस्यैवतुल्यतयाविकृतिगतकर्मत्वस्यैवाभिधानेबाधकाभा
व आख्यातस्यविकृतिसमानवचनत्वप्रसंगस्तुटह्णानिवाचकः संख्यांप्रकृतेर्विकृतेर्नेहीत्यनुशासनसिद्धविकृतिसंख्यान्व
यतुङ्प्रतिप्रकृतिसंख्यान्वयपरत्वेनागृह्यमाणाख्यातजन्योपस्थितेर्हेतुत्वकल्पनयानिरसनीयः कथमन्यथाभस्मीभवन्तिकाष्ठानीत्यादिप्रयोगइति
चेन्न घटपटौद्रक्ष्यतेइत्यत्रद्वित्वस्यैवोभयसाधारणविशेष्यतावच्छेदकापरिचयेनविकारविकारिणोर्द्वयोरेवाख्यातार्थविशेष्य
त्वेवावाक्यभेदापत्ते नचेष्टापत्तिस्तथासतिकाष्ठनाश्यतेभस्मक्रियतइतिवाक्यजबोधस्येवकाष्ठंभस्मक्रियतइतिवाक्यजबो
धस्यापिभस्मकाष्ठविकृतिरन्यविकृतिर्वेतिसंशयनिवर्तकत्वानुपपत्तेः समूहालम्बनजनकत्वाविशेषेणकाष्ठभस्मनोः प्रकृतिवि
कृतिभावस्योक्तवाक्यादलाभात् तस्मादेवैकवाक्यतायांकर्मप्रत्यये प्रयोज्यप्रयोजकभावस्यविशिष्टान्वयविवक्षानियमेनला॰
भद्वयकर्मप्रत्ययस्थलेपितथाविवक्षायानियमवशादेवकर्मात्मनेपदेभस्मानिकाष्ठोच्छेदप्रयोज्योत्पत्तिकत्वरूपकाष्ठविकृति
त्वस्यलाभात् नचविकृतिवाचकाद्वितीयापत्तिः लकारेणविकृतिकर्मत्वस्यानभिधानेपिकर्मत्वानरविशेषणतापन्नक्रियायामतस
विकृत्यर्थसंसर्गत्वाभ्युपगमेनैवद्वितीयाप्रत्ययसम्भवात्प्रातिपदिकार्थविशेष्यतयाकर्मत्वादिविवक्षायामेवद्वितीयाप्रसरात्

नचैवं घटं करोतीत्यापत्तिः कर्मत्वांतरविशेषणतानापन्नक्रियायां क्रियांतरकर्तृत्वविशेष्यतापन्नार्थस्यैव कर्मतासंसर्गेण भानाभ्युपग
मादत एव काष्ठं भस्मराशिः करोतीति न प्रयोगः भस्मराशेः क्रियांतरकर्तृत्वविशेष्यतानापन्नत्वादुपपद्यते च पश्य मृगो धावतीत्यादिः
प्रकृते च नीलो घटो भवतीत्यादावसाधारणधर्मरूपभवने नीलादेराधेयत्वरूपकर्तृतासंबंधेनान्वयोपगमेनैकवाक्यत्वोपपत्त्योक्त
संशयनिवर्तकत्वोपपत्तेः तथा चोत्पादकत्वेन भस्मसंबंधिकृतिप्रयोज्यनाशप्रतियोगीनि काष्ठानीति काष्ठं भस्मराशिः क्रियत इ
तिवाक्यजो बोधः संबंधस्य प्रातिपदिकार्थविशेष्यतयाऽविवक्षणादेव न तत्र षष्ठ्यपि एवमर्चीनमो घटो नेत्यत्रापि प्रकृतिविकृ
तिभावस्थले कर्मत्वांतरविशेषणतानापन्नधात्वर्थान्वय्यर्थबोधने द्वितीयायाः साधुत्वमिति नियमोपगमेन नोक्तस्थले द्वितीयाप्र
संगो नापि जह्यते गौः क्षीरमित्यादौ तदनुपपत्तिः एवमेकत्वावच्छिन्ने द्वित्वावच्छिन्नारोपस्थलेऽप्येको द्वौ ज्ञायत इत्यादावारोप्य
विशेष्यवाचकसमानवचनत्वमाख्यातस्य प्रयुंजते च कवयः एकोऽपि त्रय इव भाति कंदुकोऽयमिति नचैतत्रापि भांतीत्येव पाठः
कथमन्यथाऽमानितनेन निजायशोयुगं द्विफालबद्धाश्चिकुराः शिरःस्थितमित्यत्रारोप्यनिजायशोयुगसमानवचनममानीत्या
ख्यातं प्रयुक्तं श्रीहर्षेणेति वाच्यम् तत्रापि पूर्वार्द्धे समर्थितायशोयुगस्य वास्तवत्वेन तस्मिन् फालद्वयबद्धचिकुराणामेवारो
प्यत्वेन कवेरपेक्षितत्वात् अत एव न तत्राविमृष्टविधेयांशतादोषावकाश इत्याहुः अत्र केचित्तु नरावृत्तः सुवर्णपिंडः पुन
रपरयाऽऽकृत्यायुक्तः खदिरांगारसवर्णे कुंडले भवत इति महाभाष्यप्रयोगादाख्यातस्य विकृतिसमानवचनत्वमेव गृह्णाति
वाचकः संख्यां प्रकृतेर्विकृतेर्नहीति तु च्विप्रत्ययमात्रविषयकमेवं च काष्ठानि भस्मराशिः क्रियंत इत्यादिप्रयोगाणामसाधुत्वमे
वेति अपरे तु खदिरांगारसवर्णे इति विशेषणेन तत्कुंडलयोः प्रकृतित्वं गम्यते सिद्धाया विकृतेः पाकानपेक्षणात् पुनरपरयाकृ

निर्द्देशक्रमेणोदाहरणान्याह घटमिति आद्यमिति निर्वर्त्यमित्यर्थः एवमग्रेपि संज्ञान्तरैरनुक्तमिति अपादानत्वादितत्तद्भावशेष
रविवक्षितमित्यर्थः अकथितंचेत्यत्राकथितशब्दोऽविवक्षितपरो नत्वप्रधानपरस्तथा सति पाणिना कांस्यपात्र्यां दोग्धीत्यत्र करणाधि
करणयोः कर्मसंज्ञाप्रसज्येत दुहादीनां परिगणनाच्च तत्संज्ञयोः कर्त्रेत्यादियोगे सावकाशत्वादिति भावः तथा च पूर्वविधिप्रसक्तिपूर्व
कं तद विवक्षायां सर्वथा पूर्वविधेरप्रसक्तौ च तत्परिग्रह इति बोध्यम् यद्यपि विभागानुकूलव्यापारस्यापि दुह्यर्थत्वेन कर्त्तुरीप्सिततम
मित्यनेनैव कर्मसंज्ञा सिध्यति कर्त्तृनिष्ठव्यापारविशेषणफलाश्रयतया गोः प्रधानकर्मतेयानतत्वलाद्यनुपपत्तिः पयोनिष्ठविभा
गानुकूलगोनिष्ठव्यापारानुकूलव्यापारस्य शब्दतः प्राधान्यादन्यथासिद्धप्रयोजनकमेतत्सूत्रमित्याभाति तथापि विभागानुकूलव्या

घटं करोतीत्याद्यं काष्ठं भस्म करोतीति सुवर्णं कुण्डलं करोतीति च द्वितीयम् घटं पश्यतीति च तृतीयम् तृणं स्पृशती
त्युदासीनं विषं भुंक्त इति द्वेष्यम् गां दोग्धीति संज्ञान्तरैरनाख्यातम् क्रूरमभिक्रुध्यतीत्यन्यपूर्वकम्॥ ४ ॥ ॥

पार एव यदि धात्वर्थस्तदापादानत्वाद्यविवक्षायामन्यत्सूत्राप्राप्तकर्मत्वार्थमिदमावश्यकम् एतस्मिन्नर्थे त्वप्रधाने दुहादीनामित्यनु
शासनाद्गवादावेवलादयः अप्रधानकर्मत्वंचोक्तकर्मभिन्नत्वम् तच्चोक्तार्थे गवादीनामक्षतं धात्वर्थफलानाश्रयत्वात् तथा चैतत्कं
त्वेन स्थितं द्रवद्रव्यनिष्ठविभागानुकूलव्यापारो दुहेरर्थः तत्र गोरपादानत्वाविवक्षायामनेन कर्मत्वम् तद्विवक्षायां पंचमी गोः पयः
स्यन्वयेतु षष्ठी एवं च गोकर्मकपयोनिष्ठविभागानुकूल एककर्त्तृको व्यापार इति बोधः विभागावधित्वमेव गोः कर्मत्वमाद्यकल्पेतु
पयोनिष्ठविभागानुकूलगोनिष्ठव्यापारानुकूल एककर्त्तृको वर्त्तमानो व्यापार इति तत्र विभागाश्रयत्वात्पयसः कर्मतान्तरनुकूलव्या

पाराश्रयत्वात्तु गौः नतु विभागाश्रयत्वेन पयो निष्ठविभागीयसंबंधस्यैव फलतावच्छेदकत्वादेव मन्यताम्पूह्यम् अन्यपूर्वं कामातन्त्रन्यसत्ता। न
धनपूर्वं शालचोधितमित्यर्थः क्रूरमभिक्रुध्यतीत्यत्र क्रुधद्रुहेर्ष्येति सम्प्रदानसंज्ञाया क्रुधद्रुहोरुपसृष्टयो॰ कर्मेति बाधनादेवं वैकु
ण्ठमधिशेते इत्यादावपि बोध्यम् अजां ग्राममं नयति शिष्यम् शास्त्रं बोधयति ब्राह्मणमन्नं भोजयति यजमानं मंत्रं पाठयति घटं जनयति ना
शयतीत्यादौ गतिबुद्धीति सूत्रेण गम्यादिधात्वर्थकर्तुः कर्मसंज्ञाविधानात् गम्यादिप्रकृतिकणिजन्तधातुसमभिव्याहृतद्वितीयाया आश्र
योर्थः यद्यपि णिजन्तधात्वर्थप्रेरणजन्यव्यापाररूपफलाश्रयत्वादजादीनामपि कर्मत्वं कर्तुरीप्सिततममित्यनेनैव सिद्धम् तथापि
णिजन्तेनाप्यमानस्य चेद्भवति गत्यर्थव्यापाराश्रयस्यैवेति नियमार्थं सूत्रं तेन पाचयत्योदनं देवदत्तेनेत्यादौ न तदुक्त गुणक्रिया
यात्मतन्त्रान्वेषणे कर्मता गत नियमात् कर्मसंज्ञाया॰ स धर्मेणाभिधीयत इति वाचकतासंबंधेन स्वनिष्ठ्यान्तृतीययेत्यर्थः यद्यपि
कर्तृसंज्ञायाः परत्वाद्धेतुमति चेत्यनुशासनात्स्वकारकविशिष्टक्रियायां णिजर्थसंबंधावगतेरन्तरंगत्वाच्च कर्मसंज्ञायास्तया बाध
एवोचित तथाप्यन्यानधीनत्वलक्षणार्थप्राधान्यशाब्दप्राधान्ययोः प्रयोजकव्यापारे सत्त्वेन प्रधानकार्यस्य च सर्वतो बलवत्त्वा
त्स्वाकडारसूत्रेकैपदेनोक्तत्वाद्धेतुमति चेति सूत्रस्य भाष्यप्रामाण्याच्च तदनुरोधिकर्मत्वस्यान्तरंगादपि कर्तृत्वाद्बलवत्त्वान्निय
मत्वमेव साम्प्रतम् परेतु हेतुमति चेत्यनुशासनादन्यनिष्ठकर्तृत्वनिर्वाहकव्यापाररूपास्वतन्त्रप्रेरणा णिजर्थः कर्तृत्वं च क्वचि
त्प्रयत्नः क्वचिदाश्रयत्वादि यादृशधात्वर्थनिरूपितेत्यानेनयादृशं कर्तृत्वमभिधीयते तादृशधातूत्तरणिज्प्रत्ययेन तादृशकर्तृत्वनि
र्वाहको व्यापारोभिधीयते निर्वाहकत्वं च स्वरूपसम्बन्धविशेषो नानो नाशयतीत्यादावन्वयानुपपत्तिः एवं च पाकादिकर्तृसत्क
र्मत्वविरहेपि णयन्तधातुप्रतिपाद्यतावच्छेदककर्तृत्वस्य फलत्वेन तदाश्रयत्वात्पाकादिकर्तुः कर्मत्वं तादृशकर्तृत्वविशेष

नसहायामन्यपिप्रयोगः साधुरेव अतएवाजिमुहतं जनको धनुस्तं
तत्रकर्तृत्वविवक्षायांपाचयत्योदनसहायामन्यपि प्रयोगः यदातु णिच्प्रकृत्यर्थव्यापारे स्वतंत्रकर्तृ
नयोगः स्वरसतः संगच्छते यद्वेर्ज्ञानलाक्षणिकतयानदुपपादनंत्वगतिकगतिः धातुयोगेनादृशाकर्तृत्वविशेषणतयास्वतंत्रक
त्वस्यविशेषणतयाविवक्षानदासहायेनेत्येवगतिबुद्धीतिसूत्रंगत्याद्यर्थकधातुयोगे नेनपाचयत्योदनंसहायेनेतिवदजयाग्रा
र्तृत्वविवक्षानियतानान्यत्रेत्यर्थबोधनद्वारातत्रकर्तृमन्यथासाधुत्वज्ञापकम् तेनपाचयत्योदनंसहायेनेतिवदजयाग्रा
मंगमयतीतिन एवंचाजांग्रामंगमयतीत्यत्रग्रामनिष्ठसंयोगानुकूलव्यापारस्ययदजानिष्ठकर्तृत्वंनिर्वाहकत्वसंबंधेनतद्वि
शिष्टोयोव्यापारस्तदनुकूलकृतिमानितिबोधः पाचयत्योदनंसहायेनेत्यत्रतुसहायकर्तृकोयोविक्लित्त्यनुकूलोव्यापारो निर्वाह
कत्वसंबंधेनतत्कर्तृत्वसंबंधेनतत्कर्तृत्वविशिष्टव्यापारानुकूलकृतिमानितिबोधः चैत्रेणग्रामंगम्यतेजेत्यत्रकर्माख्यातेनुता
दृशाव्यापारनिर्वाह्यकर्तृकव्यापारनिर्वाह्यकर्तृत्वनिरूपकंपदग्रामवृत्तिसंयोगानुकूलंगमनंतत्कर्त्र्यजेतिबोधः सहायेनपाच्य
तेतंडुलश्चैत्रेणेत्यत्रतुचैत्रकर्तृकप्रेरणानिर्वाह्यकर्तृत्वनिरूपकोयः सहायरूपस्वतंत्रकर्तृवृत्तिव्यापारस्तज्जन्यविक्लित्त्याश्रय
स्तंडुलइतिबोधः अर्थविवेकः स्वयमूह्यः येत्वनुकूलव्यापारएवणिजर्थस्तदन्वयिनीगमनादिक्रियेव धात्वर्थतावच्छेदकंफलंन
त्वालितयाजादीनांप्राप्तमेवकर्मत्वंगतिबुद्धीतिसूत्रेणनियम्यतइतिवदंति तेषांमतेपाचयत्योदनंसहायेनेत्यादौद्वितीयातृतीय
योर्नियामकालाभोधिकमन्यत्रानुसंधेयमित्याहुः वैकुंठमधितिष्ठतीत्यादावपिद्वितीयायाआधारएवार्थः अध्याद्युपसृष्टशीङा
दियोगेऽधिशीङित्यादिसूत्रेणाधारस्यकर्मसंज्ञाविधानात् यद्यपिकृञर्थव्यापारांतर्भावेणाध्याद्युपसृष्टशीङादीनांलक्षणामुप
गम्यकर्तुरीप्सिततममित्यनेनैवकर्मसंज्ञासुसाधातथापिमुख्यार्थकतद्योगेपिकर्मप्रत्ययसाधुत्वबोधनार्थमधिशीङ् स्थासामि

अतएवेति उक्तस्वातंत्र्यस्यकर्तृत्वादेवेत्यर्थः संगच्छतेइति कृत्याश्रयत्वादेस्तत्वेतुनदसंगतिरितिभावः उक्तविवक्षायाः प्रयोगनियामकत्वंदृढयितुं पृच्छति नन्वेवमिति एवंविवक्षायाएवप्रयोगनियामकत्वे मनोमयस्य मनोमयशब्दप्रतिपाद्यस्येत्यर्थः जीवत्वेसंकल्पकर्तृरूपत्वेब्रह्मभिन्नत्वेइतियावत् एतमितइत्यादेरितः शरीरात्प्रेत्यनिःसृत्य एतच्छरीरंपरित्यज्येतियावत् एतंस्वप्रकाशत्वादिगुणविशिष्टंपूर्वोक्तमात्मानं अभिसंभवितास्मि प्राप्तास्मीत्यर्थः कथंसंगच्छतामिति भवन्मतेवैवक्षिकयोः कर्तृत्वकर्मत्वयोरेकस्मि

अतएवयदायदीयोव्यापारोधातुनाभिधीयते सतदाकर्तेति स्थालीपचति अग्निःपचतितंडुलःपच्यतेस्वयमेवेत्यादिसंगच्छते नन्वेवंकर्तृकर्मव्यपदेशाच्चेतिसूत्रे मनोमयःप्राणशरीरइतिवाक्यस्य मनोमयस्यजीवत्वेवाक्यशेषेनस्यएतमितःप्रेत्याभिसंभवितास्मीतिप्राप्तिकर्मत्वकर्तृत्वव्यपदेशोविरुद्धइति भगवताव्यासेननिर्णीतंकथंसंगच्छताम् उच्यतेजीवस्यज्ञेयत्वेप्राप्तिकर्मत्वमपिवाच्यम् कर्तृत्वंचतस्याख्यातेनोक्तम् नचैकस्यैकदासंज्ञाद्वयंयुक्तम् कर्तृसंज्ञयाकर्मसंज्ञायाबाधात् तथाचैतमितिद्वितीयानस्यात् कर्मकर्तृतायांचयगाद्यापत्तिरिति शब्दविरोधद्वाराभवतिसभेदहेतुः ॥ ५ ॥

नपिसंभवादितिभावः संज्ञानिबंधनविरोधंसमर्थयन्कर्तृत्वकर्मत्वयोर्वास्तवाविरोधंदर्शयति उच्यतेइत्यादिना जीवस्यैवज्ञेयत्वेइतिसक्रतुंकुर्वीतेत्यनेनजीवस्यैवोपास्यत्वबोधनेइत्यर्थः प्राप्तिकर्मत्वमिति अन्योपासनायाअपरप्राप्तिफलकत्वादितिभावः आख्यातेनेति अभिसंभवितास्मीत्यनद्धाटकेनेत्यर्थः बाधादिति संज्ञयोरेकदाशीयतयासमावेशासंभवेनपरयाकर्तृसंज्ञयाबाधादित्यर्थः यगापत्तिरिति अभ्युच्चयवादः प्राप्येकर्मवद्भावाप्रसक्तेः शब्दविरोधद्वारा एकदासंज्ञाद्वयप्रयुक्तकार्यानुत्पत्तिद्वारा सःसंज्ञाद्वयविरोधःतत्रकर्तृकर्मत्वव्यवहारहेतुरित्यर्थः नतुकर्तृत्वकर्मत्वयोःपारमार्थिकंभेदमादायेतिभावः॥

पपद्विभक्तीनां तु पक्ष्यपवादकत्वात्संबंध एवार्थो कालाध्वनोरत्यन्तसंयोग इति विहितद्वितीयाया व्यापकत्वमर्थः मासमधीत इत्यत्र
मासव्यापकाध्ययनमिति बोधात् द्वितीयादीनामाश्रयोर्थ इत्यत्र विभक्तिपदस्य कारकविभक्तिपरत्वेन तद्विरोधादित्यन्यत्र विस्तरः
क्रमप्राप्तं तृतीयार्थं निरूपयति कर्त्तृतृतीयाया इति करणतृतीयाया व्यापारार्थत्वस्यापि वक्ष्यमाणत्वादुक्तं कर्त्रिति आश्रय इति आश्रय
मात्रमित्यर्थः आश्रयार्थकत्वे मानमुपन्यस्यति तथाहीत्यादिना ननु स्वातंत्र्यमितरव्यापारानधीनव्यापारवत्त्वम् तच्च काष्ठं पचती
त्यादौ काष्ठादावसत्त्वं तद्व्यापारस्य चेतनव्यापाराधीनत्वादत आह स्वातंत्र्यं चेति व्यापाराश्रयत्वस्य करणे धात्वर्थाश्रयत्वस्य कर्मण्यतिप्र
सक्तत्वात्तद्वारणाय क्रमेणोभयं अन्यत्र कर्त्तृप्रत्ययसमभिव्याहारे व्यापारतावच्छेदकसंबंधेन धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारतानाश्रयत्व
इत्यर्थाश्रयत्वं स्वातंत्र्यं तदेव च कर्तृत्वं कालिकसंबंधेन व्यापाराश्रये ऽतिप्रसङ्गवारणाय व्यापारतावच्छेदकसंबंधेनेति ग्रामं गच्छती
कार्यतृतीयायास्त्वाश्रयोर्थः तथाहि स्वतन्त्रः कर्ता स्वातन्त्र्यं च धात्वर्थव्यापाराश्रयत्वम् धातुनोक्तक्रिये नित्यकारके
॥ कर्तरीष्यते इति वाक्यपदीयात् ॥
त्यादौ तु तरसंयोगात्मके फले ऽतादृश धात्वर्थत्वाभावान्न तदाश्रये ऽतिप्रसङ्गः पक्वलड
चैत्रेण देवदत्तेनेत्यादौ फलस्य विशेष्यत्वेन देवदत्ते ऽव्याप्तिपरिहाराय कर्तृप्रत्ययसमभिव्याहार इति सामग्री सा व्यापाक्रियायां सर्वेषां
स्वस्वव्यापारे स्वातंत्र्ये युक्तं स्वातन्त्र्यस्य युगपत्सर्वेषु भाषान्तरसूचनार्थकामिति कर्त्तृ कर्मप्रत्ययसमभिव्याहृतकर्तृव्यावर्तनाय
त्वर्थव्यापाराश्रयत्वस्यैव सम्यक्त्वाद्गुरुविशेषणस्यानतिप्रयोजनकत्वात् योपेक्ष्य कर्मकर्त्तरि तु नव्यमते फले व्यापारत्वारोपान्न व्याप्ति
भारत्वेन कर्मणि संप्रदानन अनाश्रये ऽपि तेन नेश्वरसाम्यं कर्मव्यवहारः भवति रिक्तव्यापारस्य धातुमात्रावसायतुक चिन्तयेत
हारोपि न भवति च यदीयदीयो व्यापारस्तस्य व्यापारसमानतो भूतमनु मन्यमानमित्याद्युपपाद्यमिति भावः नमहरिमाख्य ममा

नेनकोऽव ... तुनहर्सनतिरिति भावः उक्तविवक्षायाः प्रयोगनि
कर्मत्वेवातस्यलक्षणा एवचैत्र ... मनोमयस्य मनोमयप्राट्प्रतिपाद्यस्येत्यर्थः जीवत्वे
गित्वात्मककर्तृत्वेऽनुयोगित्वरूपकर्तृमत्वेवा ... [illegible]
याख्याते नबोध्यते अचेतने स्वरस्वतः कर्तृव्यवहाराभावेन ... [illegible]
येवकर्तृकरणयोरित्यादेश्चारितार्थ्ये गौणकर्तृत्वे तृतीयाद्यनुपपत्तिरितिवा ... [illegible]
परत्वात् तत्सूत्रप्रणयनस्यैव तस्य तत्परत्वे मानत्वात् सूत्रे स्वातंत्र्यंच समभिव्याहृतकारकान ... [illegible]
रुषव्यापाराधीनक्रियानुकूलव्यापारवतामेव काष्ठादीनामन्यानधीनत्वविवक्षया काष्ठं पचतीत्यादौ कर्तृत्वम्
त्वांन विशेषणं च चैत्रः काष्ठैः स्थाल्यां पचतीत्यत्र चैत्रः काष्ठानि स्थाली पचंतीति प्रयोगवारणाय चैत्रः पचति स्थाली पचतीत्या
दौ यत्र कारकांतराप्रसिद्धिस्तत्रानधीनांत विशेषणं न प्रतीयत एव तन्निर्वाहश्च स्वतंत्रशक्ति कल्पनात् विशिष्टशक्तेर्विशे
षणाविषयकविशेष्यबोधाजनकत्वात् विशिष्टशक्त्यानिर्वाहात् चैत्रेण पाचयतीत्यादौ हेतुकर्तृसमभिव्याहारे प्रयोज्यस्य हे
तुकर्त्रधीनत्वेपि रायंतप्रतिपाद्यपाचनादिक्रियायामेव प्रयोजकस्य कारकतया प्रयोज्यस्य पचाद्यर्थक्रियाकारकानधीनता
याश्चैवकल्पेन न तद्वाचकपदोत्तरं तृतीयानुपपत्तिः स्वतंत्रकर्तृप्रयोजकव्यापारस्य तंडुलक्रयणादिवत्काकादावन्यथासिद्ध
त्वादकारणत्वेन तस्य पाकादिप्रयोजकव्यापारवत्त्वेपि न क्रियाकारकत्वाभावाच्च अत एव चैत्रेण मैत्रः पाचयतीत्यत्र मैत्रः प
चतीति न नन्वसूपदर्शितरीत्या चैत्रादेः स्वतंत्रकर्तृतानिर्वाहस्तथापि तद्वाचकपदोत्तरं तृतीयानुपपत्तिः कर्तृत्वनिर्वाहकव्यापा

ननु विशिष्टाश्रयस्य तावता वनीयार्थत्वमायातमत आह एवं चेति धातूपात्तव्यापाराश्रयस्य कर्तृत्वे चेत्यर्थः आश्रयमात्रमिति अनन्यल
भ्यत्वादिति भावः मतान्तरं दूषयति कृत्याश्रयत्वमित्यादिना अव्याप्तमिति अचेतनेन सिकताद्युधादिति भावः अत्र वदंति दंडादिनिष्ठ
व्यापारस्य धात्वर्थव्यवहारस्तस्मिन्नुपपाद अत एव हरिणा प्रागन्यतः शक्तिलाभान्न्यग्भावापादनादपि तदधीनप्रवृत्तित्वात्प्रवृत्तानां नि
वर्तनात् अदृष्टत्वात्प्रतिनिधेर्व्यतिरेके च दर्शनात् आरादप्युपकारित्वे स्वातन्त्र्यं कर्तुरिष्यते इत्यनेन करणादिव्यापारात्पूर्वं कारणादि
संपादकशक्तिमत्त्वेन करणादीनामात्माधीनत्वसंपादनेन च तदायत्तव्यापारत्वेनातिप्रवृत्तानां निवर्तनेन कर्तुः फलप्राप्तौ स्वत एव नि
वृत्त्या प्रतिनिध्यभावेन कारकान्तराभावेऽप्यस्यादौ कर्तुर्दर्शनेन च दूरादप्युपकारित्वे स्वातन्त्र्यमित्यर्थकेन कारकचक्रप्रयोक्तृत्वमेव स्वा

एवं च व्यापाराश्रयस्य धातुलभ्यत्वादाश्रयमात्रं तृतीयार्थः कारकचक्रप्रयोक्तृत्वं कृत्याश्रयत्वं वा दण्डः करोतीत्यत्राव्याप्तम्

तत्त्वमभिहितम् वस्तुतस्तेषां धर्माणामभावेऽपि शब्देन यस्यैते प्रतिपाद्यंते स कर्तेति तदाशयः पाचयति चैत्रेण मैत्र इत्यादौ प्रयोज्यस्य प्रयोज
कव्यापाराधीनत्वेऽपि णिजर्थसाधनान्तरविषये उक्तस्वातन्त्र्यस्य सत्त्वात्कर्तृत्वोपपत्तिः धातुवाच्यक्रियाकृतस्वातन्त्र्यस्यैव विवक्ष
णात् कर्तृपरतन्त्रकरणादेर्न स्वव्यापारमादाय कर्तृत्वं प्रयोज्यस्य स्वार्थसिद्ध्यर्थमपि प्रवृत्तानां करणादीनां कर्त्रधीनत्ववत्प्रयोज्यस्य
प्रयोजकानधीनत्वाच्च नहि फलोद्देशाधीना करणादीनां व्यापारवत्ता प्रयोज्यस्य तु नावश्यं प्रवृत्तौ स्वेच्छमेव भूत्यर्थं प्रवर्तनमिति हेतु
मति चेति सूत्रस्य भाष्यमनुभवश्च सार्वजनीनः प्रमाणमित्याहुः कृत्याश्रयत्वं दण्डादावव्याप्तमित्युक्त्या नैयायिकोक्तकर्तृत्वस्यापेक्ष
णीयत्वमावेदितं नैयायिकमताश्रय कर्तृत्वं मुख्यं पूर्वोक्तमेवाश्रयप्रतियोगित्वादिरूपं तु गौणमुभयमपि कर्तृतृतीयया प्रतिपाद्यते

अचेतनकाष्ठादेरपिकर्तृत्वविवक्षायांतु काष्ठंपचतीतिवत्काष्ठेनपच्यतेतंडुलइत्यपिप्रयोगाद्व्यापाररूपेकर्तृत्वेतत्कान्यत्व
रूपेसकर्मत्वेवातस्यलक्षणा एवंचैत्रेणज्ञायतइत्यादावाश्रयत्वरूपेकर्तृत्वेआधेयत्वरूपेकर्तृमत्वेवा नश्यतेघटेनेत्यादौ
प्रतियोगित्वात्मककर्तृत्वेऽनुयोगित्वरूपकर्तृमत्वेवालक्षणाचैत्रःपचतीत्यादावुक्तस्थलेकर्तृत्वमेवमुख्यंगौणंवाक्रियाविशे
ष्यनयाख्यातेनबोध्यते अचेतनेस्वरस्वतःकर्तृव्यवहाराभावेनतत्रकर्तृपदमपिभाक्तमेव नचयत्नवतएवमुख्यकर्तृत्वेत
दाद्ययेवकर्तृकरणयोरित्यादेश्चारितार्थ्येगौणकर्तृत्वेतृतीयाद्यनुपपत्तिरितिवाच्यम् तत्सूत्रस्थकर्तृपदस्यपारिभाषिकक
र्तृपरत्वात् तत्सूत्रप्रणयनस्यैवतस्यतत्परत्वेमानत्वात् सूत्रेस्वातंत्र्यंचसमभिव्याहृतकारकांतराऽनधीनत्वेसतिकारकत्वम्
पुरुषव्यापाराधीनक्रियानुकूलव्यापारवतामेवकाष्ठादीनामन्यानधीनत्वविवक्षयाकाष्ठंपचतीत्यादौकर्तृत्वम् अनधीन
त्वांतविशेषणंचचैत्रःकाष्ठैःस्थाल्यांपचतीत्यत्रचैत्रःकाष्ठानिस्थालीपचंतीतिप्रयोगवारणायचैत्रःपचतिस्थालीपचतीत्या
दौयत्रकारकांतराप्रसिद्धिस्तत्रानधीनांतविशेषणंनप्रतीयतएव तन्निर्वाहश्चस्वतंत्रशक्तिकल्पनात् विशिष्टशक्तेर्विशे
षणाविषयकविशेष्यबोधाजनकत्वात् विशिष्टशक्त्यानिर्वाहात् चैत्रेणपाचयतीत्यादौहेतुकर्तृसमभिव्याहारेप्रयोज्यस्यहे
तुकर्त्रधीनत्वेपिपर्यंतप्रतिपाद्यपाचनादिक्रियायामेवप्रयोजकस्यकारकतयाप्रयोज्यस्यपचाद्यर्थक्रियाकारकानधीनता
याश्चैवकल्पेननतद्वाचकपदोत्तरंतृतीयानुपपत्तिःस्वतंत्रकर्तृप्रयोजकव्यापारस्यतंडुलक्रयणादिवत्पाकादावन्यथासिद्ध
त्वादकारणत्वेनतस्यपाकादिप्रयोजकव्यापारवत्त्वेपिनक्रियाकारकत्वाभावाच्च अतएवचैत्रेणमैत्रःपाचयतीत्यत्रःमैत्रःप
चतीतिन नन्वस्तूपदर्शितरीत्याचैत्रादेःस्वतंत्रकर्तृतानिर्वाहस्तथापितद्वाचकपदोत्तरंतृतीयानुपपत्तिःकर्तृत्वनिर्वाहकव्यापा

कर्तृविभागमाह अयंचेति अनुपदं तृतीयार्थत्वेन निरुक्तः कर्त्तेत्यर्थः शुद्ध इति हेतुत्वकर्मकर्तृत्वानधिकरणमित्यर्थः प्रेरणा
र्थकणिजप्रकृति धातूपात्तव्यापाराश्रय इति यावत् हेतुरिति णिजर्थप्रेरणाश्रय इत्यर्थः कर्मकर्त्तेति धातूपात्तव्यापाराश्र
यत्वे सति णिजर्थव्यापारेणाप्यमानत्वेन विवक्षित इत्यर्थः कर्मणोदाहरणान्याह मयासेव्यत इत्यादिना अत्र व्यापारविशे
ष्यकबोधोत्कीर्त्तनं तु वैयाकरणाद्यनुसारेण तत्त्वं तु प्रागेवावोचाम आश्रयव्यापाराविति ननु व्यापारस्य धातुनैव लाभात्तत्र शक्ति

अयं च त्रिविधः शुद्धः प्रयोजको हेतुः कर्मकर्त्ता च मया हरिः सेव्यते कार्य्यते हरिणा गमय
ति कृष्णं गोकुलं मद्भिन्नाश्रयको हरिकर्मकसेवनानुकूलो व्यापारः हर्य्यभिन्नाश्रयक उत्पा
दनानुकूलो व्यापारः गोकुलकर्मकगमनानुकूलकृष्णाश्रयकतादृशव्यापारानुकूलो व्यापा
र इति शाब्दबोधः करणतृतीयायास्त्वाश्रयव्यापारो वाच्यो न यथा हि ॥ ९ ॥ ९ ॥

कस्य नमपार्थमित्याशंक्यैकस्य कर्तृनिष्ठव्यापारस्य धातोर्लाभेप्यनुभूयमानकरणनिष्ठव्यापारस्य पदार्थत्वमंतरेण शाब्दविष
यतानुपपत्त्या शक्तिरावश्यकी आख्यातान्वितैकत्वभेदाया एव क्रियाया अवगमाद्व्यापारद्वयस्य धात्वर्थत्वासंभवाच्चेत्यभिप्रेत्य सोक्ता
र्थस्य प्रमाणतां दर्शयितुं करणसंज्ञाप्रतिपादकं सूत्रमुपन्यस्यति तथाहीत्यादिना ॥ श्रीलक्ष्मीनारायणवासुदेवहरिहरायनमः

साधकतममितिसूत्रस्य कारकाधिकारीयत्वात्साधकशब्दादेव प्रकर्षलाभे पि गौणाधारा ऽधिकरणसंज्ञाफलकस्य कारकप्रकरणे
शब्दसामर्थ्यगम्यः प्रकर्षो नाश्रीयत इत्यर्थस्य बोधनाय तमबुपादानमिति सूचयन्नाह तमवर्थः प्रकर्ष इति प्रकर्षश्च कारकान्तरा
पेक्षो न तु करणान्तरापेक्षः कारकसामान्यवाचिसाधकशब्दादुत्पन्नेन तमपा तदवधिकप्रकर्षस्यैव द्योतनात् तेनाश्वेन दीपिकया
याज्जतीति प्रयोगोपपत्तिः अन्यथा करणान्तरापेक्षिकप्रकर्षस्य करणान्तरे ऽभावेन तदनुपपत्तेः नादृश्येति फलोत्पत्त्यव्यवहितपूर्व

साधकतमं करणं तमवर्थः प्रकर्षः स चाव्यवधानेन फलजनकव्यापारवत्त्वात् तादृशव्यापारवत्कारणं च करणम्
उक्तं च वाक्यपदीये क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरं विवक्ष्यते यदा यत्र करणं तत्तदा स्मृतम्॥ ९ ॥

वर्तीत्यर्थः परे तु फलायोगव्यवच्छिन्नकारणत्वं करणत्वं स च व्यापेतरयावत्कारणसमवधाने सति यदव्यवहितोत्तरक्षणे फ
लनिष्पत्तिस्तत्त्वमिति यावत् स एव तृतीयार्थः सम्पन्ने तनिवेशाच्च कुण्डपो ध्वकारे फलायोगे पि न तत्राप्रसङ्गः प्रयोजकेतिप्रसङ्गनिरास
याव्यवहितेति वदन्ति नन्वहरिस्मृतिमध्याहो नञ्चेति अत्र क्रियापदं फलपरम् वाणेन हत इत्यत्र वाणव्यापाराव्यवहितोत्त
रक्षणे प्राणवियोगरूपफलाव्ययंभावात्समक्षेण समन्वयः विवक्ष्यत इत्यनेन विवक्षैव विभक्तौ प्रयोजिका न वास्तवं करणत्व
दिसनेत्युक्तम् अत एव दात्रेऽनादरेण बलस्य तत्त्व विवक्षायां बलेन लुनातीति प्रयोगः॥

वस्तुतद्दृति यतद्दृदमेववस्तुकरयामिति ननियमोऽतएवनिश्चिताधिकरणत्वापिस्थालीतन्तुनरकपालत्वाद्दैवक्षिककरण
त्ववतीत्यर्थः अवकाशमिति तंडुलंस्थाल्यांपचतीत्यादौकरणत्वाविवक्षायांननत्संज्ञाप्रयुक्तद्वितीयादेरवकाशमित्यर्थःतथा
चकाष्ठैः पचतीत्यादौप्रकृत्यर्थकाष्ठादेरभेदेनाश्रयरूपतृतीयार्थेऽन्वयः तस्यचव्युत्पत्तिवैचित्र्येणसमानप्रत्ययोपात्त
त्वप्रत्यासत्त्याव्यापाररूपतदर्थांतरेआधेयतासंबंधेनविक्लित्यनुकूलव्यापारे एवंचकाष्ठाभिन्नाश्रयकोयःफलोपहि

वस्तुतस्तदनिर्देश्यं नहिवस्तुव्यवस्थितम् स्थाल्यापच्यतइत्येषाविवक्षादृश्यतेयतइतिः विवक्ष्यतइत्य
नेनसकृदनेकेषांतदभावात् द्वितीयासप्तम्यादेरवकाशंसूचयतितथैवंकर्त्राशालार्थवत्त्वादित्युत्तर
मीमांसाधिकरणेशक्तिविपर्ययादितिसूत्रेणातः करणस्यकर्तृत्वेकरणशक्तिविपर्ययापत्तिरुक्तान
ःः युज्यतेतिवाच्यम् ॥ ९ ॥

तव्यापारस्तद्विशिष्टोविक्लित्यनुकूलएकाश्रयकोवर्त्तमानोव्यापारइतिबोधः वैशिष्ट्यं
चजन्यजनकभावसंबंधेनबोध्यम् अत्रचयत्सन्निहितेषुसर्वेषुकारकेषुकर्त्ताप्रवर्त्तयिताभवतीतिसकलकारकव्यापारस्य
कर्त्रधीनत्वप्रतिपादकंकारकइतिसूत्रस्थंभाष्यंप्रमाणम् अपरेतुक्रियायाः परिनिष्पत्तिर्यद्व्यापारादनंतरमितिवाक्यस्था
नंतरपदस्वारस्यात्तृतीयार्थव्यापारस्यजन्यतासंबंधे॥

नकारस्याश्रयकव्यापारविशिष्टफलानुकूलो व्यापार इति बोधमाहुः तृतीयार्थकरणत्वस्य व्यापार एवान्वयः शब्दशक्तिस्वभावात् फलांशे
त एव मत्वर्थलक्षणया सोमादिपदस्य नामधेयत्वं सिद्धं नितरां अन्यथा व्यापारप्रतिकरणत्वेनान्विते फलांशे करणत्वेनान्वयोपपत्तौ लक्ष
णायाः प्रसंग एव अत एव सोमेन यजेतेत्यत्र मत्वर्थलक्षणेति मीमांसका इत्यन्ये वस्तुतस्त्वाश्रयोऽवधिरुद्देश्य इति मूलस्वारस्यात्का
रणतृतीयायाः आश्रयमात्रमर्थः प्रकृत्यर्थान्वितस्य तस्य निष्ठव्यापारजन्यत्वसंबंधेन धात्वर्थव्यापारेऽन्वय इत्येवन्यायः नैयायिका
स्त्वसाधारणं कारणं करणं कारणे असाधारण्यं च व्यापारवत्त्वमेव न तु फलायोगव्यवच्छिन्नत्वम् तस्य यावत्कारणघटितत्वाद्गौरवे
णातद्धर्मावच्छिन्ने शक्त्यसिद्धेः स एव च प्रकर्षः साधकतममिति तमपा बोध्यते व्यापारमात्रं करणतृतीयार्थः तस्मिन् प्रकृत्यर्थ
स्याधेयतासंबंधेनान्वयः शेषं पूर्ववदित्याहुः एवमिति एकस्मिन्नपि धर्मिणि कर्तृत्वकरणत्वयोरंगीकारे कर्तृकरणशब्दयो
रविरोध इति यावत् शक्तिविपर्ययादिति एष हि दृष्टान्तो नानुमतो बौद्धविज्ञानात्मा पुरुष इत्यादीनां तथा कर्तुः कर्तव्यविशेषप्र
तिपादकानां यजेत जुहुयादित्यादीनां च सार्थक्याय जीवस्य कर्मोपासनार्थं च त्वादित्यनेन कर्तृत्वबोधिनेत्युक्ते पदव्यवहार्यं वि
ज्ञानमेवास्तु कर्त्रित्याशंकाया विज्ञानशब्दवाच्यबुद्धेः कर्तृत्वाभ्युपगमे लोके समर्थस्यापि कर्तुः सर्वार्थकारिकरणं न रसापेक्ष
स्यैव कार्यकारित्वदर्शनेन विज्ञानपदव्यपदेश्यत्वबुद्धेः करणशक्तिसंपत्तिरतस्तदतिरिक्तजीवस्यैव कर्तृत्वमुचितमित्यर्थः
प्रतिपादके न शक्तिविपर्यायादिति सूत्रेणेत्यर्थः नयुज्यतेति कर्तृकरणशब्दयोर्विरोधस्यैव भवद्भिरभिधानादिति भावः ॥

नदेषामिति प्राणानां इंद्रियाणांविज्ञानंग्रहणशक्तिं विज्ञानेन विज्ञानशब्दवाच्येनमनसा तज्जन्यबुद्ध्यात्मकवृत्त्येतियावत् आ
दायगृहीत्वाहृदयंस्वापेगच्छतीतिश्रुत्यर्थः करणतयेति विज्ञानेनेत्यत्रकरणतयाल्कृप्तस्येत्यर्थः निष्क्रमाणेत्यादेः कर्त्तरि करण
शक्तिस्वीकारेपिद्वयोः शक्त्योरेकदाविवक्षायामसंभवेन विज्ञानंयज्ञंतनुतेइत्यादौकर्त्तृत्वविवक्षायांकरणशक्तिविवक्षाप्रयु
क्तविज्ञानेनेतितृतीयांतनिर्देशापादनासंभवेनतद्विपर्ययसंगाभावादित्याशयादित्यर्थः नन्विदमयुक्तम् अपादानप्रतिपाद

तदेतेषांप्राणानांविज्ञानेनविज्ञानमादायेतिश्रुत्यंतरेकरणतयाल्कृप्तस्यकर्तृतांप्रकल्प्यश
क्तिविपर्ययापत्तिर्निष्क्रमाणाकल्पनइत्यभिप्रायात् वस्तुतस्त्वन्वचयमात्रमेतदितियथा
चतक्षोभययथेत्यधिकरणेभाष्यएवस्पष्टंइतिप्रपंचितंभूषणे॥ ९ ॥ ॥

कग्रंथस्यैवापत्तौ अप्रामाण्यप्रतिपादकत्वासंभवात् आपत्तेः प्राक्तनसूत्रादप्रक्रांतत्वाच्चेत्यतआह वस्तुतस्त्विति अन्वाचयमा
त्रमेतदिति एतत् शक्तिहान्यापत्तिरूपंदूषणंमात्रपदेनतात्पर्यविषयत्वस्यव्यवच्छेदः अन्वाचयत्वंचतात्पर्यज्ञानविषया
र्थसन्निहितत्वम् उपेक्षाविषयत्वंवा तच्चबुद्धेः करणशक्तिविपर्ययेतिदर्शितप्रतिपादकसूत्राद्बुद्धेः कर्मत्वनिरासस्यैवमुख्य

नावगतेरितिभाव भूयणेत्युतदेतेषामित्याद्यभिप्रायादित्यंन पाठोनास्त्येव किंतुनन्वेवकर्तृत्वादिनयुज्यतेतिचेत्सत्यम् अन्वा
चयमात्रमेतदितिपाठः अन्वाचयेति विज्ञानशब्दार्थस्यजीवत्वेभ्रान्तिविपर्य्ययापत्तिः संभाव्यतेनतुनिर्भरलग्नेत्यर्थः उपा
धिवशेनपरमात्मन्येवतत्संभवादितिभावः तदेवविशदयति यथाचेतिसूत्रेचशब्दस्त्वर्थे पराभिमतबुद्धिकर्तृत्वनिरासा
र्थः नहिपरमात्मनोन्योजीवोनामकर्त्ताभोक्तावासंभवति नित्यशुद्धमुक्तात्मनः कर्तृत्वाद्यसंभवात् निर्मोक्षप्रसंगाच्च किंतु
ध्यायतीवलेलायतीवेतिश्रुतेरध्यस्ततत्तत्ववाच्यम् अविद्योपस्थापित तत्परस्यापिसंभवति यत्र हि द्वैतमिवभवतित
दितरइतरंपश्यतीति विद्यावस्थायांतुनतद्भावोयत्रतुसर्वमात्मैवस्यात्तत्केनकंपश्येदितिश्रुतेः यथातक्षावास्या
दिकरणहस्तः कर्त्तादुःखीभवति सएवगृहस्थोविमुक्तवास्यादिनिर्व्यापारः सुखीभवतीतितदर्थः तथाचशक्तिविपर्य
यादित्यस्यपराभ्युपगतबुद्धिकर्तृत्वनिरासतात्पर्येनतुबुद्धेः कर्तृत्वेनकरणशक्तिपरित्यागइतिनतद्विरोधइतिभावः
॥४॥ ॥सप्तम्यर्थंनिरूपयति सप्तम्याश्चापीति ननुतावतासूत्राद्याधार वाच्यत्वलभ्यते नाश्रयस्येत्यतआहतत्त्वंचे २
ति आधारत्वंचेत्यर्थः आश्रयत्वमिति आधेयत्वविशिष्टत्वमित्यर्थः विशिष्टस्यैवशक्तिबोधनेप्याश्रयांशएवसानतु
विशेषणीभूताश्रयत्वेपितत्प्रकारकशाब्दबोधेआश्रयशक्तिज्ञानस्यहेतुताकल्पनयैवतज्ज्ञानोपपत्तेरित्याशयेनाह॥

तत्राश्रयांशः शक्य इति यद्वा ननु तावता परंपरया क्रियाश्रयस्य सप्तम्यर्थत्वं लब्धं नाश्रयमात्रस्येत्यत आह आश्रयांश इति पूर्वो
क्तरीत्या क्रियायाः धातोरेव लाभादनन्यलभ्य आश्रय एव शक्य इत्यर्थः तत्त्वं आश्रयत्वमात्रेणेति शक्यतावच्छेदकस्य कर्त्रादिसा
धारण्यात् करणतृतीयायाश्च व्यापारोपीत्यपि नाश्रयार्थत्वप्रतिपादनादिति भावः कर्तृकर्मद्वारेति एतादृशार्थलाभश्च तत्सू
त्रसामर्थ्यादेव. तथाहि कारकाधिकारीयेणेतेन क्रियान्वय्याधारस्याधिकरणसंज्ञा विधीयते क्रिया च धात्वर्थः साक्षात्तदाधा

सप्तम्याश्च आश्रयोर्थः सप्तम्यधिकरणे चेत्यधिकरणे सप्तमी तच्चाधारोधिकरणमिति सूत्रादाधारः तत्त्वञ्चाश्र
यत्वं तत्राश्रयांशः शक्यः तत्त्वमवच्छेदकम् न चाश्रयत्वमात्रेण कर्मकर्तृकरणानामाधारसंज्ञा स्यात् स्यादेवं यद्
दिताभिरस्यानबाधः स्यात् कारक इत्यधिकृत्य विहितसप्तम्याः क्रियाश्रय इत्येव यद्यपि तात्पर्यं तथाप्यनचकर्मक
र्तृद्वारा तदाश्रयत्वमस्त्येव स्थाल्यादेर्भूतलकटादेश्चेति स्थाल्यां पचति भूतले वसति कटे शेत इत्याद्युपपद्यते उक्तं
च वाक्यपदीये कर्तृकर्मव्यवहितामसाक्षाद्धारयत् क्रियाम् उपकुर्वत् क्रियासिद्धौ शास्त्रेधिकरणं स्मृतमिति॥

रयोः पराभ्यां कर्तृकर्मसंज्ञाभ्यामाक्रान्तत्वादिदं सूत्रमनवकाशं सत् परंपरया धात्वर्थाश्रयस्याधिकरणसंज्ञाविधानेन चरि
तार्थं परंपराघटके च कर्तृकर्मणी एवेति परया कर्मसंज्ञया बाधादेव मोक्षे इच्छास्तीति वन्मोक्ष इच्छतीति भवतीति न प्रयोगः ॥

त्त्वावगमेरितिभाव भूषणेतुतदेतेषामित्याद्यभिप्रायादित्यंत. पाठोनास्त्येव किंतुनन्वेवकर्तृत्यादिनयुज्येतेतिचेन्सत्यम् अन्वा
चयमात्रमेतदितिपाठः अन्वाचयेति विज्ञानशब्दार्थस्यजीवत्वेशक्तिविपर्य्ययापत्तिः संभाव्यतेनतुनिर्भरस्तस्मेत्यर्थः उपा
धिवशेनपरमात्मन्येवतत्संभवादितिभावः तदेवविशदयति यथाचेतिसूत्रेचशब्दस्त्वर्थे पराभिमतबुद्धिकर्तृत्वनिरासार्
थः नहिपरमात्मनोन्योजीवोनामकर्त्ताभोक्तावासंभवतिनित्यशुद्धस्यात्मनः कर्तृत्वाद्यसंभवान्निर्मोक्षप्रसंगाच्च किंतु
ध्यायतीवलेलायतीवेतिश्रुतेरध्यस्ततत्तत्रवाच्यम् अविद्योपस्थापित तत्परस्यापिसंभवति यत्रहिद्वैतमिवभवतितद
दितरइतरंपश्यतीति विद्यावस्थायांतुतदभावोयत्रतुसर्वमात्मैवस्यात्तत्केनकंपश्येदितिश्रुतेः यथातक्षावास्या
दिकरणहस्तःकर्त्तादुःखीभवति सएवगृहस्थोविमुक्तवास्यादिनिर्व्यापारःसुखीभवतीतितदर्थः तयाचशक्तिविपर्य
यादित्यस्यपराभ्युपगतबुद्धिकर्तृत्वनिरासेतात्पर्यंनतुबुद्धेःकर्तृत्वेनकरणशक्तिपरित्यागइतिनतद्विरोधइतिभाव
॥ॐ॥ ॥सप्तम्यर्थंनिरूपयति सप्तम्याश्चपीति ननुतावतासूत्रेआधार वाच्यत्वलभ्यते नाश्रयस्येत्यतआह तस्यांचे
ति आधारत्वंचेत्यर्थः आश्रयत्वमिति आश्रयत्वविशिष्टत्वमित्यर्थः विशिष्टेसूत्रेणशक्तिबोधनेप्याश्रयांशएवसानतुत
द्विशेषणीभूताश्रयत्वेपितत्प्रकारकशाब्दबोधे आश्रयशक्तिज्ञानस्यहेतुताकल्पनयैवतद्भानोपपत्तेरित्याशयेनाह॥

तत्राश्रयांशः शक्य इति यद्यननुगतावततापरंपरयाक्रियाश्रयस्य सप्तम्यर्थत्वं लब्धं नाश्रयमात्रस्येत्यत आह आश्रयांश इति पूर्वो
क्तरीत्या क्रियायाः धातोरेव लाभादनन्यलभ्याश्रय एव शक्य इत्यर्थः तत्त्वं आश्रयत्वमात्रेणेति शक्यतावच्छेदकस्य कर्त्रादिसा
धारण्यात् करणतृतीयायाश्च व्यापारेपीत्यपि नाश्रयार्थत्वप्रतिपादनादिति भावः कर्तृकर्मद्वारेति एतादृशार्थलाभश्च तत्सू
त्रसामर्थ्यादेव तथाहि कारकाधिकारीयेणैतेन क्रियान्वय्याधारस्याधिकरणसंज्ञा विधीयते क्रिया च धात्वर्थः साक्षात्तदाधा

सप्तम्याश्रय्याश्रयोर्थः सप्तम्यधिकरणे चेत्यधिकरणे सप्तमी तच्चाधारोधिकरणमिति सूत्रादाधारः तत्त्वञ्चाश्र
यत्वं तत्राश्रयांशः शक्यः तत्त्वमवच्छेदकम् न चाश्रयत्वमात्रेण कर्मकर्तृकरणानामाधारसंज्ञा स्यात् स्यादेवं यः
दिताभिरस्यानबाधः स्यात् कारक इत्यधिकृत्य विहितसप्तम्याः क्रियाश्रय इत्येव यद्यपि तात्पर्यं तथाप्यत्र कर्मक
र्तृद्वारा तदाश्रयत्वमस्त्येव स्थाल्यादेर्भूतलकटादेश्चेति स्थाल्यां पचति भूतले वसति कटे शेते इत्याद्युपपद्यते उक्तं
चवाक्यपदीये कर्तृकर्मव्यवहितामसाक्षाद्धारयत्क्रियाम् उपकुर्वत् क्रियासिद्धौ शास्त्रेधिकरणं स्मृतमिति॥

रयोः पराभ्यां कर्तृकर्मसंज्ञाभ्यामाक्रान्तत्वादिदं सूत्रमनवकाशं सत् परंपरया धात्वर्थाश्रयस्याधिकरणसंज्ञाविधाने न चरि
तार्थं परंपराघटके च कर्तृकर्मणी एवेति परत्वात् कर्मसंज्ञया बाधादेव मोक्षे इच्छास्तीति वन्मोक्षमिच्छतीति भवतीति न प्रयोगः ॥

औपश्लेषिकमिति सामीप्यसंबंधनिबंधनमित्यर्थः सामीप्यस्यापि संयुक्तसंयोगरूपतया संयोगपदेन तस्यापि संग्रहात् आधेयव्याप्यतावच्छेदकयत्किंचिदवयवकमिति यावत् वैषयिकमिति विषयतासंबंधनिरूपकमित्यर्थः अभिव्यापकमिति आधेयव्याप्यतावच्छेदकयावदवयवकमित्यर्थः तत्राद्यस्य कटे शेते गुरौ वसतीत्युदाहरणे द्वितीयस्य मोक्षे इच्छास्तीति अन्त्यस्यासंकटे शेते इत्यत्र परंपराकटाभिन्नाश्रयकः शयनानुकूलो व्यापार इति बोधः एवमन्यत्राप्यूह्यं भाष्ये संहितेति तत्र हि संहिताधिकारं इनायसंयोगः शक्योऽवक्तुं अधिकरणनाम त्रिप्रकारं व्यापकमौपश्लेषिकं वैषयिकमिति इकः शब्दस्याच्छब्देन कोऽन्योऽभिसंबंधो भवितुमर्हत्यन्यदत उपश्लेषात् इकोयणचि उपश्लिष्टस्येति तत्रान्तरेणाग्रहणं संहितायामेव भविष्यतीत्युक्तम् अत्रोप-

एतच्च त्रिविधं औपश्लेषिकं वैषयिकमभिव्यापकं चेति कटे शेते गुरौ वसति मोक्षे इच्छास्ति तिलेषु तैलमिति एतच्च संहितायामिति सूत्रे भाष्ये स्पष्टम्

श्लिष्टपदाध्याहारेण सप्तमीत्यर्थे इदमेव भाष्यमान संहितायामित्युपलक्षणमत्र प्रदीपे कार्यं भवतीत्यादि सूत्रस्य भाष्यस्यापि तत्राधिकरणत्वविध्यप्रतिपादनादिति नैयायिकास्तु संयोगेनाधारः समवायेनाधारः इत्याद्यनुगतप्रतीतिवशादाधारत्वमखंडोपाधिः संयोगादिरूपं तु न तत् कुंडसंयोगिनो बदरादेरपि कुंडाधारतापत्तेः न तु बदरप्रतियोगिकत्वविशिष्टसंयोगानुयोगितायाः कुंडाधारताव्यवहारनियामकत्वात् युगपदभ्राज्ञो दोषो न वा कुंडे कुंडसंयोगानुयोगितासत्त्वेपि कुंडे कुंडमिति प्रतीत्यापत्तिः कुंडप्रतियोगिकत्वविशिष्टसंयोगानुयोगितायास्तत्र विरहादिति चेदेवमपि मल्ले मल्लान्तरसंयोगसत्त्वे उक्तानुयोगिताभ्योप्यान्मल्ले मल्ल इति व्यवहारापत्तेरशक्यवारणत्वेनोक्तप्रकारस्यैवानुसर्तव्यत्वात् आधारताश्रमाः

धारत्वमाधेयत्वंवासप्तम्यर्थः कस्याधारत्वइत्याकांक्षायांक्रियानिरूपितस्यतस्यबाधादुपस्थितत्वाच्चैककर्मणोराधारएवसेतितयोरे
वतदन्वयः भूतलेघटइत्यादौनयत्रक्रियाश्रवणंतत्रापिकारकत्वनिर्वाहायतदध्याहारस्यावश्यकताईदृशस्थलेपरंपरासंबंधर
स्यापिक्रियान्वयित्वरूपकारकत्वघटकताशास्त्रप्रामाण्यादतएवाक्षशौंडइत्यादौसामर्थ्योपपत्तिरेवंचभूतलेघटोस्तीत्यत्रभू
तलवृत्तिघटोवर्त्तमानसत्ताश्रयइतिबोधः नञ्समभिव्याहारेतुतादृशसप्तम्यर्थाभावोघटांशेभासतेइत्याहुः ॥ ॥

अवधिः पंचम्यर्थः अपादानेपंचमी तच्चध्रुवमपायेऽपादानमितिसूत्रादपायोविश्लेषस्तज्जनकक्रियातत्रावधिभू
तमपादानमित्यर्थकादवधिभूतमितिभावः उक्तंचवाक्यपदीये अपायेयदुदासीनंचलंवायदिवाचलम् ध्रुवमेवात
दावेशात्तदपादानमुच्यते पततोध्रुवएवाश्वोयस्मादश्वात्पतत्यसौ तस्याप्यश्वस्यपतनेकुड्यादिध्रुवमिष्यते उभाव
वप्यध्रुवौमेषौयद्यप्युभयकर्मके विभागेप्रविभक्तेतुक्रियेतत्रव्यवस्थिते मेषान्तरक्रियापेक्षमवधित्वंपृथक्पृथक्
मेषयोस्स्वक्रियापेक्षंकर्त्तृत्वञ्चपृथक्पृथक् ॥ ॥ पंचम्यर्थंनिरूपयति अवधिः पंचम्यर्थइति विश्लेषइति विभागइत्यर्थः
अवधित्वंचप्रकृतधात्वर्थविभागजनकतत्क्रियानाश्रयत्वेसति प्रकृतधात्वर्थविभागाश्रयत्वम् करणादिकारकेऽतिव्याप्तिवारणा
यविशेष्यं यत्किंचित्क्रियाजन्यविभागस्यतत्रापिसत्वादतिप्रसंगतादवस्थ्यमतस्तद्विशेषणंप्रकृतेति एवंचवृक्षात्पततीत्यादौ
विभागजनकक्रियापतत्यर्थः यद्यप्यत्र धातुनागतिर्निर्दिश्यतेनान्तिर्दिष्टविषयमिति अधिकंहरिपद्यव्याख्यावसरेग्रंथकृ

ननुद्वक्रित्वेनापिधात्वर्थक्रियाविशेषणीयेत्याह क्रियाचेति वृक्षकर्मजविभागवतिवस्त्रइत्युक्त्यावस्त्रद्वारकसंबंधेनक्रियान्वयित्वे
वृक्षस्यसूच्यते क्रियाजनकत्वंकारकत्वमितिमतेतुतत्रवृक्षस्यापादानत्वं दुरुपपादमेव संगच्छत इति नादृशात्वृक्षनिष्ठक्रियायाः
प्रकृतपतधात्वर्थत्वाभावेनतद्वृतिवृक्षेनाव्याप्तिरितिभावः अत्रवदंति पंचम्याआश्रयइव विभागोप्यर्थः विभागार्थकपतत्यादि
समभिव्याहारेकरणतृतीयाव्यापारएव अनेकधातूनांविभागेशक्तिकल्पनापेक्षयाएकस्याः पंचम्यास्तत्रशक्तिकल्पनायांलाघ
वात् विभागस्यधात्वर्थत्वेद्वितीयादिस्थलइवविभागस्यधातुनालाभादाश्रयमात्रंपंचम्यर्थइत्येवब्रूयात् अवधेराश्रयात्पृथ

क्रियाचात्रधात्वर्थोनतुस्पंदः तेनवृक्षकर्मजविभागवतिवस्त्रेवृक्षाद्वस्त्रंपततीतिसंगच्छते

गुपादानत्वेयथ्योत्पत्तिपत्योः पर्योपतापतेश्च प्रकृतेऽधोदेशसंयोगानुकूलक्रियैवपतत्यर्थः अधोदेशश्चसंयोगांशेउपलक्षणम् गं
म्युपात्तसंयोगफलउत्तरदेशवत् विभागाधीनपूर्वदेशसंयोगनाशमंतरेणक्रियायाः संयोगजनकत्वासंभवात्तस्याविभागजनक
त्वमक्षुण्णमेवसमानप्रत्ययोपात्तत्वप्रत्यासत्त्याव्युत्पत्तिवैचित्र्येणाश्रयरूपपंचम्यर्थस्यविभागरूपापरतदर्थेआधेयतयान्व
यस्तस्यचानुकूलतासंबंधेनपतत्यर्थेक्रियायां एवंचविभागस्यधात्वर्थत्वाभावान्नकर्मताप्रसंगलेशोपि यद्वा अवधिरित्यनुगत
व्यवहारादवधित्वमाश्रयत्वमाश्रयत्वव्याप्यमखंडोपाधिस्तदवच्छिन्न एवपंचम्यर्थः अतएवावधेराश्रयात्पृथगुपादानम्॥

उक्तापादानत्वस्यपंचमीवाच्यतावच्छेदकत्वेगौरवंमंनस्याधायाह वस्तुतइति लक्षणमात्रमिति मात्रपदेनशक्यतावच्छेदकत्वव्यवच्छेदः तथाचव्यावृत्त्यादिफलकंनिरुक्तावधित्वमेवपंचम्यर्थस्तुविभागाश्रयमात्रमेवेतिभावः नन्वेवंवृक्षात्पर्णंपततीत्यत्रपर्णेपि विभागाश्रयत्वस्यावैकल्यात्तदुत्तरंपंचम्यापत्तिरत्त्याह अतिप्रसंगस्येति द्वितीयार्थोक्तरीत्येति चैत्रोग्रामंगच्छतीतिवच्चैत्रःस्वंगच्छतीतिवारणायपरयाकर्तृसंज्ञयाबाधादित्युक्तरीत्येत्यर्थः स्पंदस्यप्रस्रवणजन्यविभागाश्रयत्वस्यवृक्षेसत्त्वादतिप्रसंगमाशंक्य निषेधति नचेति एवमिति विभागाश्रयत्वमात्रस्यापादानसंज्ञानियामकत्वेइत्यर्थः स्यादिति प्रस्रवणस्याधोदेशसंयोगानुकूल

वस्तुतस्तुनैतावत्पंचम्यावाच्यंकिंत्ववधेर्लक्षणमात्रंद्वितीयार्थोक्तरीत्याप्रयोगातिप्रसंगस्यासंभवेनवाच्यकोटौप्रवेशस्यगौरवेणासंभवादितितुप्रतिभाति नचैवंवृक्षात्स्पंदतइतिस्यादितिशंक्यम् आसनाच्चलितःराज्याच्चलितइतिवद्दिष्टत्वात् एतेनपंचमीजन्यापादानत्वबोधेसकर्मकधातुजन्योपस्थितेर्हेतुत्वमितिसमाधानमासी

द्रवद्रव्यक्रियारूपतयाविभागस्यधात्वर्थाभावेनपरमतेआपत्त्यसंभवादित्याशयः इष्टत्वादितिचलत्यर्थक्रियाजन्यविभागाश्रयत्वस्यैवतदर्थक्रियाजन्यविभागाश्रयत्वस्यापिपंचमीनियामकत्वे क्षतिविरहादित्यर्थः चलतेर्गत्यर्थकत्वेपिराज्याच्चलितइतिप्रयोगेविभागानुकूलक्रियापरत्ववत्स्पंदेरपितदर्थत्वमुपगम्यापत्तेरिष्टत्वमितिभावःजलमत्रकर्तृवृक्षस्यैवकर्तृत्वविवक्षायांतुपरयाकर्तृसंज्ञयाबाधेनोक्तापत्तेरसंभवादितिभावः॥

नन्वेवमप्रीति। एवमपि धात्वर्थविभागाश्रयत्वस्यापादानसंज्ञानियामकत्वेऽपीत्यर्थः दुर्वारमिति धात्वर्थक्रियाजन्यविभागाश्रयत्वादिति भावः कर्मसंज्ञयेति वृक्षस्य त्यज्यर्थव्यापारजन्यविभागाश्रयत्वादिति भावः पूर्वमतिप्रसंगः कर्तृसंज्ञामादायैवोक्त इदानीं तु कर्मसंज्ञामादाय प्राप्तः स निवारित इति बोध्यम् अनुभवसिद्ध इति वस्तुतो विभागावधित्वस्य वृक्षे बाधानज्ञान्यत्वेऽथस्य प्रमात्वमिष्टमेव विभागाश्रयस्यैवावधित्वोक्तेः त्यजतेः पतत्यर्थे लक्षणात्र हद शायां वृक्षात्पर्णं त्यजतीति प्रयोगस्याप्रामाणिकत्वेन कारणवच्छेदककोटौ न्यः

नन्वेवमपि वृक्षात्त्यजतीति दुर्वारं कर्मसंज्ञयाऽपादानसंज्ञाया बाधेन पंचम्यसम्भवात् अमान्तेन तत्प्रयोगे यद्विवधाभावोऽनुभवसिद्धस्तर्हि पंचमीजन्यापादानत्वबोधे त्यज्यादिभिन्नधातुजन्यबुद्धेर्हेतुत्ववाच्यम् वस्तुतः हकादि द्योतनइत्यादौ ति. सत्येत्यध्याहार्य्यम् रूपरसात्पृथगित्यत्र बुद्धिकल्पितमपादानत्वद्रष्टव्यम् पृथग्विनेति पंचमी वा दूरत्त्व निर्दिष्टविषयं किंचिदुपात्तविषयं तथा अपेक्षितक्रियं चेति त्रिधापादानमुच्यते इति वाक्यपदीयात्त्रिविधम्

आदिभिन्नत्वस्य धात्वर्थे निवेशयितुमशक्यत्वादित्यभिप्रेत्योक्तं यदीति निःसृत्येति निःसरणपूर्वके विद्योतने धातोर्वृत्तिमुपगम्य पंचम्युपपाद्येत्यर्थः अत एवोपात्तविशेष्यस्यान्तर्भावो वक्ष्यमाण संगच्छते बुद्धिपरिकल्पितमिति बोद्धव्य विभागावधित्वमाश्रित्येत्यर्थ तादृगपादानत्वाश्रयणे प्रमाणशैथिल्यं मत्वाह पृथगिति ॥

गतिरिति विभागजनकक्रियेत्यर्थः उपात्तविषयमपि समभिव्याहृत
साक्षादिति मुख्यवृत्त्येत्यर्थः धातुनेत्यस्य समभिव्याहृतेत्यादिः
धातुनोपात्तो लक्षितो गतिरूपो विषयो यत्रेत्यर्थः अपेक्षितक्रियमिति अनुपात्तधात्वर्थक्रियासाकांक्षमित्यर्थः बलाहकादिति धूम
मरुज्ज्योतिः समूहो बलाहकः ततोवयवभूतज्योतिषामेव विभागविवक्षणात् सोवधिः द्युतिश्च लक्षणया निःसरणपूर्वकविद्योतन
बोधकः तथा च बलाहकावधिकनिःसरणोत्तरकालिकं विद्युत्कर्तृकं विद्योतनमिति बोधः अध्याहृत्येति अर्थाध्याहाराभिप्रायेण

यत्र साक्षाद्धातुना गतिर्निर्दिश्यते तन्निर्दिष्टविषयम् यथाश्वात्पतति यत्र धात्वन्तरार्थांगं स्वार्थं धातुराह तदुपात्तविषय
म् यथा बलाहकाद्विद्योतते निःसरणांगे विद्योतने द्युतिर्वर्तते अपेक्षितक्रिया यत्र तदन्यत् यथा कुतो भवान् पाटलि
पुत्रात् आगमनमर्थमध्याहृत्यान्वयः कार्यः ॥

॥ पदाध्याहारवादे तु आकांक्षितक्रियावाचकपदानुसंधानेप्यनुपात्तत्वरू
पविशेषणघटितलक्षणावैकल्यं बोध्यम् प्रमाणं तत्र युष्मेभ्यः स्पृहयतीत्यादौ स्पृहयत्यादियोगे संप्रदानादिसंज्ञाविधायकानि
स्पृहेरीप्सित इत्यादिसूत्राणि तैस्तत्तद्धातुयोग एव तद्बोधनात् अर्थाध्याहारे तु क्रियार्थोपपदस्येत्यादिसूत्रे त्वञ्लोपइत्यादिवार्तिका
निच अन्ये त्विदमित्थं व्याचक्षते यत्र विभागस्तज्जनकक्रिया चोभयम् धातुनाभिधीयते तदाद्यं यत्र विभागो ध्याहृतधातुना तथा
न द्वितीयम् यत्र तूभयमप्यध्याहृतधात्वभिधेयम् तत्तृतीय मिति अधिकमन्यतोवधार्य्यम् ॥

चतुर्थ्यर्थं निरूपयति उद्देश्य इति ननूद्देश्यत्वं कामनाविषयत्वं तच्च विप्राय गां ददातीत्यत्र क्रियाजन्यफलभागितया कामनावि
षये गवादावतिप्रसक्तमतस्तद्व्याचष्टे तत्सूत्रप्रामाण्येन दर्शयति तच्चकर्मणेत्यादि कर्मणेत्यनन्तरं सम्बद्धमिति शेषः. कर्मचात्र
पारिभाषिकं क्रियया यमभिप्रैतीति क्रियाव्याप्यमानस्य संप्रदानसंज्ञाविधानात् अतएव तदकर्मकविषयम् ननु ग्रामं गच्छतीत्य
त्र ग्रामरूपकर्मजन्यसुखादिफलभागितद्देश्ये कर्तरि अतिप्रसंगोऽत आह करणभूतेनेति करणत्वं च सम्बन्धक्रियापेक्षम् क्रिया
वहिनव्यापारवत एव करणतया व्यापारे कर्मवृत्तित्वलाभेन तद्वृत्तित्वस्य धात्वर्थतावच्छेदकफल एव सम्भवात् कर्मवृत्तितज्जन्य

उद्देश्यश्चतुर्थ्यर्थः तथाहि सम्प्रदाने चतुर्थी तच्च कर्मणा यमभिप्रैति स सम्प्रदानमिति सूत्रात्कर्मणा करणभूतेन य
मभिप्रैति ईप्सति तत्कारकं सम्प्रदानमित्यर्थकादुद्देश्यम्॥ ११ त्वस्य प्रेमजन्यसुखेऽसत्त्वान्नोक्तातिप्रसंग इति भाव य

मित्यस्यानुपादाने योऽभिप्रैतीत्यर्थस्यापि लाभात् प्रयमानकर्तरि अतिसप्रग. स्यादत तदुपात्त यद्यपि गोर्ब्राह्मणस्वं भवत्वितीच्छा
विशेष्यतया गामेवावगाहते तथा सूत्रफलितार्थपरत्वान्न दोष तथाच कर्मजन्यतद्वृत्तिफलभागित्वप्रकारको यद्विशेष्यकोऽ
भिप्रायः स सम्प्रदानमिति सूत्रार्थः तादृशफलसम्बन्धिकप्रकारतानिरूपितविशेष्यताश्रय इति यावत् विप्राय गां ददातीत्यादौ पर
स्वत्वजनकस्वस्वत्वध्वंसावच्छिन्नेच्छात्मकस्त्यागो दाधात्वर्थः उद्देश्यत्वं चतुर्थ्यर्थ गोरूपकर्मणश्चाप्यत्वेन स्वत्वरूपफले तथा
चगोरनिस्वत्वजनकस्वस्वत्वध्वंसानुकूलो

विप्राभिन्नोद्देश्यकत्यागइति वैयाकरणमते बोधः उद्देश्यत्वं च विप्रे गोजन्यस्वत्वभागितयेच्छाविषयत्वमेव एवं वृक्षायोदकं
मासिंचतीत्यत्राप्युदकनिष्ठक्रियाजन्यसंयोगफलभागितयेच्छाविषयत्वात्संप्रदानत्वमूह्यं नैयायिकास्तु परस्वत्वेच्छाधीनस्वस्व
त्वध्वंसेच्छात्यागइति मते स्वस्वत्वध्वंसावच्छिन्नत्यागो ददात्यर्थः विशेष्यत्वं चतुर्थ्यर्थः तस्य स्वनिरूपकनिरुक्तेच्छाजन्यत्वसंबं
धेन ददात्यर्थत्यागे गोरूपकर्मणस्त्वाधेयतया स्वस्वत्वध्वंसरूपफले तथा च गोवृत्तिस्वस्वत्वध्वंसजनको निरुक्तसंबंधेन वि
प्रनिष्ठविशेष्यताविशिष्टो यस्त्यागस्तदाश्रयश्चैत्र इति वाक्याद्बोधः यदि तु गौर्विप्रस्य भवतु न ममेतीच्छैव त्यागो दाधात्वर्थः ए
वं च उक्तस्थले निरूपितत्वेनेच्छाविषयत्वं चतुर्थ्यर्थः तस्य च स्वस्वत्वध्वंसेऽन्वयात् विप्रनिरूपितत्वेन इच्छाविषयगोवृत्ति
स्वस्वत्वध्वंसपूर्वकपरस्वत्वोत्पत्त्यवच्छिन्नत्यागाश्रय इति बोधः जन्यस्वत्वस्य गोवृत्तित्वेऽवगतेऽर्थात्तस्मिंस्तज्जन्यत्वलभ्य
ते एवेति गोजन्यस्वत्वनिरूपकत्वेनेच्छाविषयत्वरूपमुद्देश्यत्वं विप्रस्याक्षतम् वृक्षायोदकमासिंचतीत्यत्र तु संयोगावच्छिन्न
द्रवद्रव्यक्रियावच्छिन्नव्यापारो धात्वर्थः वृत्तित्वेनेच्छाविषयत्वं चतुर्थ्यर्थः स च धात्वर्थतावच्छेदकसंयोगान्वयी द्वितीयार्थवृ
त्तित्वं तु द्रवद्रव्यक्रियान्वयि तथा च वृक्षवृत्तित्वेनेच्छाविषयो यः संयोगस्तदवच्छिन्ना पोदकवृत्तिर्द्रवद्रव्यक्रिया तदवच्छिन्न
व्यापारानुकूलकृतिमानिति बोधः न चैवं सिचधात्वर्थतावच्छेदकद्रवद्रव्यक्रियायां द्वितीयार्थवृत्तित्वान्वये पयसा वृक्षं सिंचतीति
न स्यात्तादृशक्रियाया वृक्षावृत्तित्वादिति वाच्यम् तत्तु संयोगावच्छिन्नद्रवद्रव्यक्रियाया एव धात्वर्थतया तदवच्छेदकीभूतसं
योग एव वृक्षवृत्तित्वान्वयान्नानुपपत्तिरित्याहुः अपरे तु विजातीयत्यागजन्यफलभागितयोद्देश्यत्वं संप्रदानत्वं चतुर्थ्यर्थः ॥

प्र

एवंचविप्रायगांददातीत्यादौत्यागजन्यफलभागित्वंकारकब्राह्मणस्यतु उद्देश्यताकगोविषयकत्यागाश्रयइतिबोधः रुद्रायगांददा
तीत्यत्ररुद्रस्यत्यागजन्यफलभागितयोद्देश्यत्वमस्त्येवस्वत्वंतुतस्यजायमानेनवेत्यन्यत् त्यागजन्यफलंतुस्वत्वरूपंग्राह्यं तेनपि
तृस्वर्गमुद्दिश्यदत्तापां गांविप्रब्राह्मणस्यसंप्रदानत्वोपपत्तिः पितुः स्वत्वरूपंफलंनोद्देश्यंकिंतुस्वर्गः पितृभ्योदद्यादित्यादौ
तुरुद्रायगांददातीतिवत्संप्रदानत्वमस्त्येवत्यागेवैजात्यंनिवेश्यं नचैवं.संप्रदानत्वं वृक्षायोदकमासिंचतीत्यादौतुचतुर्थ्यर्थे
गौणसंप्रदानत्वम् तत्रसिचेर्द्रवद्रव्यवृत्तिसंयोगानुकूलाक्रियाउदकादिपदसमभिव्याहारेचसंयोगानुकूलक्रियामात्रमर्थः
चतुर्थ्यर्थस्तुवृत्तित्वम् इत्थंचवृक्षवृत्तिउदकीयसंयोगावच्छिन्नक्रियेत्यादिबोधः अत्रचतुर्थीद्वितीयाभ्यांतुल्यबोधजनना
त्तत्रद्वितीयामाभूदितिसंप्रदानसंज्ञातुक्रियते वृक्षंपयसासिंचतीत्यादौतुवृक्षशब्दाद्द्वितीयाभवत्येवतत्रद्वितीयार्थोऽभेदस्तु
सद्द्रवद्रव्येऽन्वयः द्वितीयार्थवृत्तित्वस्यतुसंयोगेन्वयः तथाचवृक्षवृत्तिसंयोगानुकूलोदकाभिन्नद्रवद्रव्यक्रियेतिबोधः
शत्रवेऽस्त्रंमुंचतीत्यत्रदुःखोद्देश्यकत्वंचतुर्थ्यर्थः मोचनाविभागावच्छिन्नक्रियाक्रियानुकूलव्यापारोवा प्रकृत्यर्थस्यवृत्ति
त्वेनचतुर्थ्यर्थैकदेशेदुःखेऽन्वयः एवंमित्रायदूतंप्रेषयतीत्यत्रवार्त्तादानोद्देश्यकत्वं पुत्रायधनंप्रेषयतीत्यत्रप्रीत्युद्देश्यक
त्वंचतुर्थ्यर्थइत्याद्यूह्यमित्याहुः तन्नसम्यक् संप्रदानेहिचतुर्थीनचभवद्रक्षसंप्रदानत्वेकिंचिन्मानंयेनवृक्षायेत्यत्रचतु
र्थीस्यात् किंचसंयोगरूपधात्वर्थान्वयित्वाविशेषादुदकपदादपिचतुर्थ्यापत्तिः वाभक्तकर्मत्वंतुवृक्षेप्यक्षतमितितत्किंचिदेतत्

इदमेवेति निरूक्तोद्देश्यत्वमेवेत्यर्थः पूर्वतंत्रे मीमांसायां अतएवेति शेषित्वस्यार्थकर्मप्रयोजकत्वादेवेत्यर्थः प्रासनवदिति ज्योतिष्टो
मेश्रूयते नीतासु दक्षिणासु चात्वाले कृष्णविषाणं प्रास्यतीति यदा यजमानेन दत्ता दक्षिणा ऋत्विग्भिर्नीतास्तदा यजमानः स्वहस्ते धृतं
कृष्णमृगशृंगं चात्वालनामकगर्त्ते प्रक्षिपेदिति तदर्थः तत्रैवं संदिह्यते किमेतत्प्रासनमर्थकर्मेति प्रतिपत्तिकर्मेति वा अर्थकर्मैव भ
वितुमर्हति सप्रयोजनत्वात् प्रतिपत्तितायां तु अपूर्वाभावे निरर्थकमेव स्यादिति पूर्वपक्षे कृष्णविषाणया कंडूयतीति श्रुत्या कृतार्थ
स्य प्रतिपत्त्यपेक्षत्वात् प्रतिपत्तिकर्मैव युक्ता नचानर्थक्यम् प्रासनक्रियाप्रयुक्तापूर्वाभावेपि चात्वाल एवेति नियमापूर्वसद्भावा
दिति सिद्धांतितं तद्वद्दंडदानं प्रतिपत्तिरिति योजना इत्यधिकरण इति चतुर्थाध्याय इति शेषः ज्योतिष्टोमं प्रकृत्यैव मैत्रावरुणाय

इदमेव शेषित्वं तदुद्देश्यत्वे च्छा विषयत्वं च शेषत्वमित्येव पूर्वतंत्रे निरूपितम् अतएव प्रासनवन्मैत्रावरुणाय दंडप्रदान
मित्यधिकरणे क्रीते सोमे मैत्रावरुणाय दण्डम्प्रयच्छतीति विहितं दंडदानं न प्रतिपत्तिः किंतु चतुर्थ्यास्तु स्यार्थकर्मेति तत्र नि
॥र्णीतम्

दंडं प्रयच्छतीति श्रूयते तत्र दंडदानस्यार्थप्रतिपत्तिकर्मभावसंदेहेऽध्वर्युणा दीक्षासिद्धेर्दत्तदंडस्यासोमक्रयाद्यजमानधारणेन
कृतार्थत्वादुपयुक्तस्य तस्य दानं प्रतिपत्तिकर्मैवेति पूर्वपक्षे दंडी प्रैषानन्वाहेति श्रवणान्मैत्रावरुणस्य प्रैषानुवादे अवलंबनाय दंडोपेक्षि
तः एवं च भविष्यदुपयोगसद्भावात्प्रतिपत्तिकर्मण उपयुक्तसंस्काररूपादर्थकर्मैवोपयोक्ष्यमाणसंस्काररूपप्रशस्तम् उपयोजिता
मेव सर्वत्र संस्कारप्रवृत्तेः उपयुक्ते तु प्रतिपत्तिरूपसंस्कारस्याऽसंस्कारमात्रपर्य्यवसायित्वेन कार्य्यपर्य्यवसानाभावादप्रशस्तत्वमतो
मैत्रावरुणसंस्कारायतद्दानमर्थकर्म तथा सति निरूढपशावःसत्यपि दीक्षिते दंडसंपादनस्यैव दानं प्रयोजकमिति सिद्धांतितम्

ननु यन्न दा धातुरधीनीकरणाद्यर्थकस्तत्राधीनत्वादिरूपफलनिरूपकतयेच्छाविषयत्वरूपसम्प्रदानत्वस्य रजकादावपि संभवाद्र
जकाय वस्त्रं ददाति हे भ्रे उष्ट्र ददातीत्यादिप्रयोगाः प्रसज्येरन्नित्याशङ्कामिष्टापत्त्या परिहरति रजकायेति तत्र प्रमाणमुपन्यस्य
ति खण्डिकोपाध्याय इति ददातीति दाधात्वर्थसंयोगसम्बन्धित्वेनेच्छाविषयत्वरूपोद्देश्यत्वस्य तत्र सत्त्वादिति तद्भावः अस्मिन्न
योगे ददाति स्वयोगानुकूलव्यापारार्थक. चपेटापदार्थस्तु प्रहारकरणत्वं न मूर्खाय मतिं दद्यादित्यत्र ददातिर्बोधनार्थक मतिपदा
र्थश्च तज्जनकवेदादिशास्त्रमिति बोध्यम् स्वस्वत्वनिवृत्तीति परस्वत्वोत्पत्त्यवच्छिन्नस्वत्वध्वंसेच्छारूपव्यापार अर्थे दाधात्वर्थ

रजकाय वस्त्रं ददातीत्यपि खण्डिकोपाध्यायस्तस्मै चपेटां ददातीति भाष्योदाहरणादिष्वमेव वृत्तिकारास्तु सम्यक् प्रदी
यते यस्मै न तत्सम्प्रदानमित्यन्वर्थसंज्ञया स्वस्वत्वनिवृत्तिपर्यन्तमर्थं वर्णयतो रजकस्य वस्त्रमित्येवाहुः ॥ ९ ॥

मित्यर्थः तथा चोक्तार्थकदाधात्वर्थकर्मनिष्ठफलभागितयेच्छाविषयत्वमेव सम्प्रदानत्वम् अन्वर्थमहासंज्ञाकरणसामर्थ्यादुक्त
स्यले ष ददाने स्तदर्थकत्वाभावेन रजकस्य वस्त्रं ददातीत्येवेति तेषामाशय उक्तभाष्यप्रामाण्यादन्वर्थत्वमेवासिद्धम् महासंज्ञा
कारणत्तु प्राचामनुरोधादेव सर्वनामस्थानसंज्ञावदित्यस्वरसादाहुरिति नन्वजां ग्रामं नयतीत्यत्राजाया निरुक्तसंप्रदानस्य सत्त्वा
नद्याचका चतुर्थ्योपत्तिरिति चेत्स्यादेवं यदि परत्वात्कर्मसंज्ञया सम्प्रदानत्वस्य न बाध इति यूपाय दार्वित्यादौ न सम्प्रदानत्वं चतुः
र्थी अपितु तादर्थ्ये तादर्थ्यं च स एवार्थः प्रयोजनमस्येत्यर्थः समभिव्याहृतार्थेन तादर्थ्यविवक्षायां तद्योगे चतुर्थीति ॥ ॥

एम ९

तादर्थ्यं चतुर्थीवाच्येतिवार्तिकार्थः प्रयोजनत्वं च जन्यत्वं तु स्वायपापमित्यस्याव्याप्तेः नापि जन्यतयेच्छाविषयत्वम् स्वर्गादेः पुण्यादिजन्यतयेच्छाविषयत्वेन स्वर्गाय पुण्यमित्यापत्तेः न चेष्टापत्तिः तथासति पक्तुं व्रजतीत्यर्थे पाकाय व्रजतीति प्रयोगनिर्वाहाय तुमर्थाच्चेति सूत्रप्रणयनवैयर्थ्यापत्तेः पाकादेर्निरुक्तव्रजनाद्यर्थतयैव तद्वाचकाद्वार्तिकेन चतुर्थ्युपपत्तेः अपितु समभिव्याहृतपदार्थनिष्ठव्यापारेच्छानुकूलेच्छाविषयत्वम् तत्प्रयोजनकत्वरूपं तादर्थ्यं तु तदिच्छाधीनेच्छाविषयव्यापाराश्रयत्वम् दारुणो यूपेच्छाधीनेच्छाविषयतक्षणादिरूपव्यापारवत्तया यूपार्थत्वात् द्विवक्षया यूपपदाच्चतुर्थी तदर्थश्चेच्छाधीनेच्छाविषयव्यापाराश्रयत्वम् अथ मेच्छायां यूपादेः प्रकृत्यर्थस्य विषयित्वेनान्वयः तस्याश्रयतया दारोर्दावेवरं धनायस्थालीत्यादावप्यूह्यमिति केचित् तन्न मनोरमं तादर्थ्यस्योक्तरूपत्वे मुक्तये हरिं भजतीत्यत्र चतुर्थ्यनुपपत्तेः न हि भजनस्य मुक्तीच्छाधीनेच्छाविषयव्यापारवत्ता नापि मुक्तेः संप्रदानता कर्मजन्यफलभागितया तदुद्देश्यत्वात् तस्मात्तदिच्छाधीनेच्छाविषयत्वमेव तत्तादर्थ्यं स्वर्गाय पुण्यमित्यादयस्त्विष्यन्त एव वार्तिकं दृष्ट्वा सूत्रकृतो प्रवृत्तेर्न तुमर्थादिति सूत्रानुपपत्तिरपीति नमः स्वस्त्यादिशब्दयोगेपि तदर्थविशेषणवाचकान्नमःस्वस्तीति सूत्रेण चतुर्थी विधीयते तत्र नमः पदार्थस्त्यागो नतिश्च तत्र नतिः स्वापकर्षबोधनानुकूलो व्यापारो हरये नम इत्यादौ एषोर्घः शिवाय नम इत्यादौ त्यागः चतुर्थ्याश्च तत्रोद्देश्यत्वम् त्यागश्च यदि शिवस्यायं भवत्विति फलेच्छाधीनो न ममेत्याकारकः स्वस्वत्वेच्छाभावरूपस्तदा तदुद्देश्यत्वं त्यागजनकेच्छायाः स्वत्वभा

गितया विषयत्वम्

यदि त्यागरूपेच्छैवान्यदीयत्वेन त्यज्यमानगतस्वत्वमपि विषयीकरोति तदा स्वत्वभागितया विषयत्वमेव तदुद्देश्यत्वं न तु स्वीकाराश्र
यत्वम् शिवादेर्विग्रहवतोपि स्वीकाराभावात्तदाकारतयाध्यातस्य मन्त्रस्य त्यागोद्देश्यतामतेन तद्भावाच्च त्यज्यमानोपचारो शिवा
दिनिरूपितस्वत्वाभावे पितदीयत्वेन तत्र द्रव्ये स्वत्वावगाहिनीच्छा विसंवादिरूपैव अन्यदीयस्वत्वे बाधितं शिवादिनिरूपितत्व
शिवादिनिरूपितप्रसिद्धस्वत्वा तदेवाबाधितं द्रव्यसंबंधमवगाहते तत्र प्रथमे स्वत्वप्रकारकेच्छाजन्यत्वम् जन्यतासंबंधेन
नतादृशेच्छावत्त्वं वा चतुर्थ्यर्थः तत्र प्रकृत्यर्थस्य शिवादेर्विषयताविशेषसंबंधेनान्वयः द्वितीये विषयताविशेष एव सः तत्र च
प्रकृत्यर्थशिवादेर्निरूपितत्वसंबंधेनान्वयः नमः पदार्थत्यागस्य विषयताविशेषसंबंधेनार्घ्यादिद्रव्येन्वयः द्रव्यस्यैव वा
विशेष्यतया मासमानत्यागेऽन्वयः शिवायोत्सृजतीत्यादौ विवनाशनिराकर्त्तृसंप्रदानता नमः पदस्याधातुत्वात् नमः पदे
न च स्वप्रयोक्तृपुरुषकर्तृकत्वोपरागेणैव त्यागे त्यज्यमानद्रव्ये च तदीयत्वम् प्राप्यानुदयात् अत एव तदीयत्वबोधनाय इदं इति
वदह नम इत्यादि न प्रयुज्यते ऋत्विजा च यजमानरूपपुरुषामणीयद्रव्यत्यागे स्वीयत्वमारोप्यैव पूजायां नम पदं प्रयुज्यते स
चारोपस्तस्मिन् विशेषदर्शनदशायामाहार्यतयोपपद्यते प्रतिविधिप्रयुक्तदानयाच्येव पूजायां नमः पद पठितवाक्यस्यमा ९
धितार्थकत्वेप्यदृष्टजनकत्वं न विरुद्ध शास्त्रप्रामाण्यादित्याद्यन्यत्र विस्तरः॥

तद्भजते इदमिति कर्मणायमभिप्रैतीति संकेति तं संप्रदानं चेत्यर्थः त्रिविधमित्यनेनान्वितम् त्यागांगं कर्मणेप्सितम् कर्तु
रनिराकरणादिभिः  संप्रदानव्यपदेशं लभत इति योजना स्वनिष्ठोद्देश्यतानिरूपकत्व संबन्धेन त्यागे समभिव्याहृता
धात्वर्थे विशेषणतया प्रतीयमानत्वं तदंगत्वं तेन वृक्षायोदकमासिंचतीत्यादौ न वृक्षादेराधिक्यम् कर्मणेप्सितमिति कर्मजन्य
फलभागितयेच्छाविषयः इदं च विशेष्यं तद्भेद नियामकमाह अनिराकरणादिति प्रवृत्ति निवृत्त्यन्यतरानुकूलव्यापारशू
न्यत्वादित्यर्थः प्रेरणेति अप्रवृत्तस्य कर्तुस्त्यागादाविष्टसाधनताबोधनं प्रेरणा जातेष्टसाधनताबोधेऽप्रामाण्यशंकयाशि

इदं चानिराकरणात्कर्तुस्त्यागांगं कर्मणेप्सितम् प्रेरणानुमतिभ्यां च लभते संप्रदानतामिति वाक्यपदीयात्त्रि
विधं सूर्यायार्घ्यं ददातीत्याद्यं नात्र सूर्यः प्रार्थयते नानुमन्यते न निराकरोति प्रेरकम् विप्राय गां ददाति अनुमं
  ॥ तदुपाध्यायाय गां ददाति ॥

थिलस्य कर्तुस्तादृशशंकाविधूननक्षमप्रमाणोपन्यासेन प्रवर्त्तनं कर्मनिष्ठस्व
त्वादि फलाभ्युपगममात्रानुकूलव्यापारवत्त्वं वानुमतिस्ताभ्यामित्यर्थः एवं च प्रकृतधात्वर्थकर्मजन्यफलभागितयेच्छा
विषयत्वे सति कर्त्तृप्रवृत्तिनिवृत्त्यन्यतरानुकूलव्यापाराभाववत्त्वमनिराकर्तृत्वम् निरुक्तविषयत्वे सति कर्तृसंबंधि त्यागादि
विषयकेष्टसाधनताबोधोपयिकव्यापारवत्त्वं प्रेरकत्वमित्याद्यूह्यम् सूर्यायार्घं ददातीति अत्र मतभेदेन दाधातोः परस्व
त्वेच्छाधीनस्वस्वत्वाभावेच्छारूपः परस्वत्वगोचरस्वस्वत्वाभावेच्छारूपो वा त्यागोऽर्थः अन्वयबोधस्तु नमः स्वस्तीति सूत्रोक्त

॥ कौ० ८ शि ९७

नानां यद्विशेषपर्य्यवसानं स वाक्यार्थ इत्युक्तम् अन्विताभिधानवादिमतेन चेदम् तन्मतेन्वितस्यैव पदार्थत्वात् तथाच सामा
न्यरूपेण संबंधवाचकानां पदानां यद्विशेष इत्यादेस्तत्तदनुयोगिप्रतियोगिकत्ववैशिष्ट्यबोधकत्वम् आकांक्षादिसमवधाना
सएव वाक्यार्थो वाक्यजन्यबोधविषय इत्यर्थः वाक्यशक्त्यभिप्रायेण वा तथाभिधानम् प्रातिपदिकार्थसूत्रे भाष्ये यद सामा
नाधिकरण्ये उपसंख्यानमधिकत्वादित्यस्य तु वीरः पुरुष इत्यादौ विशेष्यविशेषणभावप्रयोजकप्रातिपदिकार्थातिरिक्त
भेदसंसर्गस्यापि भानात् प्रातिपदिकार्थमात्राभावात् प्रथमा न प्राप्नोतीत्यतः प्रथमाया उपसंख्यानमारब्धव्यमित्यर्थो न तद्वि
रोधोपि कैयटेनापि न वाक्यार्थत्वादिति तद्व्याख्यानावसरे वीरप्रातिपदिकादनपेक्षितशब्दांतरोहितविशेषणभावान्वा
र्थमात्रनिष्ठात्प्रथमा विधीयत इत्यत्र प्रतिपादितपदमपहायोहितशब्दं प्रयुंजानेन विशेष्यविशेषणभावनियामकत्वमित
रसंबंधस्यैवांगीकृतम् वस्तुतस्तु प्रकृते विशेष्यविशेषणभावस्य संबंधनानुपपन्नैव संबंधस्य संबंधिभेदनियतत्वादिति त्व
दुक्तेः विशेष्यविशेषणयोर्भाव इति व्युत्पत्त्या तस्य विशेष्यत्व विशेषणत्वमात्रपर्य्यवसायितया प्रत्येकं तयोरद्विष्ठत्वाच्चानु
योगित्वप्रतियोगित्वाभ्यां द्विष्ठत्वोपपादनेप्येकस्यैव सास्यान्न समुदितयोर्द्वयोः स्वस्वामिभाववत् शब्दानुगममात्रस्यार्थोपरि
च्छेदकत्वात्संबंधांतरे षष्ठीन विशेष्य विशेषणभावसंबंध इत्यत्र भानाभावाच्च तस्माद्यथोक्तमेव रमणीयमिति ननु विभक्ती
नां धर्मवाचकत्वस्य तंत्रांतरसिद्धतया कथं तत्र प्रकृत्यर्थस्याभेदेनान्वयो ऽयोग्यत्वादत आह विभक्तीनामिति कारकविभ
क्तीनामित्यर्थः धर्मिवाचकत्वात् शक्तिमच्छक्यत्वादित्यर्थः॥

नन्वस्तु शक्तिरेवार्थस्तत्राह धर्मवाचकत्व इति सूत्रस्वरसभंगापत्तेरिति तद्दृष्टकर्मादिपदानां धर्मपरतां विनोक्तार्थलाभात्
स्वरसभङ्ग. स्परस एवेत्यर्थ तथार्थस्य सूत्रकारसम्मतत्वे कर्मत्वे द्वितीयेत्यादेर्वृथात्वादिति भावः ननु कर्मणीत्यादौ विषयसप्तमी
वोच्यतामित्यर्थ तथाच विभक्तीनां धर्मावाचकत्वेपि तस्याश्रयतया भक्त्यर्थेऽन्वयेन कर्मबोधात्तत्र प्रकृत्यर्थस्याधेयतयान्वयेऽस्तु
स्यवित्ति वेद्यतया तङ्लादीनामाश्रयकर्मत्वादिनाभानात्सूत्रस्वरसभंगस्तत्राह कर्मार्थकेति कृतिपक्षे लङ्लडित्यादौ तद्धिते
ष्वन्योऽग्नइत्यादौ आदिपदान्नस्यमानलड्लडित्यादौ लहादेशशानच्संग्रहः तथाद्रष्टेनादिति धर्मिवाचकतादर्शनादित्यर्थ न
याचकर्मपरमर्थकतच्छब्दघटितयोरित्यादि सूत्रविहितक्त्वादीनां धर्मिवाचकत्वं यदनापि तद्वाचकत्वमेव न्याय्यमिति भाव ॥

धर्ममात्रवाचकत्वे कर्मणि द्वितीयेति सूत्रस्वरसभंगापत्तेः कर्मार्थकक्तद्धितादौ तथादर्शनाच्च द्वितीयाद्यर्थकबहु
व्रीहौ प्राप्तोदक इत्यादौ धर्मिवाचकत्वलाभाच्च सुपां कर्मादयोप्यर्थाः संख्या चैव तथा तिङामिति भाष्याच्चेति दिक् ॥

ननु तत्र पदार्थान्तरसामानाधिकरण्यानुपपत्त्या स्तु तथान्वमन्तरेणापन्त्यभावेनासु धर्मवाचकत्वमेवेत्यत आह द्वितीयार्थकेति द्वि
तीयादिविभक्तीनां धर्मवाचकत्वे तदर्थविहितसमासस्यापि धर्मवाचकत्वापत्त्या प्राप्तोदक इत्यादावुदककर्तृकप्राप्तिकर्मत्वस्य
मासार्थस्य समानविभक्तिकपदोपस्थाप्यग्रामादावभेदान्वयानुपपत्तेरापि जागरूकतया द्वितीयादिविधायकसूत्रस्य कर्मादि
दीनां धर्मिवाचकत्वमावश्यकमिति भावः ननु त्वन्मतेपि षष्ठ्याः संबन्धार्थकतया तदर्थविहितबहुव्रीहेः पदार्थान्तरसामानाधिकर
ण्यानुपपत्तेस्तौल्येन तत्र लक्षणया विशिष्टशक्त्या वा सामानाधिकरण्यस्योपपाद्यतयान्यत्रापि तथैव रीत्या निर्वाहे स्तु सुपां धर्मि
वाचकत्वेनेत्यत आह सुपां कर्मादयोप्यर्था इति यदि कर्मत्वादिधर्मो द्वितीयादिवाच्यतया विवक्षितो भविष्यत्तदा कर्मादयोप्य

द्वितीयातृतीयासप्तमी
शक्तिवादपक्षमवलंब्याह आश्रयस्यापीति आश्रयत्वेनभानंत्वसिद्धमेवेतिभावः आश्रयत्वमात्रमिति तच्चाश्रयत्वेनराहजित्व
नामितिशेषः मात्रपदेनाश्रयत्वव्यवच्छेदः नन्वाश्रयत्वस्यशक्यत्वेआश्रयत्वत्वंशक्यतावच्छेदकंवाच्यं एवकारेणनिरू
घटितत्वाद्गुर्विति शक्यतावच्छेदकगौरवमेवेतस्मिन्कल्पेदोषइत्यतआह तदेवेति आश्रयत्वमेवेत्यर्थः एवकारेणनिरू
काश्रयतत्वव्युदासः तस्याखंडत्वस्योपपादितत्वान्नानाव्यक्तिविशेष्यकशक्तिग्रह एवस्वेतरधर्मस्यावच्छेदकत्वापेक्षणादि
तिभावः कर्तृतृतीयायाआश्रयमात्रार्थकत्वादाह करणेति व्यापारेपीत्यपिनाश्रयसमुच्चयः विभागमात्रमिति मात्रपदेना

आश्रयस्यापिप्रकृत्येवलाभान्नविभक्तिवाच्यता किंत्वाश्रयत्वमात्रंवाच्यम् तदेवचतादात्म्येना
वच्छेदकम् करणतृतीयायाश्चव्यापारोपि पंचम्याविभागमात्रं चतुर्थ्याउद्देश्यत्वमात्रम् अतए
वाकृत्यधिकरणमपिनविरुद्धमतइत्यभिप्रेत्याहशक्तिरेववेतिषष्ठ्यामपीतिशेषः ॥ ५ ॥

श्रयत्वव्यवच्छेदः विभागस्याश्रयतयान्वयादेववृक्षादाववधित्वलाभादितिभावः वस्तुतस्तुवृक्षादेरवधित्वरूपसंबंधेनपंच
म्यर्थेविभागेन्वय इत्युक्तम् उद्देश्यत्वमात्रमित्यनेनाप्याश्रयत्वस्यासः अतएवेतिकर्मत्वादिशक्तेस्तत्तद्विभक्तिवाच्यत्वकथनादे
वेत्यर्थः नविरुध्यतइति शक्तिग्रहेजातिव्यक्त्योरुभयोर्भानाविशेषेपिजातिरेवशक्यानागृहीतविशेषणन्यायाद्विशेष्यंना
भिधागच्छेदितिन्यायाच्चव्यक्तिशक्तौव्यभिचारात्तासामानंत्याच्चेतितत्रसिद्धांतितमिति

राजेति नचैकदेशेभयत्रसेति नोक्तातिप्रसंगः नतु गंहरिणा हि शेष्योप्यसौ परार्थत्वाद्गुणेषु व्यतिरिच्यते तत्राभिधीयमानस्य प्रधानेप्युपचर्य्य
तेइति परार्थत्वात् परं प्रतिगुणानां विशेषणत्वाद्धिशेषणत्वेन विवक्षितस्य संबंधं विना विशेषणत्वासंभवेन संबंधोव्यक्तिरुच्यते
उद्भूततया प्रतीयतेइति तत्रैव षष्ठी विशेष्यस्य तु पदांतरासमभिव्याहारे स्वरूपेणैव प्रतीयमानत्वान्न विशेष्यता नियामक
संबंधाकांक्षा तत्र विशेषणे अभिधीयमानः षष्ठ्या प्रतीयमानः प्रधाने विशेष्येपि उपयुज्यते तस्य हि स्वत्वस्वभावाद्राजनिरूपित
विशेष्यतायाराजपदसन्निधाने प्रतीयमानाया उपकारको भवतीति तदर्थः कारकषष्ठ्याइति कर्तृकर्मणोः कृतीत्यादि सूत्र विहि
तषष्ठ्याइत्यर्थः शेषविहितषष्ठ्याः संबंधरूपधर्मवाचकतया षष्ठीत्वेन तस्या अपि तद्वाचकत्वस्यन्याप्यत्वादिति भावः ननु क
र्तृकर्मादिकारकविहिततृतीयादीनां कथं कर्त्रादिधर्मवाचकत्वमत आह सप्तमीपंचम्याविति तथा च धर्मस्यापि कारकत्वस्य
भाष्यसंमतत्वेन तासां तद्वाचकत्वे न दोषइति भावः दर्शनादिति तत्र हि द्रव्यं कारकमिति पक्षेऽद्य भुक्त्वायं द्व्यहे भोक्तेत्यादौ देवद
त्तरूपकर्तृकारकस्यैक्यान्मध्यव्यपदेशासंभवात् सप्तमीपंचम्योरुपपादनाय प्रवृत्तस्य क्रियामध्यइति द्रव्यमितिवार्तिकस्य
खंडनायोक्तम् नांतरेणसाधनं क्रियायाः प्रवृत्तिर्भवति क्रियामध्यंच कारकमध्यमपि भवति तत्र कारकमध्यइत्येव सिद्धमिति
तत्र साधनमित्यस्य शक्तिमित्यर्थः तथा च देवदत्तादिरूपकर्तृद्रव्यस्यैक्येपि कालभेदभिन्नभुक्तिक्रियानुमितकारकपदार्थ
कर्तृत्वशक्त्योर्भेदात्तन्निमित्तमध्यव्यपदेशाबाधाद्यथोक्तेनुपपत्त्यभावात् क्रियामध्यइतिवार्तिकं नारंभणीयमिति तद्भावः इ
दमुपलक्षणमनभिहितसूत्रभाष्यस्य तत्र संख्याविभक्त्यर्थइति पक्षेणानभिहिताधिकारं सप्तम्यर्थे इयोः कारकयोरन्यतराभि
धाने विभक्त्यभावप्रसंगः कृपासादआस्तेशयनआस्तेयदि भन्ययेनाभिहितमधिकरणमिति कृत्वा सप्तमी न प्राप्नोतीत्याशंक्य

नचान्यतरेणाभिधानात् अनभिहिते विधानमित्यादिना प्रसज्यप्रतिषेधे पर्युदासे वानभिधेयं दूषणं परिहृत्य यदि साधनद्रव्यं स्यात्त
देकमेव तच्चाभिहितमिति पूर्वोक्तपरिहारो न संभवत्यर्थशक्तिः साधने तु दा तस्याभेदादनभिहितत्वसंभवाद्युक्तपरिहार इत्य
भिप्रेत्य किं पुनर्द्रव्यं साधनमाहोस्विद्गुण इत्याशंक्योक्तं किं पुनः साधनं न्याय्यं गुण इत्याह कथं ज्ञायते एवं हि कश्चित्कंचित्पृच्छति क्व
देवदत्त इति स तस्मा आचष्टे असौ वृक्ष इति कतरस्मिन्नसौ तिष्ठति स वृक्षोऽधिकरणं भूत्वान्यशब्देनाभिसंबध्यमानः कर्त्ता संपद्य
ते द्रव्ये साधने पत्रमेकमेव स्यात्करणं करणमेव यदधिकरणमधिकरणमेवेति कैयटेनापि यदि द्रव्यं साधनं स्यात्तदा तस्यैक
रूपत्वात्तन्निबन्धनाद्बाधितमत्यभिन्नाविषयत्वान्नानार्थक्रियाकरणनिबन्धनो घटेन जलमाहर घटं कुरु घटोऽस्तीति व्यपदेशो
न स्याद्दृश्यते चासौ तस्मान्नानाशक्तिभावोऽवगम्यते सिद्ध इति तद्धि रजमेव च शक्तिपक्षस्याकरसंमतत्वं तथा हि नीयादीनां कर्मत्वादे
ाकिरिति वरतामतमपि सम्यगेवेति भावः प्रातिपदिकार्थेति सूत्रविहितप्रथमा या यथा यत्र प्रातिपदिकार्थो लिंगपरिमाण
चार्थः कर्माद्याधिक्ये प्रथमा मा भूदिति तत्र तत्र मात्रग्रहणमिहाने पूर्यमाणस्य तस्य प्रत्येकं द्वंद्वैकपदार्थेऽन्वयात्प्रातिपदिका
र्थमात्रे प्रथमेत्यादिवाक्यभंगिः प्रातिपदिकार्थत्वं च नाम निष्ठशक्त्यवच्छिन्नजनकतानिरूपितजन्यताश्रयोपस्थितित्वव्यापकं
विषयिताप्रतियोगित्वम् उच्चैरित्याद्यर्थविषयितायाः स्वार्थोपस्थितित्वव्यापकत्वात्तत्र प्रथमोपपत्तिः. एवकस इत्यादौकसारि
विषयिताया इव बुद्धिंगादिविषयितायाश्च पितद्धपस्थितित्वनैयत्यव्यक्तमेव यद्यपि भिक्षेमा प्रातिपदिकार्थ इति पक्षे लिंगस्योप
स्थिति विषयत्वेदुघटं तथाप्यनुभवानुरोधेन शक्यार्थोपस्थिते भाक् लिंगबोधकसमवधानस्य नियमेन कल्पनामस्य तत्त्वं
बोध्यम् एवं चालिंगा नियतलिंगाश्च प्रातिपदिकार्थमात्र इत्यस्योदाहरणानि नदादि शाब्दजन्योपस्थितौ तु पुल्लिंगादिभानस्थाने

तत्राप्राप्तप्रथमाविधानाय लिंगग्रहणं सिंहो माणवक इत्यादौ सादृश्याद्यधिकार्थस्य प्रतीतावप्यंतरंगत्वात्स्वार्थमात्रनिष्ठात्तस्मात्प्रथमा सुलभैव तत्र प्रथमार्थलिंगस्य विशेषणतया प्रकृत्यर्थेऽन्वयो योग्यताबलादनुभवाच्च तथैव कार्यकारणभावकल्पनात् एवं द्रोणो व्रीहिरित्यादौ द्रोणपदात्परिमाणस्यापि आधिक्येन भानात्तत्र परिमाणग्रहणम् न च व्रीह्यादिपदसमभिव्याहारात्तद्बाधेप्यंतरंगत्वात् प्रातिपदिकार्थमात्र एव सास्त्विति वाच्यम् तथा सति द्रोणपदार्थस्य भेदसंबंधेनान्वयानुपपत्तेः प्रथमार्थस्य तस्य तु भेदेनान्वयेन किंचिद्बाधकमिति संप्रदायः नव्यास्तु प्रातिपदिकार्थस्तत्तत्प्रवृत्तिनिमित्तं तदाश्रयश्च अत एव लिंगग्रहणं चरितार्थम् अन्यथा स्वमोर्नपुंसकादिति सूत्रप्रामाण्यात्तस्यापि प्रातिपदिकार्थतया तदुपपादनवैयर्थ्यापत्तेः आश्रयत्वं च वैज्ञानिकम् शक्यतावच्छेदकारोप एव लक्षणेति अन्यत्र व्यवस्थापितत्वात् गोपीत्यादौ प्रकृत्यर्थस्य लाक्षणिकत्वेपि न क्षतिः तटादिशब्दानां लिंगं वाच्यमेव विसर्गादयस्तद्द्योतकाः एवं च प्रातिपदिकार्थ इत्यस्यालिंगा लिंगप्रवृत्तिनिमित्तकाव्ययस्त्रीपुंसादिशब्दाश्चोदाहरणमितरे लिंगमात्राद्याधिक्यस्य द्रोणत्वादिप्रवृत्तिनिमित्तकद्रोणादिशब्दानां परिमाणत्वेन परिमाणमपि लिंगवद्विशेष्यान्वय्यर्थः एवं च लिंगवत्प्रातिपदिकार्थत्वाभावात्परिमाणग्रहणं वीरः पुरुष इत्यादौ पुरुषादिपदसन्निधाने विशेष्यविशेषणभावस्याधिकस्य भानेपि तत्समभिव्याहारात्पूर्वं स्वार्थमात्रनिष्ठात्तस्मात्सैत्याहुः संबोधने चेति विहितप्रथमायास्तु संबोधनमर्थः प्रातिपदिकार्थापेक्षया तस्याधिक्येन भानात्पूर्वसूत्राविषयत्वात्तत्सूत्रारंभः तच्चाभिमुखीभवनानुकूलो व्यापारः क्रियान्वय्येवेति प्रतिपादितं प्राक् यथायथं विभक्त्यर्था इत्यत्र त्वं यथायथपदं व्याचष्टे उक्तप्रकारेणेति यदर्थबोधे या विभक्तिः समर्था तस्याः सोऽर्थो वसेयः तथैवोक्तं प्राक् द्वितीयातृतीयासप्तमीनामित्यादिनेति भावः ॥ ९ ॥

अनेनेति सुपा कर्मादि वाचकत्व इत्यर्थः नैयायिकाननीति प्राचीनान्नतीत्यर्थ. यथा तन्मतं तथा ख्यातशक्ति निरूपणावसरे प्रति पादितम् ननु सुपा कर्मादयोऽप्यर्थाद् इति भाष्यात्सिद्धान्तेन तु नैयां कर्मादौ शक्तिः विषयत्वादौ लक्षणायां तु किं बाधकं क्रियाजन्यफ लशालित्वरूपमुख्यकर्मत्वबाधप्रवृत्तप्रसरादन्तउत्तरार्द्धं प्रदर्शित नियमबाधकत्वेनोपदर्शयिष्यन्नाशयं प्रकाशयन्स्वयं भा वदित्यादि स्वौजसमौडित्यत्र कारकविभक्त्यादौ द्वितीयायाउपादानाद्धानिकिं पि न दर्थकर्मणः प्राङ्गि दैशः कर्मादीत्यादिना

अत्र मानमुपदर्शयन् घटं जानातीत्यादौ द्वितीयाया विषयतायां लक्षणेति वहाकुलं वदतो नैयायिकान् प्रत्याह सुपां कर्मेति अयं भाव. सुपां कर्मादयोऽप्यर्थाः सङ्ख्या चैव तथा तिङाम् प्रसिद्धो नियमस्तत्र नियमः प्रकृतेषु चेति वा र्त्तिकतद्भाष्याभ्यां कर्मादेर्वाच्यतायास्तन्नियमस्यच लाभ. तथाहि स्वौजसमौट् कर्मणि द्वितीया द्व्येकयोर्द्विवचने कवचने इत्यादेः लसति पूतस्मि तान्येकवचनद्विवचनेत्यादेरेकवाक्यतया कर्मादेस्तत्सङ्ख्यायाश्च वाच्यता लभ्यते तथा तन्नियमश्च द्विविधो लभ्यते॥ ॥कारकान्तरसंग्रहः अपिनाशक्ति कारकमितिपक्षोक्तकर्मत्वादिशक्तीनांस मुच्चयः तथा तिङामिति तद्वत्तिङामपि सङ्ख्या कर्माद्यर्थ इत्यर्थः तत्र सुप्तिङ् सु प्रकृतेषु अर्थेष्वित्यर्थ. तद्भाष्येति लोका रेव बहुत्वादिषु बहुवचनादि भविष्यति किमर्थं बहुषु बहुवचनमित्यादि सूत्रमित्याक्षेपे सुप्तिङामविशेषेण विधानाद् दृष्ट विप्रयोगत्वाच्च नियमार्थं वचनमिति समाधाय नियमारम्भः सार्थकमिदं लोकवार्त्तिकम् अ यामप्रकृतार्थानपेक्षं नियम
[illegible]

नियमाकारमाह द्वितीयाकर्मण्येवेति प्रकृताभिप्रायं उभयथापीति विभक्त्यपेक्षयाऽर्थापेक्षया चेत्यर्थः विभक्तिनियमोपि
द्विधा अर्थविशेषापेक्षस्तत्सामान्यापेक्षश्च तत्राद्यः कर्मार्थयोग्यप्रातिपदिकाच्चेद्द्वितीया तदा कर्मण्येव न करणादौ कर्मादि
योग्येपि तद्रहितप्रातिपदिकार्थ एव प्रथमा न कर्मादौ संख्याद्यर्थयोग्यप्रातिपदिकादेकत्वादावेकवचनादि न द्विवचनादीत्या॰

द्वितीया कर्मण्येव तृतीया करण एव इत्येवमादिः शब्दनियमः कर्मणि द्वितीयैव करणे तृतीयै
वेत्येवमर्थनियमश्च उभयथापि सिद्धनियमविरुद्धं लक्षणादिकमसाधुत्वप्रयोजकमिति यात्रे कर्म
णि नानृतं वदेदिति निषेधविषयो भवत्येवेति सेच्छया लक्षणादि विभक्तौ च प्रयोजिकैव अत
एव विभक्तौ न लक्षणेत्यादि नैयायिकवृद्धानां व्यवहार इति दिक् १४ ॥ इति श्रीवैयाकरण
भूषणसारे सुबर्थनिर्णयः ॥३॥ ॥

नियमस्तु कर्मार्थयोग्यप्रातिपदिकाच्चेत् कर्मणि विभक्तिस्तदा द्वितीयैव कर्मादिरहिते तद्योग्यप्रातिपदिकाद्द्वितीयेत्याकारकः अर्थे
क इति बोध्यं सिद्धेत्यस्यैकवाक्यताबलेनेत्यादिः तथा च निषेधविषयत्वस्य निरुक्तकर्मत्वानात्मकत्वेन तत्र द्वितीयादेः शास्त्रेणाविधा
नात् तदर्थतात्पर्येण तदुच्चारणस्यानृतत्वादित्यर्थः अत एवेति विभक्तौ लक्षणाया अप्रयोजकत्वादेवेत्यर्थः ननु व्याकर॰

भू० वृ० ९

ख

णस्य शक्तिनिरूढलक्षणान्यतरप्रतिपादकत्वेन यत्र मुख्यार्थबाधप्रतिसंधानादिना शक्यसंबंधिनि लक्षणास्वीकारे बाधका
भाव. घटं जानातीत्यादितो घटादिविषयकज्ञानबोधस्य सर्वानुभवसिद्धस्य द्वितीयायाः शक्तिं विनानुपपन्नत्वेन लक्षणाकल्पक
त्वाच्च विभक्तौ न लक्षणेति प्रवादस्त्वेकविभक्तेरपरविभक्त्यर्थे न लक्षणेत्येतत्परोऽत एव नव्यन्याये पात्रसमवेतं यथा सुपांक
र्मादयोऽप्यर्था इत्यत्र कर्मादि पदस्य गौणमुख्यसाधारणकर्मत्वपरतयाप्युपपत्तेर्न तद्विरोधोऽपीत्यत आह दिगिति तदर्थस्तु मु
ख्यार्थमादाय शास्त्रचारितार्थ्ये गौणे तद्व्यापारे मानाभाव. न च घटं जानातीति प्रसिद्धप्रयोगानुरोधेऽपि तद्व्यापारकल्पनावश्य
केति वाच्यम् ज्ञानविषयत्वापन्नस्तु उपसर्जनविषयत्वापादनार्थकनया मुख्यकर्मत्वेनैवास्मन्मते प्रयोगोपपत्तिसंभवात् स्वा
नुभवैकगम्ये यर्थे लक्षणाभ्युपगमेऽर्थनिर्देशस्यैव पर्याप्तत्वेत्यादि. अन्यत्र वदन्ति शास्त्रस्य गौणे प्रवृत्त्यनभ्युपगमे स्यादी
नां मुख्याकर्मकत्वाभावात्ततो भावे कर्त्तरि च प्रत्ययानुपपत्तिरेवसार्यते संयोगानुकूलव्यापाराभावानुकूलव्यापारार्थक
ताया सर्वसम्मततयातस्यापि मुख्यसकर्मकत्वाभावेन ततोऽपि कर्त्तरि कर्मणि च लकाराद्यनुपपत्तिरतो गौणेऽपि शास्त्रविष
यताऽवश्यमभ्युपेतव्येति न घटं जानातीत्यादीनां विषयत्वलक्षणायामप्यसंभुतावस्तु नस्तु शक्तिः कारकमिति पक्षस्य तन्
मतेऽतिह्रस्वव्यवस्थितत्वेन द्वितीयाया विषयत्वान्वयाधेयत्वबोधकत्वेऽपि नक्षतिः तादृशस्थले विषयरूपफलस्य धा
त्वर्थपरतया प्रागुपपादितात्तन्मते युक्तनियमविरोधस्य निषेधविषयताप्रसक्त्यासंभवादित्यलम् २२ ॥ ॐ ॥ ॥ इ
ति श्री भूषणसारदर्पणे सुबर्थनिर्णय ॥

तेनाभावत्वाकाशत्वादीनां
क्रमप्राप्तं नामार्थनिरूपणमित्याशयेनाह नामार्थमिति जातिरिति तत्तत्पदार्थासाधारणो धर्म इत्यर्थः तेनाभावत्वाकाशत्वादीनां
नित्यानेकसमवेतत्वरूपजातित्वाभावेपि न क्षतिः एतस्यैव शास्त्रे स्वार्थपदेन व्यवहारः जातेः पदार्थत्वे मानं तु जात्याख्यायामेक
स्मिन्बहुवचनमन्यतरस्यामिति सूत्रं सवर्णेण्ग्रहणमपरिभाष्यमाकृतिग्रहणात्सिद्धमिति वार्तिकम् आकृतिं वाजप्यायनः
तिसरूपसूत्रस्थं भाष्यं च युक्तिमप्याह लाघवेनेति एकाश्रयकशक्तेरेकस्या एव संभवादिति भावः ननु शक्तिग्राहकशिरोमणि
नाव्यवहारेण व्यक्तावेव तत्परिच्छेदात्कथं जातौ तत्सिद्धिरत आह अनेकव्यक्तीनामिति पूर्वव्यवहारेण व्यक्तौ शक्तिग्र
हेप्यानंत्यात्तावतीषु शक्तिग्रहासंभवात्तत्तदाश्रयभेदभिन्ननानाशक्तिकल्पने गौरवात्स्वाश्रयज्ञानावेव निर्दोष्यत इत्यर्थः ए
नामार्थ इति सर्वे मी पक्षाः शास्त्रे निरूपिताः २५ एकं जातिः

नामार्थमाह एकं द्विकं त्रिकं चाथ चतुष्कं पंचकं तथा नामार्थ इति सर्वेमी पक्षाः शास्त्रे निरूपिताः २५ एकं जातिः
लाघवेन तस्या एव वाच्यत्वौचित्यात् अनेकव्यक्तीनां वाच्यत्वे गौरवात् ॥ २६ ॥ एकव्यक्तिविषयकशक्तिज्ञानादपरव्यक्तिवि

षयकशाब्दबोधाभ्युपगमे तु गोव्यक्तिविषयकशक्तिज्ञानादश्वविषयकबोधापत्त्यात तद्व्यक्तिविषयकशक्तिज्ञानस्य तद्व्यक्तिवि
षयबोधे हेतुताया अवश्यकत्वात एकविषयकज्ञानादपरव्यक्तिबोधानुदयापत्त्या सकलव्यक्तिभानार्थं तावद्व्यक्तिषु शक्तिक
ल्पनायां गौरवस्य स्फुटतया जातावेव शक्तिकल्पनोचिता यद्यपि गौः गोपदवाच्य इति शक्तिग्रहो व्यक्तिविषयकोपि तथापि स
विशेषणे हि विधिनिषेधौ विशेषणमुपसंक्रामतः सति विशेष्ये बाध इति न्यायेन जातावेव सत्तापरिच्छिन्नत्ति यद्वा जातिविशेष्यके
एव शक्तिग्रहो गौर्गोपदशक्य इति जातिशक्तिवादे एवमेवाभिलापात् व्यक्तिभानस्य त्वग्रे उपपादयिष्यमाणत्वान्न तदनुपपत्तिरि

वेनिगमनेति एकतरपक्षपातियुक्तिरूपेत्यर्थ तथाचेयव्यक्तिः शक्या न जातिरित्येव प्रत्येकव्यक्तिषु हि विनिगमकाभावः पूर्वत्र तु व्यक्तेः
समुदायस्यैव कोटित्या गौरवज्ञानस्यैव बाधकस्य विनिगमकत्वान्न तदभाव इति भावः तत्पक्षे पि गौरवस्यैव बाधकमित्याह एव
हीत्यादि ननु उक्तविनिगमनाविरहेण सर्वास्वपि व्यक्तिषु शक्तिसिद्धावश्यकाव्यक्तेरभावेन तद्ज्ञानाय व्यक्तिरनिकल्पनेति व्य
क्तिवादपक्षो निर्दुष्ट इत्यत आह किंचैवमिति यद्वा ननु गोत्वादिजात्यनुगतीकृततया वद्व्यक्तिषु शक्तिस्वीकारान्नानंत्यादिदोषोऽतः

न्तव्यक्तीनामपि प्रत्येकमेकत्वाद्विनिगमनाविरहः एवं हि एकस्यामेव व्यक्तौ शक्त्यभ्युपगमे
व्यक्त्यन्तरे लक्षणायास्स्वसमवेताश्रयत्वं संसर्ग इति गौरवम् जात्या तु स्वाश्रयत्वमेव संसर्ग इति
लाघवम् किंचैवं विशिष्टवाच्यत्वमपेक्षना गृहीतविशेषणन्यायाज्जातिरेव वाच्येति युक्तम्॥

आह किंचैवमिति एवं विशिष्टे शक्त्यभ्युपगमे नागृहीतेति नागृहीतविशेषणा बुद्धिर्विशेष्यमधिगच्छतीति न्यायशरीरं विशे
षणाविषयबुद्धिर्विशेष्यं नावगाहत इति तदर्थः विशेष्यविषयकत्वस्य विशेषणविषयकत्वनियतत्वमिति यावत् तथा च विशि
ष्टशक्तिवादे विशिष्टशक्तिग्रहस्य विशेषविषयकत्वावश्यकतया तदुभयविषयकत्वस्य पदार्थोपस्थित्यादिकारणतावच्छेद
कत्वकल्पनापेक्षया विशेषणविषयकत्वमात्रस्यैव तदवच्छेदकत्वकल्पनलाघवादुचितेति जातावेव शक्तिः सिद्ध्यतीति भाव

नन्वेवं गां दद्यात् व्रीहीनवहंतीत्यादौ दानावहननकर्मत्वाद्यन्वयानुपपत्तिर्जातिस्तदन्वयायोग्यत्वादिति चेदत्र केचित् जात्याक्षि
प्तव्यक्तावेव दानादिकर्मत्वान्वय इति तन्न प्रत्ययानामितिव्युत्पत्तेः प्रकृत्यर्थव्यक्तौ तदन्वयासंभवात् तदुक्तं गम्यमानस्य चार्थ
स्यनैवदृष्टं विशेषणम् शब्दांतरैर्विभक्त्या वा धूमोयं ज्वलतीतिवदिति किंचायमाक्षेपोर्थापत्तिः समानसंवित्संवेद्यत्वं वा नाद्यः
अनुपपत्तिमंतरेणापि गौरस्तीत्यतो गोत्वविशिष्टबोधात् नांत्यः जातिविषयकशक्तिग्रहस्य विशिष्टविषयकबोधहेतुत्वाभ्युप
गमेन जातिविषयतया व्यक्तिविषयता नेयत्यरूपो वाच्योन्यस्यासंभवात् स च गोत्वमस्तीत्यत्र गोत्वविशिष्टप्रत्ययाद्व्यभिचार
तद्दुक्तानुपपत्तिर्दुर्वारैवेत्यतआह व्यक्तिबोधस्त्विति लक्षणयेति स्वशक्यगोत्वाश्रयत्वसंबंधरूपलक्षणयेत्यर्थः तथा

व्यक्तिबोधस्तु लक्षणया एवं च तत्र विभक्त्यर्थान्वयोप्युपपद्यत इति दिक्

च पदवृत्तिजन्योपस्थितेरेव शाब्दबोधहेतुतया व्यक्तेरशक्यत्वेपि लक्षणावृत्त्युपस्थितायां तस्यां तावद्दानादिकर्मत्वान्वयानुप
पत्तिरिति भावः एवं चेति लक्षणाभ्युपगमे चेत्यर्थः तत्र लक्षितव्यक्तौ उपपद्यत इति अन्यथा प्रत्ययानामिति व्युत्पत्तेः स्तनोपप
द्येतेति भावः ननु व्यक्तिलक्षणाभ्युपगमे युगपद्वृत्तिद्वयविरोध इति सिद्धांतभंगः गौरस्तीति वाक्यादनुभूयमानव्यक्तिबोधानु
पपत्तिश्च लक्षणाबीजस्यान्वयानुपपत्तेस्तत्राभावादतआह दिगिति तदर्थस्तु सति तात्पर्ये गंगायां घोषमत्स्यौ स्त इत्यत्र वृत्तिद्वय
स्य सर्वैरेवाभ्युपगमात्तादृशन्याया युगपद्वृत्तिस्तात्पर्याविषये लक्षणा च नेत्येवं पर इति न तद्विरोधः तात्पर्यानुपपत्तिसत्त्वा

स्त्वव्यक्ति लक्षणाद्युपपत्तिः नहिदोषाभ्युपगमेतुजातिव्यक्त्योरभेदपक्षमुपगम्यविभक्त्यर्थान्वयउपपाद्यः तदुक्तं तेनतत्त्वस्थि
तव्यक्ते क्रियासंबंधचोदनात् जातिव्यक्त्योरभेदोवावाक्यार्थेषुव्यवस्थितइति वस्तुतस्तुजातिधर्मिकशक्तिग्रहस्यजातिविशि
ष्टव्यक्तिशाब्दबोधे हेतुत्वकल्पनान्नव्यक्तिभानानुपपत्तिर्नोप्यशक्यभानापत्तिस्तस्यतद्दृशिष्ट्याभावादितिजातिशक्तिवादरित
ष्कर्ष वक्ष्यतेचाधिकमुपरिष्टात् अन्येतुजातिशक्तिवादमित्यमुपपादयामासुः मासुव्यक्तेर्भानम् आनयनादिक्रियाकेव
लायाजातावसंभवतिव्यक्तिसाहित्येननिष्पाद्यते समाहारे पाणिपादसाहित्येनवादनक्रियावत् तदुक्तं तद्धितार्थेतिसूत्रेभा
ष्ये आकृतावालंभनादीनासंभवोनास्तीतिकृत्वातत्सहचरितेद्रव्येभविष्यति यथापिराणीयतामित्युक्तेकेवलस्याग्नेरान
यनासंभवाद्चोदितमपिपात्रमानीयते एतदेवाग्नेरानयनयन्मात्रस्यस्यतथाकृतावालंभनादीनिचोद्यमानानिसामर्थ्या
त्साहचर्याद्द्रव्यमभिनिविशन्तेसर्वएवाकृतेयोगोनर्भावितद्रव्यायाइतिद्रव्यद्वारकः संबंधः संपद्यतइति साहचर्यसंबंधः
सरूपसूत्रेभाष्येपिस्फुटोयमर्थः हरिरप्याह व्यक्तौकार्याणिसंसृष्टाजातिस्तुप्रतिपद्यतइति गोत्वादिपदानान्तुगोत्वादिधर्मिव
त्तिधर्मएवशक्तिरितिनतत्रगोविशेष्यकोबोधःजातेराश्रयावियोगेपिकेवलायास्तस्याःशब्दवाच्यत्वनानुपपन्नम् अलादौदृ
श्यमानस्यसुखस्यस्वस्या नावियोगेपि सुखादिपदबोध्यवर्ति शक्यतावच्छेदकतातुजातिगतधर्मस्यैवेति इदमपिमतंजा
त्याव्यक्त्याक्षेपेपर्यवस्यति तच्च नचापदार्थेप्रत्ययान्वयइतिदूषणमस्तविनापिसंकेतविषयतांसामान्येनसंबंधनियमा
दध्याहारन्यायेनोपस्थितायाव्यक्तेःपुनर्जातिर्विशिनष्टि रूपादिमाना विषयाणाचक्षुरादीनाचाक्षुषयामीतिप्रतीत्याविषयीक

शक्यसंबंधरूपायालक्षणायाएकस्यालक्ष्यलक्षणावच्छेदकयोरसंभवेपिलक्ष्यार्थप्रतीतौलक्ष्यतावच्छेदकभानवच्छक्य
तावच्छेदकेशक्त्यभावेपितादृशकार्यकारणभावबलादेवगोत्वादिभाननिर्वाहेकृतंतत्रशक्तिकल्पनयेत्याशयेनैकपदम
न्यथाव्याचष्टे यद्वेति व्यक्तिरेवेत्येवेनजातिः ननुसवर्णेणग्रहणमित्यादिप्रामाण्याद्स्तूक्तः पक्षः व्यक्तिपदार्थइत्यत्रतु किं
मानमतआह केवलव्यक्तीति एकशेषस्यचेति जातिपक्षेएकेनैवशब्देनद्वयोर्बहूनांवाप्रत्यायनसंभवात्तदनर्थकंसद्व्य
क्तिपक्षज्ञापकमित्यर्थः अणग्रहणस्यभाष्यकृताप्रत्याख्यानात्सरूपसूत्रस्यचशास्त्रीयप्रक्रियामात्रोपयोगित्वस्याकरेव्य

यद्वा केवलव्यक्तिरेवैकशब्दार्थः केवलव्यक्तिपक्षएवाणग्रहणस्यैकशेषस्यचारंभेणतस्यापिशास्त्रसिद्धत्वात्
युक्तंचैतद्व्यवहारेणव्यक्तावेवतद्ग्रहणात्संबंधितावच्छेदकस्यजातेरैक्याच्छक्तिरप्येकैवेतिनगौरवमपि ॥

वस्थापनात्कथमुक्तार्थेनयोः प्रामाण्यमतआह युक्तंचैतदिति सयुक्तिकमप्येतदित्यर्थः अपिनाद्रव्याभिधानंव्याडिरित्य
तिसरूपसूत्रस्यभाष्यप्रामाण्यंसमुच्चीयते युक्तिमेवाह व्यवहारेणेति एतत्तत्त्वंशक्तिवादेवक्ष्यते एतत्कल्पेपूर्वोक्त
शक्यानंतदोषंसमुद्धरति संबंधितावच्छेदकस्येति शक्तिग्रहेधर्मितावच्छेदकस्येत्यर्थः संबंधितावच्छेदकपद
स्यलिंगसर्वनामनपुंसकत्वादुद्देश्यसमर्पकत्वाद्वा नतत्त्वानुपपत्तिः तथाचसंबंधितावच्छेदकजात्यनुगतीकृत
नानाव्यक्तिष्वेकधर्मावच्छिन्नायाएकस्याएवशक्तेरुपगमान्नतत्नानात्वप्रयुक्तगौरवमितिभावः

एवमेवेति विशिष्टशक्तिस्वीकार इत्यर्थः घटत्वादेर्घटादिनिष्ठशक्यतावच्छेदकताभ्युपगम इतियावत् तदेव घटत्वादेव वाच्यंशक्य मित्यर्थः शक्यत्वे हेतूपन्यसनन्यायादिति अकारणत्वेपीति दण्डत्वादीनामन्यथासिद्धत्वेनाकारणत्वेपि तेषां प्रवाहाद्यः संबंधि तया नक्ष्यत्वेपि च तत्र तन्निरवच्छेद्यतानिरूपितस्वरूपसंबन्धात्मिकाया विषयिताविशेषात्मिकाया वाऽवच्छेदकताया अभ्युपगम वदशक्यस्यापि घटत्वादेस्तादृशशक्यतावच्छेदकत्वसंभवात् शक्यत्वे सति शक्यविशेषणतापन्नस्य शक्यतावच्छेदकत्वमिति

नचैव घटत्वमपि वाच्यं स्याच्छक्यतावच्छेदकत्वान्न याचनागृहीतविशेषणन्यायादेवं वाच्य मस्त्विति शक्यम् अकारणत्वेपि कारणतावच्छेदकत्ववत्तथाप्यपि संभवात् उक्तंच- आनंत्येपि हि भावानामेकं कृत्वोपलक्षणम् शब्दः सुकरसंबन्धो न च व्यभिचरिष्यतीति ॥ ॥ ९ ॥ ॥

नियमे मानाभावादिति भावः उक्तेर्थे संमतिमाह तदुक्तमिति आनन्त्येपीति भावानां व्यक्तीनामानन्त्यादपरिच्छेद्यत्वेपि एकं अनुगत जात्यादिधर्ममुपलक्षणं अशक्यत्वेपि शक्यव्यावर्तकम् कृत्वा अभ्युपगम्य शक्यतावच्छेदकतयाभ्युपेत्येति यावत् शब्दो गवाद्यात्मकः सुग्राह्यगवादिनिष्ठवाच्यतासंबन्धः नचेति शक्तिग्रहाविषयव्यक्तिं बोधयिष्यतीति तदर्थः गोत्वादेः सामान्यलक्ष णया सर्वास्वेव व्यक्तिषु शक्तत्वधारणादिति भावः अधिकमग्रे वक्ष्यते॥

व्यक्तिरेवात्र द्रव्यपदेन व्यवह्रियते सर्वनामपरामर्श्ययोग्यत्वात् उक्तं च वस्तूपलक्षणं यत्र सर्वनाम प्रयुज्यते द्रव्यमित्युच्यते सोऽर्थो भेद्यत्वेन विवक्षित इति स्वभावादेव बुद्धिविषयतावच्छेदकत्वोपलक्षिततद्धर्मावच्छिन्नबोधकं सर्वनाम यस्मिन् धर्मिणि तादृशधर्मं प्रवृत्तिनिमित्तीकृत्य प्रयुज्यते इदं तदिति परामर्श्ययोग्यमिति यावत् द्रव्यपदेन व्यवह्रियत इत्यर्थः भेद्यत्वेन विशेष्यत्वेनेत्यादि तु लक्षणांतरपरम् एतत्पक्षे तु जात्यादेरपि विशेष्यत्वविवक्षायां द्रव्यत्वमिष्टमेव तिङर्थक्रियायाः किमादिभिः परामर्शोऽस्तो कार्यथे निरूपितविशेष्यतावत्त्वाच्च द्रव्यत्वमस्त्येव विप्रतिषिद्धमित्यादौ च सामर्थ्यांतरांतरप्रसिद्धद्रव्यग्रहणम् चादयोऽसत्त्व इत्यत्र प्रथमकल्पोक्तद्रव्यस्यैव पर्युदासो बोध्यः शक्यतावच्छेदकत्वं च शक्यनिष्ठविशेष्यतावच्छेदकतयाभासमानत्वम् च

वस्तुतो न ह्याकृतिपदार्थस्य द्रव्यं न पदार्थ इति भाष्याद्धि शिष्टं वाच्यम् ॥ ॥टादिपदे शक्तिग्रहे च घटत्वादेरेव न त्वं नपृथिवीत्वादेरिति न तेभ्यः पृथिवीत्वादिबोधः आकाशशब्दस्य शब्दाश्रयत्वे शक्त्यभावे पि न तत्तद्रूपेणैव बोधः न हि शिष्टशक्तिग्रहस्य तद्बोधहेतुत्वात् यद्वाकाशत्वमखंडोपाधिः रुढिस्त्रोक्तरीत्यानत्यदं वाकाशशब्दशक्यतावच्छेदकमिति नाकाशः शब्दाश्रय इति प्रयोगानुपपत्तिरिति द्रव्यवादनिष्कर्षः ननूक्तपक्षद्वयमपि न विचारसहं तथा हि जातिशक्तिवादे गोत्वादिपदान्न हि शिष्टबोधापत्तिर्गोत्वशक्तिग्रहस्य न हि शिष्टबोधोपयिकस्य सत्त्वात् न च निर्द्धर्मितावच्छेदकशक्तिग्रहो गोत्वविशिष्टबोधहेतुर्गोत्वत्वधर्मितावच्छेदककशक्तिग्रहश्च गोत्वत्वेन तदुपस्थितौ शाब्दबोधे च हेतुरितिवाच्यम् गोत्वं न गोपदशक्यमिति गोत्वत्वधर्मितावच्छेदकबाधग्रहकाले निर्धर्मितावच्छेदकशक्तिग्रहसंभवेन गोत्वविशिष्टबोधापत्त्या गोत्वत्वधर्मितावच्छेदकश

गोपदगौरित्याकारकशक्तिसंबंधेन गोत्वप्रकारकगोपदत्वविशिष्टविषयकशक्तिज्ञानम् गोत्वविशिष्टबोधहेतुरिति नो बाधकाले
शाब्दबोधापत्तिरिति विभाव्यते तथापि कदाचित्समवायेन गोत्वविशिष्टबोधः कदाचित्कालिकसंबंधेनेत्यव्यवस्थानुपपत्तिः गोत्ववि
षयकशक्तिज्ञानस्याविशिष्टत्वात् न च तेन समवायेन गोत्वविशिष्टविषयकशाब्दबुद्धिं प्रति तेन संबंधेन गोत्वविशिष्टशक्तिग्रहस्यैव
मितरसंबंधेन तादृशविशिष्टविषयबोधे तेन संबंधेन तादृशविशिष्टशक्तिज्ञानस्य हेतुतया न नियमोपपत्तेः गोपदं गौरित्याकारक
शक्तिमहाभ्रदमूको धानन्वभवाच्च गोत्वादिपदानां गोत्वत्वे शक्तिरित्यपि न प्रकृतिजन्यबोधप्रकारे भावप्रत्ययविधानात् गवेतरासमवेत
त्वविशिष्टसकलगोसमवेतत्वरूपस्य गोः शक्यत्वाभ्युपगमे लाघवमूलकाकृतिवादस्य मूलशैथिल्यापत्तेश्च व्यक्तिमात्रेपि पदमात्र
स्यैव व्यक्तिबोधकत्वाविशेषत्वात् गौश्चलेनीलइत्यादीनां सहप्रयोगानुपपत्तिः किंच हस्तिपकव्यक्त्यंतरे संबंधग्रहे पमहस्तिप
के संबंधेन गृहीतस्तस्यापि हस्तिदर्शने स्मरणापत्त्या न शक्तिविषयकसंबंधग्रहस्य तदुपस्थितिनियामकत्वस्यावश्यकतया
कथमेकविषयकशक्तिज्ञानादपरविषयकोपस्थितिः सामान्यलक्षणाभ्युपगमे तदुपस्थितिरित्यभिप्रायवानाह वस्तुतस्त्विति विशि
ष्टमिति जातिविशिष्टा व्यक्तिर्व्यक्तिविशिष्टा जातिर्वेत्यर्थः यद्यप्याकृतिपदार्थस्य द्रव्यनपदार्थत्वे द्रव्यपदार्थस्य चाकृतिर्न पदा
र्थ इत्युभयोरुभयपदार्थत्वेइति भाष्याद्याकृतितयोरेवाकृतिव्यक्त्योः शक्तिग्रहविषयता लभ्यते तथापि कस्याचित्किंचिद्गुणमू
तं किंचित्प्रधानमित्युत्तरभाष्यपर्यालोचनया न तत एव विशिष्टे शक्यत्वावधारणात्तयोपादानमविरुद्धम् अन्यथा तृतीये पादाने का
रणतयोरिव विशेष्यविशेषणभावानापन्नजातिव्यक्त्योः शक्यत्वे गोत्वेन गोव्यक्तिस्मृतिसमूहालंबनबोधापत्तेः शक्तिज्ञानप
दार्थोपस्थितिशाब्दबोधानां समानप्रकारकत्वनियमात् स्वमेवायमपमस्यागरूपाकृतौ नपादपरमिमं गौनमेम आत्याकृतिव्य

स्वारसिकतयेति शेषः जातेः कदाचित्प्राधान्येन भानंतु तात्पर्यग्रहसापेक्षमिति तदाशयः जातेः प्राधान्येपि द्रव्यसंख्यामादाय तत्र द्वि
वचनाद्युपपत्तिर्बोध्या तदुक्तं कैयटेन यथा भवतद् इत्यादौ क्रियाप्राधान्येपि साधनकृतो वचनभेद एवमाकृतिप्राधान्येपि द्रव्यसं
ख्याकृतद्वित्वदोष इति द्रव्यप्राधान्येपि क्वचिज्जातिसंख्यामादायवचनं ब्राह्मणं न हन्यादित्यादौ यथा जातेः प्राधान्ये च निरवच्छि
न्नाया एव व्यक्तेः प्रकारताविशेष्यीभूतजात्या च तदनुगमो न हि प्रकारीभूतमेवानुगमकमिति नियम इति तत्कल्पपरिष्कारः व
स्तुतस्तु जातिविशिष्टव्यक्तिरेव शक्या गवादिपदाद्धो विशिष्टगोत्वबोधस्यानुभवेनोक्तकल्पासंभवात् अत एव तथैव व्याख्या
तं जात्यतिरिक्तपदार्थस्य किंचिद्धर्मावच्छिन्नत्वमिति नियमेन निरवच्छिन्नायास्तस्या जात्यंशे भानायोगात् गोत्वस्यान्वयि
तावच्छेदकरूपेणानुपस्थित्या तत्तत्कर्मत्वाद्यन्वयासंभवाच्च संपन्नो व्रीहिरित्यादौ तु स्वाश्रयप्रकृत्यर्थतावच्छेदकत्वसं
बंधेन प्रकृत्यर्थव्यक्तावेवैकत्वान्वयः उक्तस्थले एकवचनोपस्थितानि नानैकत्वानि न व्रीहिष्वन्वीयंत इति न सत् सजातीय
निष्ठभेदप्रतियोगितानवच्छेदकैकत्वरूपसजातीयद्वितीयरहितत्वस्यैवैकवचनार्थत्वेन तत्र तस्य बाधात् संख्यारूपैकत्व
स्य द्रव्यमात्रसाधारण्येनार्थत एव लाभादनुपयोगात्तस्यैकवचनार्थत्वाभावाच्च अत एव पशुना यजेतेत्यत्र तादृशैकत्वस्यै
कवचनेन विवक्षितत्वान्नानेकपशुकरणकयागादृष्टसिद्धिः समभिव्याहृतपदार्थसंसर्गित्वविशिष्टप्रकृत्यर्थताव
च्छेदकरूपेण साजात्यस्य विवक्षणाच्च नात्र घटोस्तीत्यादौ घटनिष्ठभेदप्रतियोगितानवच्छेदकैकत्वाप्रसिद्धिः एतद्देशविद्य
मानघटनिष्ठभेदप्रतियोगितानवच्छेदकैकत्वस्यैव तत्र बोधोन तस्योक्तरीत्याप्रसिद्धिसंभवात् एवं च व्यक्तिविशेष्यकबो
धाभ्युपगमे क्वाप्यनुपपत्तेरभावेन तस्य च तद्विशेष्यकशक्तिग्रहमंतरेणासंभवाद्गवादिपदानां जातिविशिष्टव्यक्तावेव शक्ति

भावादिनिजातावपिशक्तिरुच्छिद्येत नचयद्विषयकत्वेनशक्तिज्ञानंकारणं तदवश्यंशक्यमितिनियमाज्जातौशक्तिः सेत्स्यतीतिवाच्यम् तर्हिव्यक्तिविषयकत्वेनशक्तिज्ञानस्यहेतुतयाव्यक्तिशक्तिस्वीकारस्यावश्यकत्वात् उक्तेर्थेभाष्योपन्यसनं तुकस्यचित्किंचित्प्रधानभूतं किंचिद्गुणभूतमित्युपसंहारभाष्यानालोचनमूलकमेवेत्यास्तांतावत् ॥८॥ ॥नन्वेवमेकमितिपक्षस्यनिरालंबनापत्तिरतआह एकमित्यस्यचेति बोधकत्वंशक्तिरितिमतेबोधकत्वज्ञानविषयबोधांशेप्रकारितयाऽवच्छेदकत्वंशक्तिरित्यर्थलाभात्तदाश्रयजातेरैक्यात् शब्दनिष्ठबोधकत्वस्यैवविनिगमनाविरहादर्थनिष्ठबोध्यत्वस्यापि शक्तित्वमितिमतेप्यस्मात्पदादेतदर्थबोधोभवत्वितिशक्तिज्ञाननिष्ठशाब्दधीहेतुतायांप्रकारितयावच्छेदिकायाजातेरैक्या

एकमित्यस्यचायमभिप्रायः शक्तिज्ञानेचविषयतयावच्छेदिकाजातिरेव ॥ ९ ॥

द्वातन्पक्षोपपत्तिरित्यर्थः तथाचतादृशप्रकारितावच्छेदकतारूपायाः शक्तेर्जातिमात्रनिष्ठतयाकृतिरेवपदार्थइतिपक्षः समर्थितोभवति अवच्छेदकतायाः स्वरूपसंबंधरूपायाघटत्वाद्यात्मकत्वेप्यवच्छेद्यावच्छेदकभावउपहितानुपहितभेदात्समर्थनीयः एवमेवैकंव्यक्तिरितिपक्षोपिसमर्थनीयः तादृशज्ञाननिष्ठशाब्दबोधकारणतायांबोधांशेविशेष्यतयाव्यक्तेरवच्छेदकत्वात् एतत्पक्षेचावच्छेद्यावच्छेदकभावस्यसामंजस्येनोपपत्तिर्गोत्वादिजात्याननुगमान्नतदानंत्यमपिशक्यतावच्छेदकप्रकारकव्यक्तिबोधेव्यक्तिशक्तिग्रहस्यैतत्कल्पेहेतुतयाचलत्वादिनागवादिव्यक्तिबोधार्थंतत्प्रयोगस्याप्युपपत्तिश्चेतिबोध्यम् ॥ ९ ॥

लिंगानीति लिंगत्वंचप्राकृतगुणवृत्तोधर्मविशेषः तद्विशेषश्चनपुंसकत्वादीत्याशयेनाह सत्त्वेति साम्यावस्थेति उपचयापचयरहित्येनावस्थानमित्यर्थः उपचयोवृद्धिः अपचयस्तन्न्यूनत्वम् तत्तच्छब्दनिष्ठमिति जातिगुणक्रियादिभेदभिन्नशब्दनिष्ठंतत्तच्छब्दवाच्यंचेति स्वाश्रयशब्दवाच्यंचेत्यर्थः पुल्लिंगः शब्दइतिव्यवहारस्तस्माच्छसोनः स्वमोर्नपुंसकादित्यादिसूत्रप्रामाण्याच्चेति भावः तमेवेति समानानुपूर्वीकत्वेप्युपचयाद्यवस्थारूपंपरस्परसमानाधिकरणंलिंगमादायेवेत्यर्थः भिद्यंत इति पुंस्त्वादिलिंगकेनरव्यावृत्तिविधेयकानुमित्युद्देश्याभवंतीत्यर्थः ननुलिंगस्योक्तावस्थारूपत्वेतासांपरस्परविरुद्धानामेकत्रावस्थानासंभवेन केषुचिच्छब्देष्वनेकलिंगकत्वव्यवहारः किंनिबंधनोऽतआह केषांचिदितितटादिशब्दानामित्यर्थः वस्तुतस्तेषांविरुद्धत्वेपि

त्रिकमिति जातिव्यक्तिलिंगानीत्यर्थः सत्त्वरजस्तमोगुणानांसाम्यावस्थानपुंसकत्वम् आधिक्यंपुंस्त्वं अपचयः स्त्रीत्वंतत्तच्छब्दनिष्ठंतत्तद्वाच्यंचतमेवविरुद्धधर्ममादायतटादिशब्दाः भिद्यंते केषांचिदनेकलिंगत्वव्यवहारस्तुसमानानुपूर्वीकत्वेनशब्दानामभेदारोपात्॥ ११ शब्दानांसमानानुपूर्वीकत्वनिबंधनाभेदाध्यासादनेकलिंगकत्वव्यवहारोपपत्तिरित्यर्थः अर्थनिष्ठंस्तनकेशवतीनारीलोमशः पुरुषः स्मृतइत्यादिस्मृतिलक्षितंलिंगंतुनात्राश्रयितुंशक्यम् दारानित्यादौशास्त्रकृतर्थेनदभावेनतत्वाद्यनापत्तेः तथाचभाष्यम् एकार्थेशब्दान्यत्वाद्दृष्टंलिंगान्यत्वमवयवान्यत्वाच्चेति एकस्मिन्नर्थेपुष्यस्तारकानक्षत्रमितिलिंगनानात्वदर्शनात्कुटीरइत्यादौरेफस्यावयवस्योपजनेपिलिंगभेददर्शनाच्चान्यदेवत्र

केषांचित्समवस्थिताः अविरुद्धाविरुद्धाभिर्गोमहिष्यादिजातिभिरित्यादि तत्रोक्तमिति परेतु स्तनकेशवती नारी लोमशः पुरुषः
स्मृत एतयोरंतरं यच्च तदभावेन नपुंसकमिति स्मृत्युक्तलक्षणलक्षितलिंगस्य सार्वत्रिकत्वेन दारानित्यादौ नत्वानापत्त्या स्त्रियां
मिति सूत्रे ऽवश्यंकल्पितत्वस्य तातः आस्त्रेयइत्यादिना सार्वत्रिके गुणावस्थारूपपारिभाषिकलिंगस्य शास्त्रीयकार्योपयोगिनो भा
ष्यकृता स्वीकारे पि गुरुसंज्ञाविज्ञानान्नत्वादिशास्त्रप्रवृत्तौ लौकिकलिंगस्याप्याश्रयणं पुमादिसंज्ञानां संख्यासंज्ञाया इवाधिक
संग्रहार्थं प्रवृत्तत्वे पि मतसिद्धार्थनिरासार्थमप्रवृत्तेः अत एवाविर्भावतिरोभावस्थितिश्चेत्यप्युपपादितम् धर्मो मूर्तिषु सर्वासु
लिंगत्वेन व्यवस्थिताइत्यत्रापि नालौकिकलिंगमपि नासमुच्चितं वा नहि नत्र सति संभवे सामानाधिकरण्यसंबंधेन लौकिकपुं
स्त्वविशिष्टशास्त्रीयलिंग एव पुमादिशब्दानां शक्तिर्न केवल शास्त्रीयेनापि लौकिकेऽसंभवे तु शास्त्रीय एव अत एव पशुनायजे
तेत्यादौ पशुस्त्रियाकृते यागे वैगुण्यमेव न लौकिकपुंस्त्वविशिष्टशास्त्रीयपुंस्त्वस्यैव शब्देन प्रतिपादनादित्याहुः अथ लिंगेशा
क्तिग्रहविषयताया अभावेन प्रातिपदिकार्थत्वाभावात्त्रिकमिति पक्षोऽनुपपन्न इति चेन्न स्वमोर्नपुंसकादित्यादिसूत्रभाष्य
एपेनपुंल्लिंगादिविशिष्टाय घटो घटपदवाच्य इत्याकारकशक्तिग्रहाभ्युपगमेन सामंजस्यात् शब्दनिष्ठमेव लिंगं नत्वादिप्रवृ
त्तौनिमित्तमिति मते शब्दार्थयोरभेदे लिंगस्य साक्षादिनरथा स्वाश्रयसाध्यत्व संबंधेनार्थविशेषप्रकारत्वाद्धर्मितावच्छेदकत्वेन धर्मिता
वच्छेदकसमानाधिकरणत्वेन शक्तिग्रहविषयताया नियामकत्वस्य फलबलेन कल्पनात् वस्तुतस्तु पारिभाषिकलिंगमप्यर्थ
एव स्वीकर्तुमुचितम् पुंल्लिंगशब्दइत्यादौ पुंल्लिंगादिशब्दा अर्शआद्यजंताः आत्मनि सर्वस्याप्यसत्त्वेन परत्यानमापि स्या — —
नादिसत्त्वादात्मा ब्रह्मेत्यादिप्रयोगोपपत्तिः स्थानतिरोभावोपचयदर्शितियावत् उपचयापि विशिष्टकार्य एव प्रयोग नियामककालेनेच

लिंगादित्रयस्य नामार्थत्वं साधयितुं शंकते नन्विति अन्वयव्यतिरेकाभ्यामिति घटादिसमभिव्याहारेऽप्यादिपदात्स्त्रीत्वबोधादेरभावच
तद्बोधादेवंरूपाभ्यामित्यर्थः एवमन्यत्राप्यूह्यं तथाच ताभ्यां लिंगादेः प्रत्ययार्थत्वावधारणान्न लिंगादित्रिकस्य प्रकृत्यर्थत्वमित्यर्थः
दधि पश्यतीत्यादौ विभक्त्यादिनाऽयं यात्ययमापातीत्यादिपरिग्रहः बोधादिति कर्मत्वादिबोधादित्यर्थः तथाच व्यतिरेकव्यभिचारेणा
न्यलभ्यत्वाच्च तदर्थत्वाभावान्नामार्थत्वमेव तेषामावश्यकमिति भावः वक्ष्यमाणयुक्त्या संख्याकारकयोः प्रत्ययार्थत्वेपि लिंग
स्य प्रकृत्यर्थत्वमेव युक्तमित्याशयेनाह लिंगेति अत एवेति प्रकृतिप्रत्यययोरन्यतरस्य वाचकत्वे युक्तिसाम्यादेवेत्यर्थः निर्बंधइ

नन्वन्वयव्यतिरेकाभ्यां प्रत्ययस्यैव तद्वाच्यं तत एव लिंगादीनामुपस्थितेः प्रकृतिवाच्यत्वे मानाभावाच्चेति चेत्सत्यं प्रत्य
यवर्जिते दधि पश्येत्यादौ प्रत्ययमजानतोपि बोधात्प्रकृतेरेव वाचकत्वं कल्प्यते लिंगानुशासनस्य प्रकृतेरेव दर्शना
च्चेति अत एवैषु पक्षेषु न निर्बंधः प्रत्ययस्यैव वाचकतायायुक्तत्वात्॥ ११ ॥ ति दूरमेव मतं मुख्यमित्यभिनिवेशइत्यर्थः तदे

वाह प्रत्ययस्यैवेति युक्तत्वादिति अनंतानां शक्तत्वकल्पनापेक्षया कतिपयस्वादीनामेव तत्कल्पने लाघवादिति भावः केचित्तुटा
बादिकं विनापि वागादिशब्देभ्यः स्त्रीत्वस्याव्युत्पत्तिपक्षे एमत्रानादिशब्देभ्यः पुन्नपुंसकत्वयोर्बोधस्य सार्वजनीनानुभवसिद्धत्वा
ल्लिंगत्वं प्रातिपदिकार्थमेव लुप्तविभक्तिस्मरणादपि बोधांगीकारेण संख्याकारकयोर्विभक्तिवाच्यतैव उक्तंच स्वार्थो द्रव्यंच
लिंगंच संख्या कर्मादिरेवच अमी पंचैव नामार्थास्त्रयः केषांचिदग्रिमा इति अग्रिमा लिंगांता इत्याहुः नन्वेकवचनत्वादेरनुगत
स्य दुर्वचतया कथं तेन रूपेण स्वादीनामेकत्वादिवाचकत्वं तथाहि न तावदेकत्वादिवाचकत्वं तत् वाचकतायाः शक्ततारूपत्वे ना

लाश्रयात् बोधकतात्पत्ने तु द्विवचनादीनामपि शक्तिभ्रमेणैकत्वादिबोधकतयातिप्रसङ्गात् बोधकत्वशक्तिरिति मते त्वात्मात्र
पसद्दुर्धरत्वाच्च नाप्येकवचनत्वादिकं जातिः सुत्वादिना साङ्कर्यात् नच पाणिनिसंकेतसंबन्धेनैकवचनादिपदवत्त्वं तत् ताद
शसंकेतस्य संकेतत्वेन संबन्धत्वे कस्यचिदेकवचनादिपदात्त्वौजसादिर्वा द्व्य इत्याकारकसंकेतस्यापि संभवेनातिप्रसङ्गतादव
स्थ्यात् पाणिनिसंकेतत्वेन तत्त्वे तु व्याकरणान्तरप्रणेतृपुरुषान्तरस्यापि पाणिनिसंकेततुल्यसंकेतसंबन्धेनैकवचनादिपदव
त्त्वस्य ङित्यादिपदात्त्वौजसादिर्वा द्व्य इत्याकारकपुरुषविशेषीयसंकेतसंबन्धेन ङित्यादिपदवत्त्वस्य वा विनिगमनाविरहेण
क्ततावच्छेदकत्वापत्तेरिति चेन्न सुत्वत्वादिनैवैकवचनस्य शक्तत्वाभ्युपगमेनोक्तदोषानवकाशात् कार्यतावच्छेदककोटावव्य
वहितोत्तरत्वनिवेशाच्च न परस्परजन्योपस्थितौ व्यभिचारः नच दधिमध्वित्यादौ व्यभिचारः तत्र लुप्तविभक्त्यनुसंधानेनैव बोधा
भ्युपगमात् कथमन्यथा द्योतकतावादिमतेऽपि केवलप्रातिपदिकात्तदुपपत्तिर्द्योतकस्यैवाभावात् नचानेकसुत्वादीनां शक्त
तावच्छेदकत्वे गौरवात् प्रातिपदिकत्वस्यैकस्य तन्त्रमुचितं लाघवादिति वाच्यम् उक्तरीत्या प्रातिपदिकत्वस्याप्यनुगतस्य दुर्वचत्वात्
तद्ज्ञानेऽप्येकत्वादिबोधस्यानुभवसिद्धत्वात् पदेन वर्णत्वेन बोधकत्वे तु विभक्तेरपि वाचकतासिद्धेः एकत्वाद्युपस्थितेः प्राग्वा
र्णत्वाद्युपस्थितेरनावश्यकत्वात्तदनुरोधेन तत्कल्पने गौरवाच्च पदार्थयोर्विशेष्यविशेषणभावेनान्वये भिन्नपदजन्योपस्थिते
स्तत्तदेकप्रकृत्युपस्थाप्यघटैकत्वाद्योस्तद्भावेन परस्परमनन्वयापत्तिरेवेति स्वादीनां संख्यादिवाचकत्वमेवेति भावः. द्योत
कतावादिनो पुनरयमाशयः. न प्रकृतीनां घटैकत्वाद्योर्विशिष्टतयोः शक्तिर्येनोक्तदूषणावकाशः स्यात् किंत्वेकत्वविशिष्टे
पगमो पृथक्शक्त्यनभ्युपगमेनान्वयस्यैवाभावात् अनन्तप्रकृतीनामेकत्वादिशक्ततायां तस्य गौरवस्याप्यभावाच्च पदपद

स्यैकत्वे शक्तिभ्रमदशायां घटः प्रमेय इत्यादिवाक्यादेकत्वं प्रमेयमिति बोधस्य सर्वसिद्धतया तदनुरोधेनैकत्वादिविषयकशाब्दबोधे घटा
दिपदजन्यैकत्वाद्युपस्थितेर्हेतुतायाश्चावश्यकत्वाच्च किंच विभक्तेः संख्यावाचकत्वमते समानविषयकानुमितिसामग्रीप्रतिबंधकता
यां प्रातिपदिकजन्यघटाद्युपस्थितिः स्वादिजन्यैकत्वाद्युपस्थितिश्च निवेश्या तथा च तयो विशेष्यविशेषणभावे विनिगमनाविरहेणाप्र
तिबंधकभावबाहुल्यम् मन्मते तदुभयस्थलीयैकैकविशिष्टविषयकोपस्थितिस्तत्र निवेश्येति लाघवम् विशिष्टविषयकोपस्थिते
रप्येकत्वादिप्रकारतानिरूपितघटादिविशेष्यताशालित्वेन घटादिविशेष्यतानिरूपितैकत्वादिप्रकारताशालित्वेन वा निवेश इत्य
त्र विनिगमकाभावात्साम्यमिति तु न मन्मते यत्र योग्यताज्ञानघटोपस्थित्येकत्वोपस्थितीनां तिसृणां विशेष्यविशेषणभावे विनि
गमनाविरहेण प्रतिबध्यप्रतिबंधकभावषट्कम् तन्मन्मते योग्यताज्ञाने विशिष्टविषयकोपस्थितेः प्रत्येकं विशिष्टोभयरूपेण वैशिष्ट्यं नि
वेश्यद्वयम् प्रत्येकं तादृशरूपावच्छिन्नायामुपस्थितौ योग्यताज्ञानस्य वैशिष्ट्यं निवेश्यचद्वयमिति चतुष्टयमिति लाघवात् अतिप्रसंग
परिहारस्तु तत्तत्संख्याबोधे तत्तद्वचनसमभिव्याहारस्य हेतुत्वकल्पनादेवं कारकं विभक्त्यर्थ इति कल्पे तत्तत्कारकबोधे सोत्तरतत्तद्विभ
क्तिसमभिव्याहारस्य हेतुताकल्पनात्संबोध्यः स चामू घट इत्यतो बोधवारणाय वाचकतावादिनामप्यावश्यकः एवं रीत्योपसर्गाणामपि
द्योतकत्वं बोध्यमिति पक्षद्वयेपि हरिसंमतिमाह द्योतिका वाचिका वेति यद्वा संख्यावतोर्थस्य समुदायोभिधायक इति त्वस्योत्तरा
र्द्धं घट इत्याद्याकारकानुपूर्व्यवच्छिन्नविभक्त्यंतसमुदायो वैकत्वादिविशिष्टघटादिवाचक इति तदर्थः पदस्फोटमवलंब्य चे
दं नामार्थधात्वर्थयोः साक्षादभेदातिरिक्तसंबंधेनान्वयस्याव्युत्पन्नत्वादभिधानानभिधानव्यवस्थानुपपत्तेश्च कारकविभक्त्य
र्थः पदि च नामार्थधात्वर्थयोर्भेदेन परस्परान्वयापादनं तंडुलकर्मकपाकविशेष्यकबोधे द्वितीयांततंडुलपदसमभिव्याहृतपच

सिद्ध्यत्यम् अनभिहिताधिकारस्यापि सत्त्वाद्विभक्त्यर्थ इति पक्ष एवोपयोगः तत्र पक्षे कर्मणि द्वितीयाद्येकयोरित्यादीनामेकवाक्य
तयैव प्रवृत्तेस्तत्र विशेष्यविशेषणभावेन क्रमचारात् एकस्य यत्कर्मकर्मणि यत्त्वे कत्वमिति निर्द्धिधावाक्यार्थसंपत्तिः प्रथमकल्पे द्वितीया
दीनां तिङादीनां च कर्मादिवाचकतयान्यतरेणाभिधानेऽन्यतरस्य गतार्थत्वादनभिहितसूत्रमफलं द्वितीये तु तेनाकर्मणोऽभिधाने
पि तद्गतसंख्यायाश्चानभिधानात्प्राप्तौ द्वितीयां वारयितुं तदावश्यकं सति तस्मिन्ननभिहितकर्मगतत्वाभावान्न द्वितीयादिप्रसंगः सत्त्वा
पि यद्विप्रातिपदिकार्थसत्त्वोक्तवाक्यार्थासंभवात्सूत्रस्य सार्थक्यमेव ननु नाभिहितसूत्राभावेऽपि भीष्मः कटं करोतीत्यादौ भीष्मादिपदाद्द्विती
याद्यनुपपत्तिः विशिष्टस्यैव कटादेः क्रियया सिततमत्वात्प्रातिपदिकार्थमात्रे प्रथमाप्रसंगात् तत्सूत्रपक्षे त्वभिधानस्य सद्वा
दिभिः परिगणनात्कटप्रकृतिद्वितीययाभिहितेऽपि तस्मिन्भीष्मादिपदेभ्यो द्वितीयादिविभक्तेः सूपपादत्वादिति चेन्न वि
शिष्टस्य विधित्सया धर्मिमात्रेण तोषाभावाद्धर्मिणामपीप्सिततमत्वात्कर्मत्वम् तस्य चान्यवाचकपदेन द्वितीयया नभिधानात्
क्तः कटइत्यादौ तु प्रत्ययस्य धातूत्तरवर्तित्वेन तेन प्रातिपदिकार्थविशेषणीभूतकर्मत्वस्यानभिधानाद्विशेषाद्धर्मे धर्मिनिष्ठम
दभिधानमिति भीष्मादिविशेषणवाचकपदेभ्यः प्रथमोपपत्तिरिति न कापि तदनारंभेऽनुपपत्तिस्तदुक्तं भाष्ये कटोऽपि कर्म भीष्मा
दयोऽपीति तदा तु कारकमपि प्रातिपदिकार्थः अस्मिन्नपि पक्षे कारकस्य प्रकृत्यर्थव्यक्तिविशेषणतैव विभक्तिबोध्यत्वादिति
केचित् न चैवं प्रातिपदिकार्थप्रकारकशाब्दबोधे जन्योपस्थितेर्हेतुत्वं विलीयेतेति वाच्यम् इष्टत्वात् एतन्मते जातिलिंगसंख्याका
रकविशिष्टद्रव्यस्य प्रातिपदिकार्थत्वेनोक्तहेतुहेतुमद्भावस्य गगनकुसुमायमानत्वाद्विशेष्यतेमतु कारकस्यैव विभातुभयात् क्रियान्व
यानुरोधाच्चेति पंचकपक्षेऽप्युपपत्तिरिति ॥

बहुषु स्थलेष्विति भाष्याद्याकरग्रंथेष्वित्यर्थः तत्र पंचकचतुष्कपक्षौ तत्रोपपद्यमित्यत्र कैयटेनोपन्यस्तौ त्रिकमिति पक्षस्तु हरि
कारेण प्राधान्येनेति तत्र सर्वेषामेव पक्षाणां भाष्यकृतोपन्यासादिति भावः सूत्रादावित्यादिनानभिहितादिसूत्रसंग्रहः २७ घटं
मानयेत्यादि शाब्दबोधे घटादिशब्दस्य भाने प्रमाणाभावेन तस्य प्रातिपदिकार्थत्वसाधनमनुचितमित्याशंकां परिहरति शब्द
स्तावदिति तत्र हरिवाक्यम् प्रमाणयति नसोस्तीति प्रत्ययः शाब्दबोधात्मकः शब्दानुगमादिति शब्दविषयकत्वादित्यर्थः अ
नुविद्धमिति विशिष्टमित्यर्थः अनुव्यवसायो यथार्थेन विशिष्टज्ञानं विषयीकरोति तथा शब्देन विशिष्टमपीत्यर्थः वैशिष्ट्यं

द्योतिका वाचिका वा सुब्दित्वादीनां विभक्तपदेति वाक्यपदीये येपि पक्षद्वयस्य व्युत्पादनात् शास्त्र इति बहुषु स्थलेषु
व्युत्पादनं व्यंजयितुं प्राधान्येन सरूपसूत्रादौ व्यक्तम् २६ शब्दस्तावच्छाब्दबोधे भासते नसोस्ति प्रत्ययो लोके यः शब्दा
नुगमादृते अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते इत्याद्यभियुक्तोक्तेः विसृष्टुच्चारयेत्यादावर्थोच्चारणासंभवेन
विना शब्दविषयं शाब्दबोधासंगतिश्चेति सोपि प्रातिपदिकार्थः ॥ २८ चार्थद्वारकं बोध्यम् घटपदजन्यबोधानंतरं घटं शा
ब्दयामीत्येवानुव्यवसायान्न कलशं कुंभं वेत्यत एवोरेति सविताभानुरित्यादौ न पौनरुक्त्यम् तत्पदात् पादनेउदयास्तयोः
शाब्दबोधे ऐकरूप्यानिर्वाहादिति भावः ननु तावतापि शब्दभानं सिद्धं न विशेष्यत्वेनेति कथं शब्दस्य शब्दार्थत्वसिद्धिरत
विसृष्टुरिति अर्थोच्चारणासंभवेनेति वदता लक्षणावसरोपि सूचितः असंगतिरिति अनुपपत्तिरित्यर्थः सोपि शब्दोपि प्राति
पदिकार्थ इति प्रकारांतरेणोपस्थितस्य विशेष्यत्वासंभवादिति भावः॥

लक्षणयास्त्ववाच्यवाचकत्वसंबंधरूपया निर्वाह इति तावता पि पदवाच्यत्वासिद्धेरिति भावः निरूढेति निरूढत्वं च लक्षणाया मनादितात्पर्यग्रहाधीनत्वम् अनादित्वं च तज्जन्यबोधसमानाकारपूर्वपूर्वबोधध्वंसवत्त्वम् शक्त्यनतिरेकादित्यस्यासंगतत्वमित्यादि एतत्तत्वमग्रे वक्ष्यते तस्या असार्वत्रिकत्वमप्याह जवगडदशमिति तत्र समुदायस्य कुत्राप्यशक्तत्वादिति भाव. ९ अग्रहादिति मन्मते तु नादृशसमुदायस्यैव तत्पदशक्यतया नानुपपत्तिरिति भावः ननु तत्र समुदायस्याऽशक्तत्वेपि न हि घटकज कारादिवर्णानामेकाक्षरकोशादौ जेत्यादौ शक्ति प्रतिपादनात् तदर्थवाचकत्वरूपलक्षणायास्तत्र नानुपपत्तिरत आह अ

नच लक्षणया निर्वाहः निरूढलक्षणाया. शक्त्यनतिरेकात् जवगडदशमुच्चारयेत्यादौ शक्याग्रहेण शक्यसंबंधरूपलक्षणाया अग्रहाच्च अज्ञातायाश्च वृत्तेरनुपयोगात् गंगमुच्चारयेति भाषाशब्दानामनुकरणे साधुतासंप्रतिपत्तेस्तेषां शक्त्यभावेन परनये लक्षणाया असंभवाच्चेत्यभिप्रेत्य॥ ॥ अज्ञातायाइति गंगापदस्य वस्तुतः स्वशक्यप्रवाह सामीप्यरूपसंबंधस्याग्रहे तस्यार्थबोधस्यानुदयेनाज्ञाताया एवतस्या. पदार्थोपस्थित्युपयिकत्वेन प्रकृते तदग्रहादिकानुपपत्ति तदवस्थैवेति भावः ननु शाब्दबोधाव्यवहितप्राक्कालेनादृशवृत्तिग्रहासत्वेपि पदा कदाचिज्ज्ञाततादृशवृत्तिग्रहादिनोद्बुद्धसंस्कारेण पदार्थोपस्थितिद्वारा तादृशशाब्दबोधोपपत्तिः सुकरेत्यत आह गंगमिति गोशब्दाद्यनुकरणे साधुत्वस्य सर्वैरेवाभ्युपगमादित्यर्थ परनय इति परो नैयायिकस्तन्मते तेषां शक्त्यभावेन तद्घटितलक्षणाया अप्यप्रसराद् नि मन्त्वात्मकार्थवत्त्वनिबंधनप्रातिपदिकत्वाद्यनुपपत्तिरिति भाव ॥

षोढापीति पूर्वोक्तपंचकसहितः शब्दोपीत्यर्थः कचिदनुकरणस्थले तच्चानुकरणं द्विविधम् ध्वनेर्वर्णस्य च तत्राद्यं पटत्करोतीत्यादि द्वितीयं भुवोवुगित्यादि भेदविवक्षेति पटदित्यादौ ध्वनिमयत्ववर्णमयत्वाभ्यां भुवोवुगित्यादावर्थपदार्थकत्वशब्दपदार्थकत्वाभ्यां न द्विवक्षेत्यर्थः शब्दार्थोपि प्रातिपदिकार्थ इति तथा च मतोश्च सूक्तसाम्नोरिति सूत्रे योसावाम्नायेऽस्यवामशब्दः पठ्यते सच्च प्रकृतेरस्यवामीयमित्यादौ पदार्थोऽत एव प्रातिपदिकत्वाच्च सिद्धिरितीति भावः मूले अर्थवभासत इति पाठेऽर्थे यवादिस्वरूपे अवभासते विशेषणतया विषयीभवतीत्यर्थः वस्तुतस्तु भूषणपर्य्यालोचनयाऽसावर्थोवभासत इति पाठः

षोढापिक्कचित्प्रातिपदिकार्थ इत्याह शब्दोपि यदि भेदेन विवक्षा स्यात्तदा तथा नोचे छ्रोत्रादिभिः सिद्धोप्यसावर्थोवभासते २६ यद्यनुकार्यानुकरणयोर्भेदविवक्षा तदा शब्दोपि प्रातिपदिकार्थः यदि न भेदविवक्षा तदा श्रोत्रादिभिरुपस्थितोप्यर्थवद्भासते अपिर्हेतौ उपस्थितत्वाद्भासत इत्यर्थः अयंभावः॥ ॥ तत्र वशब्दः सादृश्ये तथा च भेदपक्षे यथानुकार्य्यरूपोर्थो विशेष्यतया शाब्दबोधे भासते तथाऽभेदपक्षेऽनुकार्य्याभिन्नानुकरणशब्दोपीत्यर्थः तत्रानुपस्थितस्य कथं भानमित्याकांक्षायामुक्तं श्रोत्रादिभिरिति आदिना वृत्तिज्ञानजन्यसंस्कारसंग्रह इति केचित् वस्तुतस्तु लिप्याद्यनुसंहितस्य तस्य शाब्दे भानसंपत्तये आदीति पदोपस्थितमेव शाब्दबोधे भासत इति तु सार्वत्रिकमिति भावः अत एव सारूप्यार्थवद्भासत इति न द्विरुक्तम् एतेनाभेदपक्षेऽनुकरणस्यार्थाभावेन तदंशे भानवर्णनमसंभवदुक्तिकमित्याशंकासहिता नन्वभेदपक्षेप्यनुकार्य्यस्य शाब्दे कथं भानम् पदवृत्तिजन्योपस्थित्यभावादत आह अयंभाव इति॥ ९ ॥ ॥

लक्षणायास्तवाच्यवाचकत्वसंबंधरूपयानिर्वाह इति तावतापिपदवाच्यत्वासिद्धेरितिभावः निरूढेति निरूढत्वंचलक्षणाय
मनादितात्पर्यग्रहाधीनत्वम् अनादित्वंचतत्स्वजन्यबोधसमानाकारपूर्वपूर्वबोधध्वंसवत्त्वम् शक्यंनतिरेकादित्यस्यास्मं
न्मतइत्यादिस्तत्त्वमग्रेवक्ष्यते तस्याअसार्वत्रिकत्वमप्याह अवगड्डदशमिति तत्रसमुदायस्यकुत्राप्यशक्तत्वादितिभाव. र
अग्रहादिति मन्मतेतुतादृशसमुदायस्यैवतत्पदशक्यतयानुपपत्तिरितिभाव. ननुतत्रसमुदायस्याऽशक्तत्वेपितद्घटकज
कारादिवर्णानामेकाक्षरकोशादौजेनादौशक्तिप्रतिपादनात्तत्तदर्थवाचकत्वरूपलक्षणायास्तत्रनानुपपत्तिरतआह अ

नचेलक्षणयानिर्वाहः निरूढलक्षणायाः शक्यनतिरेकात् अवगड्डदशमुच्चारयेत्यादौशक्याग्रहेणशक्यसं
बंधरूपलक्षणायाअग्रहाच्च अज्ञातायाश्चवृत्तेरनुपयोगात् गांगमुच्चारयेति भाषाशब्दानामनुकरणेसाधुतासंप्रति
पन्नेस्तेषांशक्त्यभावेनपरनयेलक्षणायाअसंभवाच्चेत्यभिप्रेत्य॥ ॥अज्ञातायाइति गंगापदस्यवस्तुनः स्वशक्यप्रवाहः
सामीप्यरूपसंबंधस्याग्रहेलक्ष्यार्थबोधस्यानुदयेनज्ञातायाएवतस्याः पदार्थोपस्थित्यौपयिकत्वेनप्रकृतेतदग्रहादुक्तानुपपत्ति
तदवस्थैवेतिभावः ननुशाब्दबोधाव्यवहितप्राक्कालेनादृशशक्तिग्रहासत्त्वेपिपदाकस्माच्चिज्ञाननादृशशक्तिग्रहादिनोद्बुद्धसंस्का
रेणपदार्थोपस्थितिद्वारातादृशशाब्दबोधोपपत्तिःसुकरेत्यतआह गांगमिति गोशब्दाद्यनुकरणेसाधुत्वस्यसर्वैरेवाभ्युपगमा
दित्यर्थ परनयइति परोनैयायिकस्तन्मतेतेषांशक्त्यभावेनतद्घटितलक्षणायाअप्यप्रसराद् निमन्त्वात्मकार्थवत्त्वनिबंधन
प्रातिपदिकत्वाद्यनुपपत्तिरितिभाव ॥

षोढापीति पूर्वोक्तपंचकसहितःशब्दोपीत्यर्थः कचिदनुकरणस्थले तच्चानुकरणंद्विविधम् ध्वनेर्वर्णस्यच तत्राद्यं पटत्करोतीत्यादि द्वितीयंभुवोवुगित्यादि भेदविवक्षेति पटदित्यादौध्वनिमयत्ववर्णमयत्वाभ्यांभुवोवुगित्यादावर्थपदार्थकत्वशब्दपदार्थकत्वाभ्यांनद्विवक्षेत्यर्थः शब्दार्थोपिप्रातिपदिकार्थइति तथाच मनोरनःस्वक्तसाम्नोरिति सूत्रे योसावाम्नायेऽस्यवामशब्दः पठ्यतेसञ्च प्रकृतेरस्यवामीयमित्यादौ पदार्थोऽतएव प्रातिपदिकत्वाच्छसिद्धिरितीतिभावः मूले अर्थेवभासतइति पाठेत्वर्थे यथादिस्वरूपे अवभासतेविशेषणतया विषयीभवतीत्यर्थः वस्तुतस्तु भूषणपर्य्यालोचनयाऽसावर्थोवभासतइतिपाठः

षोढापिकचित्प्रातिपदिकार्थइत्याह शब्दोपियदि भेदेन विवक्षास्यात्तदा तथा नोचेच्छ्रोत्रादिभिः सिद्धोप्यसावर्थोवभासते २६ यद्यनुकार्यानुकरणयोर्भेदविवक्षा तदा शब्दोपिप्रातिपदिकार्थः यदिनभेदविवक्षा तदा श्रोत्रादिभिरुपस्थितोप्यर्थवद्भासते अपिर्हेतौउपस्थितत्वाद्भासतइत्यर्थः अयंभावः॥ ॥तत्रवशब्दः सादृश्ये तथाचभेदपक्षे यथानुकार्य्यरूपोर्थो विशेष्यतया शाब्दबोधे भासते तथाऽभेदपक्षेऽनुकार्य्याभिन्नानुकरणशब्दोपीत्यर्थः तत्रानुपस्थितस्यकथंभानमित्याकांक्षायामुक्तं श्रोत्रादिभिरिति आदिनावृत्तिज्ञानजन्यसंस्कारसंग्रहइतिकेचित् वस्तुतस्तु तिप्याद्यनुसंहितस्य तस्य शाब्दे भानसंपत्तये आदीतिपदोपस्थितमेवशाब्दबोधे भासतइति तु सार्वत्रिक मितिभावः अतएव सारूतार्थवद्भासतेइतिनहितम् एतेनाभेदपक्षेऽनुकरणस्यार्थाभावेनतदंशेभानवर्णनमसंभवदुक्तिकमित्याशंकासमाहिता नन्वभेदपक्षेप्यनुकार्य्यस्यशाब्दे कथंभानम् पदवृत्तिजन्योपस्थित्यभावादतआह अयंभावइति॥ ९ ॥ ॥

पदाद्युपस्थितत्वादित्यस्य शाब्दबोधे भानानुपपत्तेरिति शेषः तत्सिद्धये शाब्दबोधजनकपदजन्योपस्थितये इत्यर्थः शक्तिरिति अर्थ
वदूस्य तत्स्मृत्यजनकत्वादिति शेषः तथा च पदस्मृतिज्ञानजन्योपस्थितिसत्त्वात्तस्य शाब्दविषयताप्रसंग इति अभेदेऽपि इति अभेदे तद्विव
क्षाभित्यर्थः तत्पक्षे निरूप्यनिरूपकत्वयोर्भेदनिबंधनत्वेनानुकरणे तद्व्यासंभवादिति भावः हेतुत्वादिति उपस्थितिनिष्ठजन्यत
तायामन्वेति स्वप्रत्यक्षेति अनुकरणप्रत्यक्षरूपामित्यर्थः शाब्दविषयतोपपत्तिरिति अयमाशयः अभेदपक्षे स्वप्रत्यक्ष
रूपामुपस्थितिमादाय यथा शाब्दे शब्दस्य भानं तथैव घटमानयेत्यादौ घटादिपदानामपि तां सामग्रीमादाय भानस्य दुर्वारतया

अनुकार्यानुकरणयोर्भेदेऽनुकार्यस्य पदाद्युपस्थितत्वात् तत्सिद्धये शक्तिरपेक्ष्या अभेदे प्रत्यक्षे विषयस्य हेतुत्वात्
स्वप्रत्यक्षरूपपदजन्योपस्थितिमादाय शाब्दबोधविषयतोपपत्तिरिति ॥ ११ शाब्दबोधमात्रस्य शब्दविषयकत्वसिद्धिः

ननूक्तं स्वरूपमिति सूत्रे भाष्येऽनेन हेतुना किं कारणम् शब्दपूर्वको ह्यर्थे संप्रत्ययः अतश्च शब्दपूर्वो योऽपि ह्यसौ नाम्ना हूयते नामा
चैतेन पदानोपलब्धं तदा पृच्छति किं भवान् आहेति शब्दपूर्वकश्चार्थस्य संप्रत्यय इह शास्त्रे शब्दे संभवादर्थस्य निवृत्तिरिति तत्र
शब्दपूर्वको हीत्यादिना शब्दस्मृतिज्ञानस्य पदार्थोपस्थित्याश्चान्वयव्यतिरेकौ प्रदर्श्य शब्दपूर्वकइत्यादिग्रंथेन प्रकाशनर
प्रदर्श्यते शब्दविशेषणक इत्यर्थः तेनार्थे संभवे ऽर्थो विशेषणतयोपस्थिते शब्दे कार्यमित्यर्थः तथा चोक्तभाष्यात् उद्देश्यतदर्थयो
रुभयोरेव शब्दाज्ज्ञानम् यश्च लोके शब्देतरपदार्थान्वयबाधस्तत्रार्थोऽपि शब्दस्य विशेषणतायत्नान्वये विप्रमुखरयाग्रे उद्धेगित्या
दीनत्र शब्दांशेऽर्थस्य विशेषणेतिस्पष्टप्रतिपत्तेर्विषयत्वमनाहत्येति भावप्रतीयाचेति ॥ ९ ॥ ९ ॥

वृत्तिज्ञान

अतिप्रसंगेति घटोस्तीत्यतः समवायेनैकज्ञानविषयत्वादिनैवोपस्थितस्याकाशादेः शाब्दे भानापत्तिवारणायेत्यर्थः
जन्येत्यर्थः पदोपस्थितिरिति घटपदं शृणोमित्यादौ तादृशपदोपस्थितेर्हेतुताया दर्शनात्प्रकृते च तदभावे तु करणस्य शाब्दवि-
षयत्वं दुर्घटमिति भावः आश्रयतयेति इदं च बोधकत्वं शक्तिरित्यभ्युपेत्य बोध्यत्वं सेति पक्षे तु निरूपकतयेति बोध्यम् नन्वा-
श्रयतासंसर्गेण वृत्तिमत्त्वस्यैव शाब्दबोधविषयत्वे तत्र त्वे निरूपकतासंसर्गेण वृत्तिमतः शाब्दे भानानुपपत्तिरत आह निरू-

यद्यप्यतिप्रसंगवारणाय वृत्तिजन्यपदोपस्थितिरेव हेतुः तथाप्यत्राश्रयतया वृत्तिमत्त्वस्य सत्त्वा-
त्तानुपपत्तिः निरूपकताश्रयतान्यतरसंबंधेन वृत्तिमत एव शाब्दबोधविषयत्वं कल्प्यत इत्यत
वद्यं संबंधस्योभयनिरूप्यत्वात् पदार्थस्यैव तद्बोधकत्वेन स्वस्यापि ज्ञानसंभवाच्चेति ॥ ८ ॥

पकतेति प्रामाणिकगौरवस्यादोषत्वादिति भावः अनवद्यमिति वृत्तिनिरूपकार्थबोधकत्वस्यैव प्रातिपदिकत्वे तंत्रत्वान्नाभे-
दपक्षे तत्संज्ञाप्रसक्तिरिति भावः ननु स्वप्रतियोगिकत्वविशिष्टसंबंधाश्रयतायाः स्वस्मिन्ननभ्युपगमेन कथमनुकरणस्य वृ-
त्तिमतेत्यत आह संबंधस्येति तद्बोधकत्वेनेति प्रत्यक्षात्मकशाब्दबोधजनकत्वेनेत्यर्थः तथा च हय्यादिवाक्यप्रामाण्यात्प्र-
कृते स्वस्मिन्नपि तादृशसंबंधाश्रयताभ्युपगमात्तत्तस्य शाब्दे भानानुपपत्तिरित्यनयैव रीत्या शब्दमात्रस्य शाब्दे भानं निर्वाह्यमिति

भावः स्वीयप्रत्यक्षात्मकबोधजनकत्वस्याव्यभिचारेणोपपादनम् शाब्दबोधजनकपदार्थोपस्थितिजनकज्ञानविषयतावच्छेदकस
धर्मवत्त्वात् नचैतादृशज्ञानेन शाब्दबोधात्मकशब्दरूपपदार्थोपस्थितिर्जन्यते नापि बोधकत्वेपि बोधकत्ववदिति ज्ञानेनेदानीम
शिष्येनसापिसंभाव्येतस्मात्कथमेतदिति चेत् अत्र वदन्ति संबंधस्येत्यादिग्रन्थस्य परस्य सुपस्थितेनार्थेन संबंधाविशेषात्त्वोप
तिस्ततः शब्दार्थयोरुभयोरपि शाब्दे भानसामग्रीसम्पत्तिप्रयोज्यत्वस्योपस्थितिद्वयेपसत्त्वादित्यर्थपरत्वान्नोक्तानुपपत्तिः नन्वर्थे
त्मनन्तरबोध्यत्वादिविशेषः तद्बोधकत्वेनेत्यत्र तदाऽव्यवहितप्रागुपस्थितार्थपदार्थपरामर्शोऽस्येवोचित्यादर्थबोधकत्वेनेत्
यात् तदुक्तं यत्सत्त्वासमरणात्र न तदव्यन्यहेतुकम् ...ड एव हि दृष्टः सत्त्वज्ञांसमारयितुं क्षम इति शाब्दबोधस्तु वक्ष्यमाण
प्यादिवाक्यप्रामाण्यं तत्स्य विलम्बेनैवाभ्युपगन्तव्यः अनुकार्यस्याभेदपक्षे मानाय प्रकारान्तरमेवानुसर्तव्यमिति परन्तु
वक्तमतेपदार्थोपस्थितेः शाब्दबोधहेतुतायां तदवच्छेदककोटौ तत्संबंधावच्छिन्नवृत्तिज्ञानजन्यत्वनिवेशावश्यकत्वेन
हृन्निवेशप्रवेशे गौरवम् अन्यतरत्वेन संबंधनिवेशेऽन्यतरत्वघटकभेदयोर्विशेष्यविशेषणभावे विनिगमनाविरहा
त्तन्नादवश्यमेव तदपेक्ष्याभेदपक्षे सादृश्यसम्बंधेनानुकरणादनुकार्योपस्थितिस्तथोपस्थितस्यापि तात्पर्यवशाच्छा
ब्दभाने वृत्तिज्ञानजन्यतावच्छेदककोटौ सादृश्यज्ञानाजन्यत्वनिवेशात्तद्धेतुतायां व्यभिचारः अत एव गवित्ययमाहेत्या
दौ न विभक्त्युत्पत्तिः सत्यार्थबोधकत्वरूपार्थवत्त्वाभावेन प्रातिपदिकत्वात् स्पष्टश्चायमर्थो मनोरमायाः सुकृतसाम्नोरित्यत्र
भाष्यस्थपदयोः ॥

स्वप्रतियोगिकत्वविशिष्टसंबंधस्यस्वस्मिन्सत्त्वात् तेजोदृष्टांतव्याजेनदर्शयन्सोक्तोहरिसंमतिमाह उक्तंचेति ग्राह्यत्वं बोध्यत्वंग्राहकत्वंबोधकत्वम् एते ग्राह्यत्वग्राहकत्वे पृथगवस्थितेइत्यनेननयोरसमनैयत्यंदर्शयति दीपादिरूपतेजसोविषयसन्निधानेशक्तिद्वयंलोकेप्रत्यक्षसिद्धंतदसमवधानेतुग्राह्यत्वमेवयथातथाशब्दानामर्थाबाधेउक्तशक्तिद्वयम् तद्बाधेतुग्राह्यत्वमेवेतितदर्थः स्वरूपमितिसूत्रभाष्यादप्युक्तार्थस्यैवलाभादितितस्यैवपर्यायांतरमाह विषयत्वमिति स्वस्वविषयतानसंपाद्यश

उक्तंचवाक्यपदीये ग्राह्यत्वंग्राहकत्वंचद्वेशक्तीतेजसोयथा तथैवसर्वशब्दाना
मेतेपृथगवस्थितेइति विषयत्वमनादृत्यशब्दैर्नार्थः प्रकाश्यतेइतिचेति॥ ५५॥

द्वैरर्थोनबोध्यतइत्यर्थः स्वजन्यार्थबोधत्वस्यस्वविषयकत्वव्याप्यत्वादितियावत् अयंभावः शब्दार्थयोरभेदमतेतन्मूलकाध्यासात्शब्दादर्थोकारस्तोजायमानायांशब्देनापितस्यांस्वाकारसमर्पणमितिशाब्दबोधस्यशब्दविषयकत्वसिद्धिरितिमन्वदंति नसोस्तिप्रत्ययोलोकइत्युक्तत्वात्किंबोधत्वावच्छेदेनशब्दविषयकत्वप्रतिज्ञायतेउतग्राह्यत्वमितिपद्यद्वयाच्छब्दत्वावच्छेदेनतत्त्वं किंवाशब्दत्वसामानाधिकरण्येननाद्यः घटादिप्रत्यक्षाव्यवहितप्राक्क्षणेघटादिपदोपस्थितेरनैय

त्येनतादृशप्रत्यक्षस्य घटादिपदविषयकत्वासंभवात् एवं घटाद्यनुमितावपि तज्ज्ञानेनासंभवति व्यापकतयातदवच्छेदकतया
साध्याभिमतेतदभानात् तदनंतरं घटपदं साक्षात्करोमि घटपदमनुमिनोमीत्यनुव्यवसायाभावाच्च न द्वितीयः घटपदज्ञानजन्योपः
स्थिते तद्वाचकपदेऽभावेन तस्य शाब्दविषयत्वासंभवात् पदज्ञानस्य संबंधिज्ञानविधयार्थस्मारकत्वेन हस्तिपकदर्शनज
न्यहस्त्युपस्थितौ हस्तिपकस्येव तज्जन्यार्थोपस्थितावुद्बोधकतावच्छेदकपदस्य विषयत्वासंभवाच्च घटो न घट इति सार्व
जनीनप्रतीत्या शब्दार्थयोस्तादात्म्यमानाभावेन नाथीकारस्तेः शब्दाकारतासंभवोपि घटशाब्दबोधानंतरं घटपदं शाब्दया
मीति प्रतीतेः सार्वजनीनत्वे क्षण विलंबं सहिष्णुनासंभवेदपि न च तस्य सत्वमितिनकिंचिदेतत् अपि च भिन्ने विषये
नुमितिसामग्र्या बलवत्तायत्र तादृशानुमितिसामग्री का सेकेवल पदत्व विशिष्ट विषयिका शाब्दधीर्जायतामितीच्छा बलाद्
दशाब्दधीस्तत्र घटाशेन ज्ञानं दृष्टपदमेव घटशाब्दं शाब्देच्छा विरह विशिष्ट भिन्न विषयकानुमितिसामग्र्या प्रतिबंधि
कायाः सत्वात् नापितृतीयः सिद्धसाधनात् विस्तरस्तु चारयेत्यादौ विप्रवादिपदानां लक्षणया शाब्दविषयतायाः परैरभ्युपगः
मात् उक्तभाष्यादपि कचिच्छाब्दबोधे शब्दो विषय इत्यर्थस्येव लाभात् सतिनात्पर्यं कचिदन्यत्रापि विशेष्याशे तज्ज्ञानाभ्युपः
मेक्षति विरहाच्च अत एव नलादीनां विशिष्य तत्तद्रूपेणानुपस्थितत्वेपि नलपदवाच्य कश्चिदासीदिति सामान्यशक्तिग्रहात
त्पदवाच्यत्वेन तेषां बोधः प्राचीनसंमतउपपद्यते अभेदे शब्दमात्रं तु परेत्विन्नुक्तभाष्यसंमतमतेनैव अत एव तस्मादवि
कृतस्येव बोधः हरिवचनानि तु प्रणवब्रह्मणोरभेदोपासनप्रयुक्तातिशयबोधकानि भवंतीति नतैर्व्यासहारिकार्थस्य सिद्धिः
तस्माच्छाब्दबोधमात्रस्य शब्दविषयकत्वं न विचारसहमधिकमग्रे व्यक्तीभविष्यतीति ॥ ९ ॥ ५ ॥

प्रत्ययानामिति व्युत्पत्तेरेकार्थीभाववादिमतेसत्त्वेपिनास्मन्मतेसासार्वत्रिकीसमासएवासंभवात् किंतुप्रकृतेव्युत्पत्त्यंतरमेवकल्प्येदित्यभिप्रेत्याहाथेति अक्लृप्तकल्पनामिति समस्यमानपदार्थविषयतानिरूपितविषयतासंबंधेनशाब्दंप्रतिविशेष्यतासंबंधेनप्रत्ययजन्योपस्थितेःकारणत्वांतरकल्पनामित्यर्थः ननुप्रत्ययानांसन्निहितपदार्थगतस्वार्थबोधकत्वरूपाव्याससमाससाधारण्येकेवव्युत्पत्तिःसन्निहितत्वंचप्रकृतिघटकत्वेसतिप्राग्वर्तित्वमितिनोक्तदूषणमतआह दिगिति तथाकल्पनेचोक्तव्युत्पत्त्यपेक्ष

अथसमस्यमानपदार्थगतस्वार्थबोधकत्वंसमासोत्तरविभक्तेःकल्प्यतेइतिचेन्न अक्लृप्तकल्पनांक्लृप्तव्युत्पत्तित्यागंचापेक्ष्यसमुदायशक्तिकल्पनस्यैवयुक्तत्वादितिदिक् अपिचसमासेविशिष्टशक्त्यस्वीकारेराजपुरुषश्चित्रगुर्नीलोत्पलमित्यादौसर्वत्रानन्वयप्रसंगः राजपदादेःसंबंधिनिलक्षणायामपितंडुलःपचतीत्यादौकर्मत्वादिसंसर्गेणतंडुलादेःपाकादावन्वयवारणायप्रातिपदिकार्थप्रकारकबोधंप्रतिविभक्तिजन्योपस्थितेर्हेतुतायाआवश्यकत्वात्पुरुषादेस्तथात्वाभा

यापदत्वस्यप्रकृतित्वघटितस्यव्युत्पत्तौनिवेशेगौरवमित्यादिदिगर्थः ननुप्रत्ययानामितिव्युत्पत्तेःप्रकृतिप्रत्ययघटिततयातत्रप्रकृतित्वप्रत्ययत्वयोरनुगतयोर्दुर्वचत्वेनतत्तद्व्यक्तिभेदेनकार्यकारणभावोवाच्यस्तथाचसमासस्थलेसमस्यमानपदार्थस्यप्रत्ययार्थान्वयाभ्युपगमेबाधकाभावोऽतआहापिचेति अनन्वयप्रसंगइति नामार्थयोरितिव्युत्पत्तेरितिभावः अनन्वयमेवाहराजपदादेरितिलक्षणायामपीत्यपिनासंबंधलक्षणायांनितरामन्वयाभावःसूच्यते॥ छ ॥ छ ॥ छ ॥ ॥

०भू० तचोक्तव्युत्पत्तेस्तण्डुलः शुभ्र इत्यादौ व्यभिचारो तस्मात् तंडुलः शुभ्र इति अभेदे नैवान्वय इति तथा च तण्डुलान्वयिनि प्रातिपदिकार्थे
०वृ० विभक्तिजन्योपस्थितेः सत्त्वान्नात्र व्यभिचार इति भावः शुभ्रेण तंडुलेनेत्यादौ व्यभिचारमाशंक्य निराचष्टे अभेदार्थिकेति अथवा
१३१ इदं च न समानाधिकरणभीष्मादिभ्यो द्वितीयादिविभक्तेरनभिहितसूत्रे भाष्यकृताभिधानात् सामानाधिकरण्यसमानाधिकरणयो
र्विशेष्यविशेषणयोर्नीलस्याभेदस्य विशेषणपदोत्तरविभक्त्यर्थत्वलाभात् तथापि शुभ्रेणेति तृतीयाजन्याभेदोपस्थितिसत्त्वान्न व्यभि-
चार इति भावः नन्वन्वयदि भेदत्वावच्छिन्नाभावस्तदा प्रसिद्धभेदस्य केवलान्वयित्वात् यदि भेदप्रतियोगिकाभावस्तदानीलो

तण्डुलः शुभ्र इत्यादौ च प्रातिपदिकार्थकमथमार्थे तण्डुलादेस्तस्य च शुभ्रत्वे भेदे नैवान्वयः शुभ्रेण तण्डुलेनेत्यादौ च
विशेषणविभक्तेरभेदार्थोपस्थितिकोवान्वय इति नातिप्रसङ्गः तथा च समासे परस्परमन्वयासम्भवाद्बहुव्रीहौ के
वलसमुदायस्य तादृशे विशिष्टार्थे शक्तिः किं च राजपुरुष इत्यादौ सम्बन्धिनि सम्बन्धे वा लक्षणानावः ॥ ९ ॥ ॥

वह्निरिति वाक्यस्याप्रामाण्यापत्तिर्हिन्त्वादिना नीलभेदाभावस्य वह्नौ सत्त्वात् विशेषणविभक्त्यर्थैकदेशे भेदे प्रकृत्यर्थस्यानन्वयाप-
त्तिश्च नन्वभेदेऽभावे च द्वितीयादेः शक्तिः भेदे च प्रकृत्यर्थस्य प्रकृत्यर्थतावच्छेदकावच्छिन्नप्रतियोगिताकत्वेनान्वयः उक्तसंब
न्धेन प्रकृत्यर्थविशिष्टभेदस्य तु तत्त्वावच्छिन्नप्रतियोगिताकत्वेनाभावेऽन्वयोपगमान्नोक्तापत्त्यादिरिति वाच्यम् प्रमेयो घट इत्यादौ एम
प्रमेयत्वावच्छिन्नभेदाप्रसिद्धोक्तप्रकारासम्भवात् नीलघटादिपरनीलपदघटितनीलो घट इति वाक्यस्याप्रामाण्यापत्तेश्च १३१

नीलत्वादिना नीलभेदाभावस्य घटेऽबाधात् नेत्थं तद्यक्तित्वावच्छिन्नाभेद एव विभक्त्यर्थः तथा सत्यपूर्वव्यक्तिनिष्ठतद्यक्तित्वस्य भाना
संभवेन तदवच्छिन्नप्रतियोगिताकाभावे शक्तिग्रहासंभवेनापूर्वव्यक्त्यभेदान्वयानुपपत्तेः अभावबुद्धेर्विशिष्टवैशिष्ट्यावगाहित्वा
नुपपत्त्या एकधर्मावच्छिन्नप्रतियोगिताकाभावेऽपरधर्मावच्छिन्नप्रतियोगितायाः संबंधतया भानासंभवाच्चेति चेन्न अभेदस्तादात्म्यं
तच्च स्ववृत्त्यसाधारणो धर्मः असाधारण्यं च स्वप्रतियोगिवृत्तित्वस्य सामानाधिकरण्योभयसंबंधेन भेदविशिष्टं यत्तदन्यत्वमित्येक
मात्रवृत्तिधर्म एव प्रवृत्तोऽस्तु तस्मिन्नाधेयतया प्रकृत्यर्थान्वयः अपूर्वव्यक्तिनिष्ठतद्यक्तित्वस्य विशिष्यस्यस्थितुमशक्यत्वेप्येकमा
त्रधर्मत्वेन सामान्यप्रत्यासत्त्या सुग्रहात्सर्वं सुस्थमिति पार्ष्णिका इति शाब्दबोधोत्तरकालिक इत्यर्थः अन्वय इति तद्बोध इत्यर्थः अह
णाधिकरणरीत्या सर्वेषां विभक्त्यर्थानां प्रथमं क्रियायामेवान्वयेन तत्र सुप्त्यादिपदार्थान्वये विभक्तिजन्योपस्थितिसत्त्वात्तत्पक्षेपि
नोक्तव्युत्पत्तेर्व्यभिचार इति भावः ननु नामार्थयोरिति व्युत्पत्ते राजपुरुषस्तंडुलः पचतीत्यादौ राज्ञः स्वस्वामिभावसंबंधेन पुरुषे
तंडुलस्य कर्मतासंबंधेन धात्वर्थपाकेऽन्वयवारणायावश्यकत्वेपि तत्र राजपुरुषस्तोकं पचतीत्यत्राभेदसंबंधेनान्वयाद्व्यभिचार
वारणायाभेदातिरिक्तसंबंधावच्छिन्नत्वं नामार्थनिष्ठप्रकारतायां निवेशनीयं च विशेषणविभक्तेरभेदार्थकतया निर्वाहः कट एव क
र्मेति भाष्यव्याख्यावसरे भीष्मादीनां स्वयमकर्मकत्वेपि विशेष्यसंबंधिविभक्त्यैव भीष्मादिपदोत्तरं भवितव्यम् तदेकयोगक्षेमत्वात्केव
लानां च प्रातिपदिकानां प्रत्ययः परश्चेति नियमेन प्रयोगानर्हत्वात् पश्येश्वरसुहृदः स्वयं निर्धना अपि तदीयधनेनैव तत्फलभाज एवं
वं गुणा अपीत्यनभिहितसूत्रे वदता कैयटेन विशेषणविभक्तेः साधुत्वमात्रार्थकत्वं स्पष्टमेवोक्तं विभक्त्यर्थे प्रातिपदिकार्थविशेष्यक पुरु
षादिप्रकारकबोधस्याननुभवाच्च अत एव व्युत्पत्तौ भेदेनेति पठ्यते तथा च तत्पक्षे लक्ष्यार्थराजसंबंधिनः पुरुषादावन्वयो नानुपपन्नो

संबंधलक्षणाकल्पं दूषयति नान्यदिति नीलोत्पलादिसमाससंग्रहाय समानविभक्तिकेत्यपहायोक्तम् विरुद्धविभक्तिरहितेति विरुद्धविभक्तिकधातुप्रातिपदिकार्थयोः स्तोकं पचतीत्यादावभेदान्वयदर्शनादाह प्रातिपदिकार्थयोरिति तथा चाभेदसंसर्गावच्छिन्नप्रातिपदिकार्थनिष्ठप्रकारतानिरूपितविशेष्यतासंबंधेन शाब्दबुद्धिं प्रति विरुद्धविभक्तिरहितपदजन्योपस्थितेर्हेतुतया न स्याद्राजपुरुष इत्यादिसमासो नरपदार्थपुरुषादौ सत्त्वादभेदान्वयो दुर्वार इति भावः ननु विरुद्धविभक्तिराहित्यं व्याससमाससाधारणं न विशेष्यवाचक

नान्यः राजसंबंधरूपः पुरुष इति बोधप्रसंगात् विरुद्धविभक्तिरहितप्रातिपदिकार्थयोरभेदान्वयव्युत्पत्तेरित्यादिप्रपंचितं भूषणे॥ ९ ॥

पदस्य विशेषणवाचकपदाप्रकृतिकविभक्त्यप्रकृतित्वं नीलघटमानयेत्यादावभावात् नापि विशेषणवाचकपदस्य विशेष्यवाचकपदाप्रकृतिकविभक्तिप्रकृतित्वं विशेष्यपदाप्रकृतिकत्वस्य तदुत्तरत्वस्य तदुत्तरत्वेनाप्रतिसंधीयमानत्वस्य वा नीलो घट इत्यादौ नीलपदोत्तरविभक्तौ च घटादिपदोत्तरविभक्तिभिन्नायां सत्त्वेन तत्राभेदान्वयानुपपत्तेरिति चेत् अत्र केचित् विशेषण

मीमांसकैरपि विशिष्टशक्तिपक्षोऽभ्युपेय इत्याह अत एवेति समासे एकार्थीभावस्य सर्वसंमतत्वादेवेत्यर्थः भक्षमुद्दिश्येति ऋत्विजो ह
विः शेषान् भक्षयन्तीति विहितभक्षणमनूद्येत्यर्थः एकप्रसरताभंगापत्तेरिति उद्देश्यविधेयभावेनान्वये पृथगुपस्थितेर्नियामकत्वे
ननदनुरोधेन तदभ्युपगमे विशिष्टार्थोपस्थितिजनकत्वरूपैकप्रसरताभंगापत्तेरित्यर्थः नैर्विशिष्टशक्त्यनभ्युपगमेऽपि विशिष्टलक्ष
णाया अभ्युपगमेनैकप्रसरतायास्तन्मते सिद्धत्वात् न चोद्देश्यतयान्वये पञ्चत्वयोगप्राथम्यादीनां विधेयतयान्वये च तच्छुत्वयोगादीनां

अत एव वषट्कर्तुः प्रथमभक्ष इत्यत्र भक्ष्यमुद्दिश्य प्राथम्यविधानं युक्तम् एकप्रसरताभंगापत्तेरिति तृतीये [illegible]गैः स्वि
ष्टकृतं यजतीत्यत्रांगानुवादेन तन्त्रित्वविधानं युक्तम् एकप्रसरताभंगापत्तेरिति दशमे च निरूपितं संगच्छते संगच्छते चाह
णाधिकरणारंभः अन्यथाऽरुणया एकहायन्या पिंगाक्ष्या सोमं क्रीणातीत्यत्रारुण्यपदवदितरयोरपि एकाब्दत्वादिगुणमा
त्रवाचकतया मूर्तत्वात् क्रीणातीकरणत्वासम्भवस्य तुल्यत्वादारुण्यस्येव वाक्याद्भेदशङ्काया असम्भवादिति प्रप
ञ्चितं भूषणे तस्मात्समासशक्तिपक्षो जैमिनीयैरवश्यमभ्युपेय इत्यास्तां विस्तरः ३३॥ ११ तं नन यातननतद्भावात्कथं तदापादनमि

तिवाच्यम् सति तात्पर्ये प्रथमो भक्षः पंडितो ब्राह्मण इत्यादावुद्देश्यविधेयभावे नञुद्देशानुभविकतया पञ्चत्वयोगादीनां प्राथिकत्वा
न् मादृशं शाब्दबोधे समस्तपदजन्योपस्थितेर्हेतुतानुनदामोदरः पूज्यो राजपुरुषः सुंदर इत्यादि न लभ्यावोधानुपपत्तेस्तत्र च प्रा
थम्यविशिष्टं भक्षणानन्तरमेव विधीयते शब्दरत्या तत्स्वप्राप्ताप्राप्तविवेकेन प्राथम्यविधिः पर्यवस्यतीति सिद्धान्तादिति भावः अ
ङ्गैरिति नत्रहीज्याशेषभूतत्रित्वविशिष्टयत्किंचिदंगविधानं किंवा त्रित्वविशिष्टाशेषांगविधानमिति संशये प्रकृतादिज्याशेषेण

पुरोडाशेन स्विष्टकृते हुतत्वात्तस्यापि शेषभूतत्वविशिष्टगौरवं स्विष्टकृद्वचनं युक्तमिति पूर्वपक्षे शेषभूतानि कानिचिदंगान्यनूद्य नित्यवि
धाने एकप्रसरताभंगापत्तिस्तस्मात्स्विष्टकृत्सूत्रोक्तनित्यविशिष्टांगान्तरविधानमिति निर्णीतं तृतीयाध्यायस्य तृतीये पादे इत्यर्थः कल्पसूत्रोक्ता
नि हृदयाद्येकादशांगानि तु हृदय १ जिह्वा २ वक्षो ३ यकृत् ४ वृक्कौ ६ सव्यदो ७ उभये पार्श्वे ९ दक्षिणा श्रोणी १० गुद ११ मिति तत्र श्रोणिद
क्षिणा सव्या श्रोणी गुदं तृतीयमिति ननु एकप्रसरत्वं न विशिष्टार्थोपस्थितिजनकत्वम् किंतु समासघटकपदयोरुद्देश्यविधेयभावे
नान्वयाबोधकत्वमिति स्वमतसङ्गापत्तेरिति तदर्थः ननु विशिष्टार्थोपस्थितिजनकत्वं भंगापत्तेरिति तादृशत्वस्य निषेधे तु समा
सघटकपदार्थनिष्ठविधेयतानिरूपितोद्देश्यतासंबंधेन शाब्दबुद्धिं प्रति समासघटकपदजन्योपस्थितिः प्रतिबंधिकेति न च तादृश
प्रतिबध्यप्रतिबंधकभावकल्पने गौरवमिति वाच्यम् सर्वत्र विशिष्टशक्तिकल्पनापेक्षया क्लृप्ति[illegible]तत्प्रतिबंधकभावकल्पने
एव लाघवात् वस्तुतस्तु उद्देश्यविधेयभावेनान्वयबोधं प्रति तत्पदार्थोपस्थितिसमकालमेव हि तत्तदानुपूर्वीविरहादेव तथान्वयासंभ
वान्नोक्तप्रतिबध्यप्रतिबंधककल्पनापि एकप्रसरता तु प्रथमपदार्थान्वितमस्य विशेष्यकबोधानुभव एवेति जैमिनीयाः मीमांसकैर्वि
शिष्टशक्तिरभ्युपेयेत्यत आह संगच्छते चेति वाक्यभेदेति न च तस्य वाक्यभेदेन प्रकारेण निवेशोपि संभवति अमूर्तत्वेन क्रियाभिः कार
कत्वेन द्रव्यैः समं संबंधासंभवात् न च तृतीयया ज्योतिष्टोमकरणीभूतप्राकरणिकद्रव्याण्यनूद्य यत्र तद्व्यंशस्य एव गणकेनेति
परिच्छेदकत्वेन तदन्वयो नासंभावित इति वाच्यम् तथा सति शक्तिकारकमिति सिद्धांतभंगापत्तेरित्यपि बोध्यम् उपसंहरति त
स्मादिति जैमिनीयैरित्यादिना नैयायिकमतस्य युक्तत्वं ध्वन्यते॥

समानार्थत्वानुरोधादिति समानार्थत्वं च व्याससमासयोः समानविशेष्यप्रकारकबोधजनकत्वं तदनुरोधादित्यर्थः उक्तविग्रहवाक्यांतर्गतराजशब्दस्य संबंधिनि लाक्षणिकत्वान्न विग्रहत्वक्षतिः संबंधार्थकषष्ठ्यंतस्य तु संबंधप्रकारकबोधजनकत्वान्न विग्रहत्वमेवं चित्रागावो यस्येत्यादेरपीत्याशयं प्रकाशयति यद्यपीत्यादि मीमांसकाद्यत्यं तेन सूत्राल्लभ्यत इति तेन हि शे

राजपुरुष इत्यादौ राजा चासौ पुरुष इत्येव विग्रहः चित्रगुरित्यादौ चित्राणां गवामयं मित्येव समानार्थत्वानुरोधात् यद्यपि प्रथमांतानामेव बहुव्रीहिरिति शेषो बहुव्रीहिरिति सूत्राल्लभ्यते प्रथमांतपक्षे वाक्यं चित्रागावो यस्येत्येवं संभवत्येव षष्ठीति समासं विधानात् राज्ञः पुरुष इति च पक्षे वाक्यम् तथापि तस्य न विग्रहत्वम् भिन्नार्थत्वात् किं तूक्तस्यैवेति मीमांसकास्तान् प्रसङ्गान्निरस्यति॥

षो बहुव्रीहिरित्यधिकारात्प्रथमांत्रिकस्य द्वितीयाश्रितेत्यादिनानुक्तस्य समासो विधीयते यद्यपि विशेषणं विशेष्येणेत्यादिना तस्यापि समास उक्त एव तथापि नासौ प्रथमाशब्देनोल्लिखित इति तत्रिकस्य शेषत्वमविकलमिति भावः उक्तस्यैवेति चित्राणां गवामयमित्यादेरेवेत्यर्थः एवकारेण प्रथमांतचित्रादिपदघटितस्य व्यवच्छेदः॥

उपदर्शकपदस्य विवरणमर्थबोधकमिति आख्यातं तिङं नन्वतिङ तद्धिते विवरणे इत्यर्थः व्यत्यासमेवाह तथाहीत्यादि ननु तत्रापि
य कर्त्तृतक्षकतयाऽक्षकरणव्यापाराश्रय इति बोधात्समानार्थकत्वभंगोऽत आह कृत्प्रत्यये इति कारकाणां कर्त्रादीनां प्राधान्य

आख्यातं तद्धितकृतोर्यत्किंचिदुपदर्शकम् गुणप्रधानभावादौ तत्र दृष्टो विपर्ययः २६ तद्धितकृ
तोर्यत्किंचिदर्थबोधकं विवरणमाख्यातं तत्र विपर्ययो दृष्टः तथाहि आक्षिकः कुम्भकार इत्यत्र अ
क्षकरणकव्यापाराश्रयः कुम्भानुकूलव्यापाराश्रय इति बोध अक्षैर्दीव्यति कुम्भं करोतीत्यत्राक्षकर
णकदेवनानुकूला भावना कुम्भोत्पत्त्यनुकूला भावनेति बोधः कृत्प्रत्यये कारकाणामाख्याते भावना
या प्राधान्यं वक्तो मीमांसकस्यापि गुणप्रधानभावव्यत्यासो न विवरणत्वबाधक इति नात्रा
पाक्षिकस्य चिन्त्यागावो यस्येत्यादेर्विग्रहत्वे बाधकमस्तीति भाव ॥ २६ ॥ ६ ॥ ६० ॥

मुख्यविशेष्यत्वम् कारकाणामप्राधान्यं प्रकृतिप्रत्ययार्थयोरिति न्यायेन भावनायाश्च प्राधान्यमाख्यातमिति निरुक्तादिभि

शक्तिमत्त्वाविशेषादिति शक्तिमत्त्वमेकार्थीभावः सिद्धांतसिद्धिरिति सिद्धांतस्य मीमांसितार्थस्य सिद्धिरनुष्ठानोपयोगार्हत्वमि त्यर्थः तथाहि निषादस्थपतिं याजयेदिति श्रूयते तत्र निषादस्थपतिशब्दः किं षष्ठीतत्पुरुषो बहुव्रीहिर्वोत कर्मधारय इ ति संशये कर्मधारये ऽपूर्वविद्याध्ययनकल्पनागौरवाद्बहुव्रीहौ वाक्यलक्षणायां गौरवाल्लाघवात् षष्ठीतत्पुरुष एवेति

नन्वस्तु कारीत्या सर्वत्र समासे शक्तिरस्तु च तथाविग्रहस्तथापि षष्ठीतत्पुरुषकर्मधारययोः शक्तिमत्त्वाविशे षान्निषादस्थपतौ त्वधिकरणसिद्धांतसिद्धिर्न स्यादित्यत आह पर्यवस्यच्छाब्दबोधाविदूरप्राक्क्षणस्थि ते शक्तिग्रहेन्तरंगत्वबहिरंगत्वचिंतनम् ३५ पर्यवस्यंश्चासौ शाब्दबोधश्च तस्माद विदूरश्चासौ प्राक् क्षणश्च तदानींतनलाघवमादायाधिकरणाविरोध इत्यर्थः अयं भावः॥

पूर्वपक्षे तत्पुरुषस्यापि पूर्वपदलाक्षणिकतया कर्मधारयापेक्षया गौरवाल्लाघवात्कर्मधारय एवापूर्वविद्याध्ययनस्योत्तर कालकल्प्यत्वेन तादृशगौरवस्य फलमुखतया ऽदोषत्वादिति सिद्धांतितम् तद्विरुध्येत भवन्मते तत्पुरुषस्वीकारेपि गौरवान वकाशादिति भावः तदानींतनेति तादृशवाक्यजन्यशाब्दबोधाव्यवहितप्राक्क्षणवृत्तिशक्तिग्रहनिष्ठांतरंगबहिरंगभाव चिंतनप्रयुक्तलाघवमादायेत्यर्थः तदेव विशदयति अयं भाव इति॥ ३॥

निषादरूपइति स्थपतावित्यनेनान्वितम् निषादानामिति निषादसंबंधिस्थपताविन्यर्थः तत्र षष्ठ्यर्थसंबंधांतर्भावेणैकार्थीभावाभ्युपगमात् निषादस्वामिकइति स्थपतिशब्दस्यसामर्थ्यकतया निषादभिन्नस्वामिके पुंसीत्यर्थः तत्रान्यपदार्थांत र्भावेण समुदायशक्तिस्वीकारात् नानार्थइत्यस्यचर्च्यानेकार्थोपस्थितौ नानार्थामितिशेषः न्यायेनेत्यस्य कतात्पर्य्यमितिसंदेहे सतितत्कल्पनायांतात्पर्य्यकल्पनायांपूर्वोपस्थितएवेतिसमासघटकप्रत्येकपदशक्त्युपस्थापितार्थमात्रविषयककर्मधारयीयशक्तिग्रहस्यांतरंगत्वेनप्रथमोप

निषादस्थपतिपदस्यसमासशक्तिपक्षे निषादरूपे निषादानांचस्थपतौ निषादस्वामिके पुरुषान्तरे चेत्येवंसर्वत्र शक्त्यानानार्थत्वम् तथाचनानार्थेतात्पर्याद्विशेषावगतिरिति न्यायेन तत्कल्पनायांपदद्वयेन पूर्वोपस्थितार्थ एवोपस्थित्यादिलाघवात्तत्कल्प्यत इति परेषामपिसतितात्पर्य्ये षष्ठीः प्रवेशयेतिवल्लक्षणायादुर्वारत्वात् तात्पर्यमेवकल्प्यकोटावव शिष्यत इति दिक् २५ ॥ ॥ इति श्रीवैयाकरणभूषणसारे समासशक्तिनिरूपणम् ॥

१) स्थितार्थएवोप

स्थितिर्लाघवान्निषादस्थपतिशब्दस्यतात्पर्य्यमवसीयतेनेनविशेषावगतिः नतुसकृद्भूतपदार्थविषयकशक्तिग्रहोपस्थापिते तदुपस्थितेर्विलंबितत्वादित्यस्यइत्यार्थः निरूढव्यपेक्षासामर्थ्यमूलत्वं निर्भेतमित्यर्थे इदमपिप्रमाणम् अन्याय्याजहत्स्वार्थेति पक्षेपदानामानर्थक्यात् प्रत्येकपदवृत्त्यार्थोपस्थितेरसंभवेनतत्तन्मूलकशक्तिग्रह इति तस्यांतरंगत्वमक

थनमसंगतमेवस्यादितिबोध्यम् तत् तात्पर्य्यं कल्प्यते अवधार्य्यते नतुसंयोगोविप्रयोगश्चेत्यादिनाहहरिणासंयोगादीनांविशेषाव
गतिहेतुत्वंबोध्यतेतत्कथंतात्पर्यस्यविशेषावगतिहेतुत्वमितिचेन्न नानाशक्त्युपस्थितानेकेषुसंयोगादनेकस्मिन्नवधारितेतात्पर्य्य
विशेषावगतिरितिशब्दार्थस्यानवच्छेदइतिभावार्थस्यवक्ष्यमाणत्वात्संयोगादीनांतात्पर्य्यग्राहकतायामेवोपयोगेनतात्पर्य्यस्यविशे
षावगतिहेतुत्वंसर्वसंमतमेवेतिभावः ननुप्रत्येकपदवृत्तिपक्षेऽनायासेनैवाधिकरणसिद्धांतोपपत्तौविशिष्टशक्तिपक्षेतादृशसि
द्धांतसमर्थनेक्लेशोदुष्परिहरएवेत्यतआह परेषामपीति प्रवेशयेतिवदिति तात्पर्य्यस्यैवलक्षणानियामकतयातत्सत्त्वेवाक्यलक्ष
णयासमासांतरबोधस्यदुर्वारतयातात्पर्य्याभावेनैवतदवगतेर्वारणीयत्वादित्यर्थः ननुनिषादस्थपतिं याजयेदित्यत्रस्थपतिशब्
दः स्वामिपर्य्यायः श्रेष्ठपर्यायोवा उभयथाप्यसौगुणवचनः तस्यचजातिवचननिषादपदेनकर्मधारयेतत्रगुणवचनस्यैवपूर्वनि
पातनियमेनस्थपतिनिषादमितिप्रसज्येतनतुनिषादस्थपतिमितिस्यात् किंचोभयथापिस्थपतिशब्दार्थस्यनित्यसंबंधिसापे
क्षत्वेनषष्ठीसमासएवन्याय्योनतुकर्मधारयइतिकथमुक्तसिद्धांतसंगतिः प्रकृतेपीत्यतआह दिगिति तदर्थस्त्वतएवास्वरसाच्चिं
गदर्शनाच्चेतिसूत्रंहेत्वंतरोपसंग्राहकंप्रणीतंमहर्षिणा तच्चशबरस्वामिनाकूटंहिनिषादानामेवोपकारकंनार्थासंगमनमेवंचत
न्निषादानामेव स्वमिति भाष्येव्याख्यातं तथाचकूटदक्षिणालिंगात्कर्मधारयत्वेनिर्णीतेस्थपतिशब्दस्यराजदंतादित्वात्परनिपा
तोबोध्यः संबंधाकांक्षानिवृत्तिरप्यर्थतोनिषादानांस्वत्वलाभादुपपद्यते एवंलाघवादिविचारस्तुकथंचित्संभवमात्रेणेतिसर्वमन
वद्यम् इतिभूषणसारदर्पणेसमासशक्तिनिरूपणम् ॥

कल्प्यते सा च गंगापदशक्यसामीप्यरूपैव तेन रूपेण गृह्यमाणा तीरं स्मारयत्यनुभावयति च शक्यादशक्योपस्थितिस्तु न लक्षणाऽउप
स्थितिहेतोस्तस्यास्तत्त्वासंभवात् नापि स्वबोध्यसंबंधः समासशक्तिनिरूपणोक्तयुक्तेः नन्वीश्वरेच्छायाः शक्तित्वासंभवात् घटपदस्या
पि पटे शक्तत्वप्रसंगात् घटपदात् पटो बोद्धव्य इतीच्छायाविषयतया पटेऽपि सत्त्वात् यदि चेश्वरेच्छीयघटपदजन्यबोधविषयत्वप्रका
रतानिरूपितविशेष्यत्वं शक्तिरिति न पटे पदेऽतिप्रसंगः तद्विषयत्वेऽपि तादृशविषयत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वस्य तत्रानभ्यु
पगमादित्युच्यते तदापि गंगापदात्तीरबोधस्यापि जायमानत्वेन सत्त्वात्तद्विषयकेश्वरेच्छीयगंगापदजन्यबोधविषयत्वप्रकारतानि
रूपितविशेष्यत्वस्य तीरे सत्त्वाच्छक्त्यैव निर्वाहे कृतं लक्षणयेति चेन्न गंगापदवाच्यत्वव्यवहारस्य तीरादावसत्त्वेन गंगापदजन्यबोध
विषयतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यत्वसंबंधेनेश्वरेच्छीयगंगादिपदानां प्रवाहादौ शक्तिस्तीरनिष्ठविशेष्यतायाश्च गंगा
दिपदजन्यबोधविषयत्वप्रकारतानिरूप्यत्वेऽपि न तस्मात्तादृशविषयतात्वेन तादृशप्रकारतानिरूपितत्वमपि तु शुद्धविषयतात्वेनै
वेत्यभ्युपगमान्न तया लक्षणान्यथासिद्धिर्नापि विषयत्वलक्षणसंबंधस्य पदे जन्यजनकभावे च सत्त्वेऽपि तत्रातिप्रसंगः तत्र लक्ष्योप
स्थितिनियामकः सादृश्यात्मकः संबंधो गौणी तदतिरिक्तस्तु शुद्धलक्षणेति व्यवह्रियते शुद्धाप्युपादानलक्षणभेदेन द्विविधा तत्र मु
ख्यसंसृष्टान्यार्थोपस्थापकत्वमुपादानत्वम् शक्याविषयकलक्ष्यार्थोपस्थितिजनकत्वं लक्षणत्वम् यष्टीः प्रवेशय गंगायां घोष इ
त्यादिके यथायथमुदाहरणे तत्राद्याऽजहत्स्वार्थान्या च जहत्स्वार्थेत्युच्यते तद्भेदांतराणि त्वन्यतोऽवधार्याणीति नैयायिकास्त्वाहुः
मीमांसकास्तूक्तयुक्त्या लाक्षणिकपदस्य वाचकत्वपरिहारेऽपि नेश्वरेच्छायाः शक्तित्वम्॥

स्वारस्येवानभ्युपगमात् नन्विच्छायाईश्वरीयत्वमनुपादेयमेवचाधुनिकसंकेतज्ञानादपिशाब्दबोधोदयेनतादृशसंकेतस्यच
नेतानिर्वाह आधुनिकसंकेतत्वेनतात्पर्यस्यापिशक्तित्वप्रसंगस्तुन पदार्थोपस्थितिनियामकसंकेतस्यैवशक्तित्वेननस्यात्तत्वात्
ज्ञानस्यसाक्षादेवशाब्दधीजनकतयापदार्थोपस्थित्यात्मकव्यापारानपेक्षणात्-चक्षुरुपस्थापितार्थएवप्रकरणादिनातदवधारणा
त् आधुनिकसंकेतिनडित्थादिपदेष्वाधुनिकसंकेतस्यप्रागवधारितस्यडित्थादिव्यक्तिशाब्दधीजनकपदार्थोपस्थितौनियामक
त्वेनतद्घटितत्वस्यसौलभ्यादितिचेदेवमपिसंकेतस्यनिष्ठ तियोगिकतयानदीयोक्तविषयत्वस्याप्यापातरमणीयतयासंबंधि
त्वासंभवेनपदार्थानुपस्थापकत्वानिर्वाहात् तस्मात्पदपदार्थयोर्वाच्यवाचकभाव नियामकः संबंधः पदार्थांतरमेव तथ्य
सौसमवेतोऽभावादावपिसत्त्वात् किंतुवैशिष्ट्याख्येनसंबंधांतरेणवर्त्ततइत्याहुः वाच्यत्वपदान्तसमवायितयावक्ष्यत
इतिवदतादीधितिकृतापितन्मतमेवानुसृतम् तदेतन्नानामतानिनिराकर्तुमादौतत्स्वरूपप्रदर्शनमित्याशयेनमूलमवत
तारयति तस्या स्वरूपमिति तस्या शक्तेर्निर्विषयायानैयायिकघटादिविषयोऽतआह चाक्षुषेति तथाचौपचारिकविष
यत्वनविरुद्धमितिभावः चाक्षुषपदंत्वाचादिप्रत्यक्षस्याप्युपलक्षणम् इंद्रियनिष्ठचाक्षुषादिकारणतायामनादिमं इंद्रियजन्य
पूर्वपूर्वबोधध्वंसकालिकत्वनत्वजन्यतामव्यावर्त्तकत्वात् शब्दनिष्ठबोधकारणतायांतुस्वजन्यबोधसमानाकारपूर्वपूर्वबोधध्वं
सवत्त्वम् तद्बोधकारणतात्पर्यबोधकत्वम् ज्ञायमानपदंकारणमभिप्रेत्येदम् अन्यथाविषयतायांतादृशशब्देतुनावच्छेदकतेत्य
र्थोबोध्य ॥

संकेतज्ञानं विनोक्तशक्तिग्रहासंभवे नावश्यापेक्षणीयतयातस्यैवशक्तित्वमस्तुतद्धेतोरेवेतिन्यायादित्याशंकते नन्विति तस्याशक्तित्वेहे तुराधुनिकेत्यादि आधुनिके एतत्कालिकसंकेतविशिष्टे तदभावात् निरूक्तानादित्वविशेषणविशिष्टबोधकारणत्वाभावादित्यर्थः विशेष्यसत्त्वेपिप्रकृते विशेषणाभावप्रयुक्तविशिष्टाभावसत्त्वेनतत्प्रतियोगित्वरूपकारणत्वत्वेनैव प्रकृतेतेनरूपेणतज्ज्ञानेबा

ननु न बोधकारणत्वमनादिभूतं शक्तिः आधुनिकदेवदत्तादिपदे तदभावात् अन्यथापित्रादीनां संकेतज्ञानेप्यन्वयबोधप्रसंगः लाक्षणिकातिव्याप्तेश्चेति संकेतज्ञानमपि हेतुर्वाच्यम् तथा चावश्यकत्वात्स एव शक्तिरस्तु स चाधुनिकेपित्रादेर्गवादौ चेश्वरस्यचेतिचेत्॥

धकाभावइतिचेदं यदि संकेतग्रहमंतरेणैव तद्ग्रहो भवेन्न तु तत्संभवतीत्याह अन्यथेति संकेतनिरपेक्षस्यैव तस्य शाब्दबोधहेतुत्वेइत्यर्थः लाक्षणिकेति तत्राप्यनादिभूतबोधजनकत्वव्यवहारादिति भावः आवश्यकत्वादिति अवश्यापेक्षणीयज्ञानविषयत्वादित्यर्थः सएव संकेतएव एवकारेणबोधकत्वव्यवच्छेदः॥

सकेतस्य स्वरूपेन सामान्यतो विशेषरूपेण वा हेतुत्वमभिमतमिति विकल्पं दूषयति उच्यत इति स्वरूपेणेति स्वस्वपदरूपमितिश्रु त्यन्यासाधारणधर्मेण संकेतत्वेनेत्यर्थः दण्डत्वेन घटे दण्ड इव ज्ञानाविषय एव संकेतत्वेन हेतुरिति यावत् अगृहीतशक्ति कादिति अज्ञातसंकेतादित्यर्थः अर्थबोधप्रसंगादिति संकेतस्य तत्र विद्यमानत्वादिति भावः सामान्यत इति जनकाजनक साधारणरूपेणेत्यर्थः संकेतत्वेनेति ईश्वरीयसंकेतत्वादिना विशेषधर्मेणेत्यर्थः तज्ज्ञानशून्यानामिति संकेत ईश्वरीयत्व विदुषामित्यर्थः बोधोदयेनेति संकेतत्वेन तज्ज्ञानमात्राद्गवाद्यर्थबोधोदयेनेत्यर्थः यद्यपि संकेतत्वेन संकेतज्ञानकारण

अत्रोच्यते संकेतो न स्वरूपेण हेतुः अगृहीतशक्तिकादर्थबोधप्रसंगात् नापि सामान्यतो ज्ञातः प्रमेयत्वादिना तज्ज्ञानेपि बोधप्रसंगात् नापि संकेतत्वेन तज्ज्ञानं हेतुः गवादिपदेष्वपीश्वरादेः संकेतत्वेन तज्ज्ञानशून्यानां लौ किकमीमांसकादीनां तत्तदर्थबोधजनकत्वग्रहवतामेव बोधेन व्यभिचारात्॥

तथापि गवादावीश्वरस्येति तद्व्यालोचनये श्वरीयत्वादेर्निवेशस्तदभिमत इत्यभिप्रेत्य दूषितमिति ध्येयम् लौकिकमीमा सकानामिति वैदिकानां तेषां कयंचिदीश्वरबोधसंभवादुक्तं लौकिकेति अथवा लौकिकानां व्यावहारिकपदार्थमात्रविषयक ज्ञानवतां पामराणामिति यावत् मीमांसकानां चेत्यर्थः तत्तदर्थधीजनकग्रहवतामेवेत्येवकारेण निरुक्तसंकेतज्ञानवत्त्वव्य वच्छेदः स च तज्ज्ञानशून्यानामित्यस्यैवानुवादः एवं शून्यपाठस्तु सुगम इदं च शक्तिग्रहरूपकारणप्रदर्शकम्॥ ६ ॥

तज्ज्ञानं संकेतज्ञानं तथा हेतुः ततोपीति अर्थधीजनकतानिरूपितविषयतासंबंधावच्छिन्नावच्छेदकत्वस्यावच्छेदकत्वापेक्षया र्थधीजनकतात्वेन हेतुतायाः औचित्येन वैयाकरणे प्रसिद्धेरित्यर्थः संकेतज्ञानस्येदंपदमर्थधीजनकतावच्छेदकवदित्याकारक स्यार्थधीजनकतावच्छेदकत्वावच्छिन्नप्रकारताकज्ञानत्वेन हेतुत्वमिति सूचितं लाघवादिति भावः वस्तुतस्तु तन्मते संकेतत्वेन

नचार्थधीजनकतावच्छेदकत्वेन तज्ज्ञानं हेतुः ततोपि लाघवेनार्थधीजनकतात्वेनैव हेतु तायामस्मत्पक्षसिद्धेः नचाधुनिकदेवदत्तादौ संकेतज्ञानादेव बोधेनास्य व्यभिचारः तत्रा पीदंपदमेतमर्थं बोधयत्वितीच्छाग्रहे पदे तदर्थबोधकत्वस्यावगाहनेन व्यभिचाराभावात्

व हेतुतेति नोक्तविकल्पावसर इति बोध्यम् संकेतज्ञानादेवेत्येवेनार्थधीजनकत्वग्रहव्युदासः अस्य बोधकत्वग्रहस्य व्यभि चारः व्यतिरेके तत्रापि संकेतमात्रादर्थबोधस्थलेपीत्यर्थः इच्छाग्रह इति इदंपदविशेष्यकेतदर्थबोधकत्वप्रकारकेच्छाग्रह इ त्यर्थः अवगाहनेनेति विषयीकरणेनेत्यर्थः ज्ञानेच्छादिविषयकज्ञानस्य तद्विषयविषयकत्वनियमादिति भावः ॥ ६ ॥

स्यात्स्येति इतरविशेषणत्वेनेत्यर्थः प्रकृते चेच्छांशे विषयितया विशेषणीभूतबोधकत्वस्यैव तज्ज्ञानेन विषयीकरणादिति भावः अन्यथेति पार
तन्त्र्येणापि बोधकताज्ञानस्य शाब्दधीहेतुत्वइत्यर्थः इष्टापत्तिनिरासायाह नेदं तद्धीजनकमितीति अस्माच्छब्दादिति एतच्छब्दजन्येतरा
र्थयकबोधविषयोयमर्थइत्याकारकवर्त्तमानग्रहवत इत्यर्थः पदविशेष्यकार्थधीजनकत्वबोधग्रहे विद्यमानेतदंशेऽर्थधीजनकत्वाव
गाहिनइदं पदमेतदर्थधीजनकत्वे नत्विदमनेनेतिग्रहस्यासम्भवात्तदपहायास्मादित्याकारकबोधग्रहउक्तः एतस्मिंस्तु ननस्य प्रतिबध
कताग्राह्याभावानवगाहित्वादिति भावः तद्ध्रापत्तेरिति घटादिशाब्दबोधापत्तेरित्यर्थः उक्तज्ञानस्य विषयकत्वेपि न तेन पदांशेऽर्थबो
धकत्वं विषयीक्रियते येन तस्य शक्तिग्रहत्वस्यात् किन्तु बोधांशे तत्पदजन्यत्वमर्थांशे तादृशबोधविषयत्वमेव तथा तेन तुल्यमिति वेद्य

नच स्वातन्त्र्येण बोधकताज्ञानं कारणं वाच्यम् अन्यथा नेदं तद्धीजनकमितिज्ञानवतोऽस्माच्छब्दादयमर्थोबुद्धोऽनेनेति
ज्ञानतस्तद्ध्रापत्तेरितिवाच्यम् नेदं तद्धीजनकमितिग्रहवतोबाधेन पदे परग्रहंज्ञानतोपि तद्ध्रासंभवात्॥

तथा पदांशेऽर्थबोधकत्वमप्यवगाह्यत इति तुर्वचतुल्यमिति वेद्यत्वे मानाभावात्प्रतिबंधकस्य ग्राह्याभावावगाहिनो नेदं तद्धीजनकमिति
ज्ञानस्य जागरूकत्वाच्च नच पदनिष्ठार्थपदजन्यबोधविषयत्वमपि शक्तिर्विनिगमनाविरहादुभयविधज्ञानाच्छाब्दबोधस्य सर्वानु
भवसिद्धत्वाच्च कार्यतावच्छेदककोटावव्यवहितोत्तरत्वनिवेशाच्च न परस्परजन्यशाब्दबोधे व्यभिचार एवञ्च द्वितीयशक्तिग्रहरूपा
त्तस्माच्छाब्दबोधापत्तिः सुकरेति वाच्यम् तथासति नेदमर्थधीजनकमिति ग्राह्याभावानवगाहिनोऽप्रतिबंधकग्रहस्योपन्यासवैयर्
र्थ्यात् ग्राह्याभावानवगाहित्वस्योभयविधशक्तिप्रत्यन्वयव्यतिरेकाभ्यां प्रतिबंधकत्वोपगमेन तदुपन्यासस्य सार्थक्यासंपादने नूक्तग्रा
नस्यासंभव एवेत्याशयेन दूषयति नेदं तद्धीजनकमिति बाधेन अप्रमाण्यज्ञानानास्कन्दितनिरुक्तनिर्णयात्मकप्रतिबंधकसद्भावेनेत्य

अन्यथेति बाधग्रहे विजायमानस्य स्जतं बुद्धमनेनेति ग्रहस्य इदं विशेष्यक रजतप्रकारकग्रहत्वे भ्रांतित्वस्येत्यनेन दोषाभाववत्त्व मपि सूच्यते भ्रांतत्वापत्तेरिति तदभाववति तदवगाहिज्ञानत्वस्यैव तत्त्वादिति भावः अत्रेदं चिन्त्यम् यत्रेदं पदमेतदर्थं बोधयत्विति संकेतमात्राच्छाब्दबोधस्तत्र बोधकताशक्तिज्ञानस्य हेतुतावादि मते व्यभिचारो दुरुद्धर एवं नच तत्र संकेतज्ञानमेव बोधकताज्ञानमि त्युक्तमेवेति वाच्यम् सविषयकज्ञानस्य तद्विषयविषयकत्वे पि तद्विशेष्यांशे तत्प्रकारेण तेन विषयीक्रियते घटमहं जानामीत्या

अन्यथा भ्रांतित्वस्यापि भानात्वापत्तेरिति इदं चार्थधीजनकत्वं पित्रादि
संकेतज्ञानाद्गृहाते अतस्तज्ज्ञानात्पूर्वं नबोधः ॥ ६ ॥ ६ ॥

नुव्यवसायेन ज्ञानांशे घटत्वप्रकारकत्व घटविशेष्यकत्वयोरेव विषयीकरणात् अन्यथा भ्रांतस्य भ्रांतत्वापत्तिरनिवार्य्यैव स्यात् अत एव शब्दचिंतामणौ तात्पर्य्यविषय संसर्गज्ञानपूर्वकत्वस्य पदपक्षकानुमानेन सिद्धावपि नेतरपदार्थेऽभिमतापरपदार्थसंसर्गसिद्धिस्तादृशसं सर्गज्ञानपूर्वकत्वानुमानेन तत्पदार्थ तात्पर्यविषयसंसर्गस्याविषयीकरणादित्यस्वरसात्पदार्थपक्षकानुमानमवतारितं पक्षधरमिश्रेरिति शक्तिग्रहमाह इदं चेति शक्तित्वेनाभ्युपेतं बोधकत्वं चेत्यर्थः पित्रादीत्यादिना ऽप्तपरिग्रहः ॥ ६ ॥ ६ ॥

पूर्वोक्तालाक्षणिकोच्छेदापत्तिमिष्टत्वेन परिहरति नापीति शक्तिग्राहकेति शक्येव शक्तिग्राहकव्यवहारादेर्लक्ष्येपि तुल्यत्वादित्यर्थः ननु श
क्यलक्ष्यव्यवहारानुपपत्त्या लक्ष्यव्यावृत्तैव सा वाच्या तथा च लक्ष्योपस्थितये लक्षणावृत्तेरावश्यकत्वेन कथमुक्तापत्तेरिष्टत्वमत आह किं
चेति शाब्दबोधानंगत्वादिति घटादिपदेऽगृहीतशक्तिकस्य प्रत्यक्षाद्युपस्थितघटादेर्घटादिपदाच्छाब्दबोधानुदयादन्वयव्यभिचारेण प्रत्य
क्षाद्युपस्थितेः शाब्दबोधाजनकत्वादित्यर्थः नन्वेवं नानुपपत्त्या नारदगौरवं सोढव्यमत आह अपि चेति व्यभिचारो व्यतिरेकेबोध्यः तमेवोपपा
दयति शक्तिजन्योपस्थितिमिति अव्यवहितोत्तरत्वेति तच्च स्वध्वंसाधिकरणक्षणानुत्पत्तिकत्वे सति स्वाधिकरणक्षणध्वंसाधिकरणक्ष

नापि लाक्षणिकोच्छेदापत्तिरिष्टत्वाच्छक्तिग्राहकव्यवहारस्य मुख्यलक्ष्यसाधारण्यात् किंच प्रत्यक्षादिजन्योपस्थितेः शाब्दबो
धानंगत्वात् शाब्दबोधं प्रति शक्तिजन्योपस्थितेर्लक्षणाजन्योपस्थितेश्च कारणत्वं वाच्यम् तथा च कार्यकारणभावद्वयस्य क
ल्पने गौरवस्यात् अस्माकं तु नः शक्तिजन्योपस्थितित्वेनैव हेतुतेति लाघवम् अपि च लक्षणावृत्तिस्वीकारे कार्यकारणभाव
स्य प्रत्येकं व्यभिचारः शक्तिजन्योपस्थितिं विनापि लक्षणाजन्योपस्थितितः शाब्दबोधात्॥ ॥ औत्पत्तिकत्वमत्र स्वपदं शक्तिज्ञान

जन्योपस्थितिपरम् लक्षणज्ञानजन्यपदार्थोपस्थितिप्राग्वर्ति शक्तिज्ञानजन्यपदार्थोपस्थितिजन्यशाब्दबोधे व्यभिचारवारणाय विशे
ष्यम् शक्यशाब्दबोधानन्तरभाविलक्षणाज्ञानजन्योपस्थितिजन्यशाब्दबोधे व्यभिचारवारणाय सत्यंतं प्रकृते लक्षणाज्ञानजन्योपस्थि
तिजन्यशाब्दबोधे उक्तसंबंधेन शक्तिज्ञानजोपस्थितित्वेपि प्राक्त्वाभावेन तत्कार्यतावच्छेदकाक्रान्तत्वान्न व्यभिचार इति भावः अनंतेति
स्वत्वसत्तच्छक्तिविषयतत्वेनाननुगततया तद्घटिताव्यवहितोत्तरत्वसंबंधेनोपस्थितिमत्त्वस्य कार्यतावच्छेदककोटौ निवेशे कार्य

न्यायसाम्यादाह किञ्चेति प्राग्वदेवेति शक्तिज्ञानं विनापि लक्षणाज्ञानात्पदार्थोपस्थितेरेवं लक्षणाज्ञानं विनापि शक्तिज्ञानात्पदार्थोपस्थि
तेस्तयोरुपस्थितिहेतुतायां परस्परं व्यभिचारः अव्यवहितोत्तरत्वसंबंधेन तत्कारणवैशिष्ट्यस्य कार्य्यतावच्छेदककोटौ निवेशे च गौरवं तद
देवेत्यर्थः ननु बोधकत्वशक्तिवादिनोपि गंगापदं प्रवाहबोधकमिति शक्तिग्रहाल्लक्ष्यार्थोपस्थितिशाब्दबोधयोरापत्तिवारणाय कारणतावच्

न चाव्यवहितोत्तरत्वसम्बन्धेन तत्तदुपस्थितिमत्त्वं कार्य्यतावच्छेदकं तत्तदुपस्थितित्वञ्च कारणतावच्छेदकम् अ
नन्तकार्य्यकारणभावप्रसङ्गात् किंच पदार्थोपस्थितिं प्रत्यपि शक्तिज्ञानत्वेन लक्षणाज्ञानत्वेन च हेतुत्वे न व्यभिचारो गौ
रवं च प्राग्वदेवबोध्यम् न चेदं पदमेतदर्थबोधकमिति शक्तिज्ञानेन कार्यकारणभावकल्पनेपि पदतदर्थभेदेनाः
नेककार्यकारणभावकल्पने गौरवं तवापि समम् परस्परव्यभिचारवारणाय अव्यवहितोत्तरत्वघटितत्वे च सुतः
रामिति वाच्यम् शक्तिभ्रमानुरोधेन तत्तत्पदतत्तदर्थभेदेन कार्यकारणभावानंत्यस्य तवापि साम्यात् लक्षणाकार्यका
रणभावकल्पनागौरवं परं तवातिरिच्यते ॥ च्छेदककुक्षौ तत्तदर्थनिवेश आवश्यकस्तथा च लक्षणावादिमते कु गौरवमित्या
शंक्य निराचष्टे न चेति परस्परेति गंगापदनिष्ठतीरबोधकत्वग्रहं विनापि तीरादिपदनिष्ठतादृशशक्तिग्रहेण तीरबोधात्तयोः प
रस्परजन्यबोधे व्यभिचारप्रतिरोधायेत्यर्थः शक्तिभ्रमानुरोधेनेति गंगापदस्य तीरे शक्तिभ्रमदशायां तीरोपस्थित्यादेः सर्वमतः
सिद्धतया तवापि तत्कारणतावच्छेदककोटौ तत्तत्पदतत्तदर्थनिवेशस्यावश्यकत्वादित्यर्थः तवेति लक्षणास्वीकर्तुरित्यर्थः ॥ ८॥

ममापीति लक्षणांगीकर्तुरपीत्यर्थः प्रवेशादिति तथाचलक्षणाज्ञानस्यापिशक्तिज्ञानत्वेन हेतुत्वेन लक्षणाज्ञानजन्यलक्ष्यार्थोपस्थित्यादौ शक्तिज्ञानस्यहेतुतायांव्यभिचार इत्यर्थः विषयमनिवेश्यैवयदिशक्तिज्ञानपदार्थोपस्थित्योः कार्य्यकारणभावः संभवेत्तदास्यादस्यु क्तप्रकारः सएवनसंभवतीत्याह शक्तिज्ञानेति आवश्यकत्वादिति तदर्थविषयकोपस्थितिंप्रतितदर्थनिरूपिततत्पदनिष्ठशक्तिज्ञा नत्वेनहेतुतायाआवश्यकत्वादित्यर्थः आवश्यकत्वमेवाह अन्यथेति शक्तिज्ञानपदार्थोपस्थित्योः कार्य्यकारणभावेसमानविषय

अथममापिशक्तिज्ञानत्वेनैवहेतुताशक्यसंबंधज्ञानरूपलक्षणायांशक्तेरपिप्रवेशादितिचेन्नशक्तिज्ञानपदार्थोपस्थि त्योः कार्य्यकारणभावेसमानविषयत्वस्यावश्यकत्वात् अन्यथागङ्गातीरयोः सम्बन्धाग्रहवतोगंगापदशक्तिज्ञानतोऽ पिगंगायांघोषइतिवाक्यान्नीरबोधप्रसङ्गः शक्तिज्ञानस्यहेतोः सत्वात् अपिचघटमानयेति वाक्यंहस्तिकंठस्मर तोघटपदादिभ्योघटादेः गजादुस्तिपकस्यचसमूहालम्बनस्मरणवतोघटानयनवद्धस्तिपकस्यापिशाब्दबोधाप त्तिः समूहालम्बनरूपायास्पदार्थोपस्थितोपदवृत्तिजन्यत्वसत्त्वात्॥ रैत्वानिवेशइत्यर्थः संबंधाग्रहवतः इत्युक्त्यालक्ष णाज्ञानासत्त्वंबोधितम् गंगापदइति प्रवाहरूपार्थनिरूपितबोधकत्वशक्तिंगंगापदेजानतइत्यर्थः तीरबोधप्रसंगइति तीरोपस्थि तेस्तद्द्वारकशाब्दबोधस्यचापत्तिरित्यर्थः ननूक्तापत्तिवारणायवृत्तिज्ञानजन्योपस्थितिशाब्दबोधयोरेवकार्य्यकारणभावेसमा नविषयकत्वंनिवेश्यतांकृतंवृत्तिज्ञानपदार्थोपस्थित्योः कार्य्यकारणभावेतन्निवेशेनेत्यतआह अपिचेति हस्तिपकस्मृतेर्वृ त्तिज्ञानजन्यत्वसंपत्तयेहस्तिनोपिवाक्यादस्मृतिविषयतादर्शितासमूहालंबनेत्यत्रालंबनपदंविषयपरम्॥ ९ ॥ ९ ॥

निज्ञानस्य हेतुतेति निर्विवादम् सा च भवदुक्तार्थधीजनकत्वस्य वृत्तित्वेन संभवति तद्रूपायास्तस्याः शाब्दधीजनकतायामनवच्छेदक
कत्वात् आत्माश्रयेण स्वस्यैव स्वावच्छेदकत्वासंभवात् किंच प्रयोज्यप्रयोजकव्यवहारदर्शप्रयोज्यप्रवृत्त्यनुमिते
प्रयोज्यघटानयनादिज्ञाने उपस्थितत्वाच्छाब्दस्यैव हेतुतायामवधार्यमाणायामसंबद्धस्य कारणत्वानुपपत्त्या कल्प्यमानसंबंधस्य
जनकत्वात्मकत्वासंभवः स यमनुपपद्यमानत्वेन गृहीतस्य गृहीतुमशक्यत्वात् तस्मात्तद्बोधकत्वं शक्तिः एवं न्यायमतानुयायिनामस्मात्पदा
देतदर्थविशेष्यकबोधो भवत्वित्याकारकेश्वरेच्छाविषयत्वस्यापि संकेतीयगंगापदजन्यत्वप्रकारतानिरूपितबोधत्वावच्छिन्नोद्देश्य
कतानिरूपितविशेष्यत्ववृत्त्यवच्छेदकताधेयतासंबंधावच्छिन्नावच्छेदकत्वपर्यवसितस्य न शक्तित्वं लक्षणोच्छेदापत्तेः
पदात्तीरबोधो भवत्वितीच्छाया अपि भगवतः संभवात् तादृशेच्छीयनिरूढावच्छेदकतायाः लक्ष्येतीरेऽपि संभवात् तादृशा
वच्छेदकतात्वेन शाब्दे शक्तिज्ञानस्य कारणताकल्पने गौरवाच्च तीरादिनिष्ठावच्छेदकतायाः पूर्वोक्तविशेष्यत्ववृत्त्यवच्छेदकतानिरूपितत्वेपि
न विशेष्यवृत्त्यवच्छेदकतात्वेन तन्निरूप्यत्वम् किंतु शुद्धावच्छेदकतामात्रेणेति न तादृशशक्तिस्तीरे इति विशिष्यप्रतारणामात्रम् इच्छा
विषयत्वं ज्ञानविषयत्वं वा शक्तिरिति विनिगमनाविरहाच्च तस्मात्पदपदार्थयोर्वाच्यवाचकभावव्यवहारनियामकः संबंधः पदार्था
न्तरमेव तस्य च लक्षणं आवृत्तस्यैव धर्मिग्राहकमानसिद्धत्वाल्लक्ष्यबोधार्थे शक्यसंबंधरूपलक्षणावृत्तेरपि स्वीकार आवश्यकः तज्ज्ञानं
स्य शाब्दबोधे हेतुत्वांतरकल्पनप्रयुक्तगौरवं तु फलमुखत्वान्न दोषावहम् अन्यथानुपपत्तेश्च अत एव शक्यलक्ष्यव्यवहारः स्वरसतः सं
गच्छते अथवा शक्तिलक्षणाज्ञानयोः शाब्दरूपं प्रत्येकरूपेणैव हेतुता तथाहि तच्छाब्दं प्रति शक्तित्वावच्छिन्नसांसर्गिकविषयतानि
रूपितपदनिष्ठप्रकारतानिरूपिततदर्थविशेष्यताकज्ञानत्वेन हेतुता शक्तिसंबंधेन शक्यसंबंधेन वा पदप्रकारकज्ञाने शक्तेः संसर्ग

त्वात् शक्तित्वनिष्ठावच्छेदकतायां पर्य्याप्तिरनिवेशेन शक्यसंबंधसंसर्गकज्ञानस्यापि तेन क्रोडीकरणात् परंतु पदनिष्ठप्रकारतानि
रूपितताद्दशसांसर्गिकविषयतायामर्थविशेष्यतानिरूपितत्वानभ्युपगमान्न शक्तिसंबंधेन पदाभावप्रकारकबुद्धिप्रतिबध्यत्वं लक्ष
णाज्ञानस्येंद्रियाणामित्यादिहरिपद्यस्यायमर्थः इन्द्रियाणां चाक्षुषादिविषयेषु घटादिषु पुरुषप्रयत्नानपेक्षा यथा योग्यतानदी
यचाक्षुषादिकारणतावच्छेदकरूपास्ति तथार्थैः साकमपि पदानां संबंधो योग्यतातच्छाब्दबोधजनकतावच्छेदकधर्मो न तु जनक
त्वमेवोक्तयुक्तेरिति न तद्विरोधोपीति सर्वमनवद्यमिति तद्ग्राहकं च व्याकरणस्मृत्यादि तदुक्तं शक्तिग्रहं व्याकरणोपमानकोशा
प्तवाक्याद्व्यवहारतश्च वाक्यस्य शेषाद्विवृतेर्वदंति सान्निध्यतः सिद्धपदस्य वृद्धा इति तत्र व्याकरणादिकं लाघवसहकृतमेव श
क्तिग्राहकमिति नैयायिकमतम् यतो लाघवसहकृतेन लः कर्मणीति सूत्रेण कृतावेव शक्तिः परिच्छिद्यते न तु कर्तरीति यथैतत्त्वा
र्थोक्तम् एवं गुणे शुक्लादय इति कोशेनापि लाघवसहकृतेन गुण एव शक्तिर्निर्धार्यते न तु गुणिनि गौरवात् गुणिबोधस्तु शुक्लादिप
देभ्यो निरूढलक्षणयैवेति च तदुक्तं निरूढत्वं च प्राहुः निरुक्तं उपमानस्य तु सादृश्यज्ञानात्मकस्यातिदेशवाक्यार्थस्मरणद्वारा गव
यादिर्गवयादिपदवाच्य इति शक्तिपरिच्छेदकत्वम् इदमेतद्वाचकमित्याकारकाप्तवाक्यमपि तद्ग्रहे [illegible] आप्तत्वं च तदर्थविषयक
यथार्थज्ञानवत्त्वम् व्यवहारश्च यथा प्रयोजकवृद्धेन घटमानयेत्युक्ते प्रयोज्यवृद्धेनानीते घटे पार्श्वस्थस्य घटकर्मकानयनादिकार्यं
घटकर्मकानयनादिज्ञानसाध्यमित्यनुमिते व्यवहारे अयं हेतुर्व्यवहारस्य हेतुत्वात् अनंतरं तद्धेतुजिज्ञासायामुपस्थितं तद्वा
क्यमेव तद्धेतुत्वेनावधारयति तस्य चार्थासंबद्धस्य तद्धेतुत्वानुपपत्त्या पदैः साकं पश्चाद्वाक्यस्य संबंधमवधारयतीति शक्तिरि
ति व्यवह्रियते यद्यपि प्रथमं तेन वाक्यस्यैव वाक्यार्थेऽवधारितः सा तथापि घटमानय गामानयेत्यावापोद्वापाभ्यां पश्चाज्ज्ञानं प्रत्ये

कपदशक्तिग्रहेणप्राग्जातवाक्यशक्तिग्रहे चंद्रादेर्ज्योतिः शास्त्राध्ययनजन्यज्ञानयोजनादिपरिमाणग्रहेण पाश्चात्येन प्राथमिकात्यपरि
माणग्रहइवाप्रामाण्यं गृह्यत इति नैयायिकाः प्रत्येकपदशक्तिग्रहेणैवाकांक्षादिसहकृतेन वाक्यार्थबोधोपपत्तेरिति तदाशयः अन्येतु
वाक्यार्थशक्तिग्रहस्य प्रत्येकपदशक्त्युपजीव्यत्वाभावेन तद्बाधासंभवेन प्राग्जातशक्तिग्रहस्यैव बलवत्त्वमित्याहुः वाक्यशेषात्तु यवैर्जुहो
तीत्यत्र यवपदस्य दीर्घशूकविशिष्टे आर्याणां प्रयोगात् कंगौ म्लेच्छानां प्रयोगात् शक्तिरिति संदेहे यत्रान्या ओषधयो म्लायंते अथैते
मोदमाना इवोत्तिष्ठंतीति वाक्यशेषेण दीर्घशूकविशिष्टे तन्निर्णयः विवरणस्य यथा शक्तिग्राहकत्वम् तथा धात्वर्थनिरूपण उक्त
म् इह सहकारतरौ मधुरं पिको रौती त्यादौ प्रसिद्ध सहकारादिपदसन्निधानात्पिकादिपदानां कोकिलादौ शक्तिपरिच्छित्तिरि
ति सैषा शक्तिर्नानार्थेषु संयोगादिना नियम्यते तदुक्तं काव्यप्रकाशे संयोगो विप्रयोगश्च साहचर्यं विरोधता अर्थः प्रकरणं लिंगं
शब्दस्यान्यस्य सन्निधिः सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतव इति शब्दार्थस्यान
वच्छेदे संदेहे तन्निरासद्वारा विशेषनिर्णयस्य जनकाः संयोगादय इति तदर्थः शक्त्योपस्थितानामनेकेषामेकतरमात्रार्थतात्पर्यनि
र्णयद्वारा तत्तदर्थबोधजनकत्वं तेषामिति भावः तत्र सवत्सा धेनुरवत्सा धेनुरिति क्रमेण संयोगविप्रयोगयोरुदाहरणे साहचर्यं सा
दृश्यम् सदृशयोरेव प्रायशः सहप्रयोगादेवं रामलक्ष्मणावित्यादावुभयोर्नानार्थयोर्युगपदेव साहचर्यग्रहाधीनतात्पर्यग्र
हेण विशिष्यावगतिरिति नान्योन्याश्रयः रामार्जुनगतिस्तयोरित्यादौ विरोधेन सा अंजलिना जुहोत्यंजलिनादित्यमुपतिष्ठत इ
त्यादौ धात्वर्थवशात् दाकारांजलिपरत्वम् सैन्धवमानयेत्यादौ तु भोजनादिरूपप्रकरणेन सा अन्त्याः ॥ ॥

गर्भरूपपद धातीत्यादौ तेजोविरचनमित्यादिश्रुतिरूपाज्जिज्ञासादिकपदस्य हृतसाधनाजनेनात्पर्यावगतिः रामो जामदग्न्य इत्यादौ जामद
ग्न्यपदसन्निधानेन रामपदस्य परशुरामपरता एवमभिरूपायकन्यादेयेत्यत्राभिरूपतरायेति सामर्थ्यादवगम्यते पश्य निषपरशुनेत्यौ
चित्यात् परशुपदस्य च्छेदनार्थत्वं भात्यत्र परमेश्वर इत्यत्र राजधानीरूपदेशात् परमेश्वरपदस्य राजपरत्वम् चित्रभानुर्भातीत्यत्र
चित्रभानुपदस्याग्निवह्नेर्दिवा सूर्यस्य बोधकम् मित्रो भातीति मित्रो भातीत्यादौ व्यक्तेलिंगाद्यैस्तु हृदोऽत्ये सूर्यस्य बोधकम् मित्रपद
म् स्थूलपृषतीमनड्वाहीमित्यत्र स्वरात्तु रूपबहुव्रीह्यर्थनिर्णयः आद्युदात्तत्वणत्वादि यथा सुसिक्तमित्यत्र सुशब्दस्य कर्मप्रव
चनीयस्य पूजार्थकत्वम् सुपिक्तमित्यत्रोपसर्गस्यान्यासार्थकत्वमेवं प्रणायक इत्यत्र णत्वात् प्रणयनकर्तृबोधः प्रनायक इत्यत्र त
द्भावात् प्रगतनायकबोध इत्याद्यूह्यम् यत्तु पदपदार्थयोर्यो यः स शब्दो यः शब्दः सोऽर्थ इतीतरेतराध्यासमूलकतादात्म्यं भेदव्याप्
कमतिप्रसवाचकः प्रणवादि ओमित्येकाक्षरं ब्रह्मेति भेदाभेदयोर्दर्शनात् आद्ये भेदस्योद्भूतत्वविवक्षया षष्ठी अभेदस्योद्भूतत्वनि
वक्षया तत्त्वेऽप्यातिपदिकार्थे प्रथमा स एव संबंधः पदतदर्थयोर्वाच्यवाचकभावव्यवहारनियामकः शक्तिस्तु संकेतः पदार्थयोः
वेति भट्टानुयायिमतं तन्न साधीयः अध्यासमूलकस्य तस्य संबंधत्वासंभवात् भेदाभेदयोः परस्पराभावरूपतया विरुद्ध
त्वेनैकत्रासंभवाच्च कस्यचित्तथाध्याससंभवेऽपि सर्वेषां न तथाध्यासे मानाभावात् घटपदनाशेऽपि घटस्योपलभ्यमानतया तयोस्ता
दात्म्यासंभवदुक्तित्वाच्च न च पाककरणे प्राक्कृष्णमेपि पाकोत्तरमयमिदानीं न कृष्ण इति प्रतीतेर्भेदाभेदौ न विरुद्धाविति वाच्य
म् अव्याप्यवृत्तीनां तेषामेकावच्छेदेन विरोधानपायात् अत एव तन्नरे शकालावच्छेदकभेदेनैवायमि॥ ९ ॥ ९ ॥

दानीं न श्यामो वृक्षो मूले न कपिसंयोगीति ननु तदनवगाहिनी घटोयं न श्यामो वृक्षो न कपिसंयोगीति प्रतीतिः किं त्वभेदवादे घटपद
नाशे घटनाशापत्तिरेव शब्दवदर्थस्यापि श्रोत्रेंद्रियग्राह्यतायाः शब्दस्य चक्षुरादींद्रियग्राह्यतायाश्चापत्तिरिति बहुव्याकोपः शब्द
स्य यथा न नित्यत्वं तथा वक्ष्यते न चात्यंतभेदे घटः पटोत्यंताभेदे घटो घट इति सामानाधिकरण्यादर्शनाद्भेदाभेदवादोपपत्तिरिति
शंक्यम् शब्दो घट इत्याद्यननुभवाद् घटो न शब्दो घटो न घट इत्याद्यनुभवाच्च भेदस्यैव सिद्धेः ओमित्येकाक्षरमित्यादौ त्वक्षर
पदस्य तत्प्रतिपाद्ये निरूढलक्षणायाः सामानाधिकरण्योपपत्तेस्तद्वाक्यस्योपासनाकांडस्थतया भेदेप्यभेदोपासनपरतयोप
पत्तेश्चेत्यन्यत्र विस्तरः सा च शक्तिस्त्रिधा योगो रूढिर्योगरूढिश्चेति प्रकृतिप्रत्ययनिरूपिता तत्तदर्थे या शक्तिः स योगः तन्मात्रेणार्
र्थबोधकं पदं यौगिकमिति व्यवह्रियते यथा पाचकादिपदम् तद्घटकधातुप्रत्यययोः पाकादौ कर्त्रादिकारके च व्युत्पन्नत्वात् अ
वयवार्थाप्रतीतौ केवलसमुदायस्य तत्तदर्थे या शक्तिः सा रूढिस्तन्मात्रार्थबोधकं पदं रूढम् यथा मणिनूपुरादि अश्वगंधादिपदा
त्तु कदाचिदोषधिनिष्ठसमुदायनिरूपितशक्त्यौषधिबोधः कदाचित्तु अश्वस्य गंधोस्यामिति व्युत्पत्त्या वाजिशालादिबोधोवयव
शक्त्येति यौगिकरूढिः पृथङ्नोक्तौ तयोरेवांतर्भावात् रूढिर्योगापहारिणीति तु प्रकरणाद्यभावे लाक्षणिकं तद्वाजिशालादिपर
परे यत्रावयवार्थसहकृता समुदायशक्तिरर्थबोधिका सा योगरूढिस्तन्मात्रार्थबोधकं पदं योगरूढम् यथा पंकजादिपदम् तत्र
पंकाधिकरणकोत्पत्त्याश्रयपद्मत्वविशिष्टबोधात् अनुपपत्तिप्रतिसंधानं विनापि पद्मबोधान्न तत्र लक्षणावसर इत्यादि प्रपंचि
तं पूर्वमेव गंगायां घोष इत्यादौ गंगापदस्य तीरे शक्यसामीप्यरूपलक्षणाग्रहे तदाहितसंस्कारजन्यतीरादिस्मृत्या तीराधिकर

णकबोधप्रमान्त्वुक्तिः लक्ष्यव्यवहारान्यथानुपपत्त्या लक्षणायास्त्वयमभ्युपेयत्वात् अन्यथानुपपत्तिप्रतिसंधानं च तत्कल्पने बी
जं यथोक्तैकचित्रिणकांक्षत्वमपि तद्बीजं यथा वदनं तस्य वदनं सुखमसुखं भाति चान्यासामित्यत्र तादात्म्यसंबंधावच्छिन्नवदन
त्वावच्छिन्नप्रकारतानिरूपितवदनत्वावच्छिन्नविशेष्यताकबोधो योग्यः संभवति तादात्म्यसंबंधावच्छिन्नतादृशतादृशप्रकारता
निरूपितविशेष्यतावच्छेदकतासंबंधेन शाब्दबुद्धौ विधेयतावच्छेदकभेदस्य तंत्रत्वादिति वदनत्वावच्छिन्नार्थकवदनपदनि
रूपिताकांक्षा न वदनपदेन समं वदनपदं लक्षणया ह्लादकपरं तदुपस्थितह्लादकत्वावच्छिन्नस्याभेदान्वयो वदने अनुशासनं
बोधितेनैकांक्ष्येनापि तु वितथ्या यथाकृतसीतापरित्यागः सत्ताकरमेवलाभम् भुभुजे पृथिवीपाल पृथिवीमेवकेवलामित्यत्र भुजि
धातोरेव न वाचकत्वादात्मनेपद निराकांक्षतया व्यार्थबुद्धेः मतिकरणार्थान्तरातु पालनस्य व्यपि शासनम् लक्ष्यते आत्मने
पदसमभिव्याहृतभुजित्वावच्छेदेनास्वकतबोधकत्वेन पालनबोधस्वरूपायोग्यत्वरूपनैराकांक्ष्यस्य भुजोऽनवनदुतिसूत्रे
णबोधनात् तत्र केवलपदेन तात्कालिकराभिन्नपृथ्वीपालकर्तृकभोगकर्मनिष्ठान्योन्याभावप्रतियोगितानवच्छेदकैकत्व
योगिनी व्यक्तिरभिधीयते एवकारेण पृथिव्यन्ययोगव्यवच्छेदः एवं च तात्कालिकराभिन्नपृथिवीपालकर्तृकभोगकर्मनि
ष्ठान्योन्याभावप्रतियोगितानवच्छेदकैकत्वविशिष्टाभिन्नपृथिवीकर्मकभोगकर्त्ता पृथिव्यन्यलौककर्मकभोगकर्त्रराभिन्नः पृ
थिवीपाल इति शाब्दबोधः हरे पाषमधुरं रौति हि काकः कूजति काननदेत्यादौ तु मुख्यार्थबाध एव लक्षणाबीजम् किं
तु सामान्यलक्षणेत्युच्यते लक्ष्यसमासार्थैकपदघटितत्वात्तस्याः यथा द्वितीयेन प्रह्वेण हरेपादिपदसमाप्ति विधि

पेशक्तिर्न गृहीता किंतु द्विरेफो यत्रेति व्युत्पत्त्या रेफद्वयसंबंधि भ्रमरपदे शक्यसंबंधरूपलक्षणा गृहीता तस्य प्राणिविशेषविशेष्यकमधुग
वकर्तृत्वशाब्दबोधस्य तात्पर्यविषयस्यानुपपत्त्या द्विरेफपदात्स्वलक्ष्यरेफद्वयघटितपदवाच्यत्वलक्षणयोपस्थिते प्राणिविशेषे मधु
रावकर्तृत्वान्वय इति द्विरेफपदेन भ्रमरपदमुपस्थाप्यते तेन च प्राणिविशेषोपस्थितिरिति तु न सम्यक् प्रत्ययानामिति व्युत्पत्तेस्तं
त्रप्रत्ययार्थान्वयासंभवात् भ्रमरपदे लक्षणायामपि नं तेन तदुपस्थितिः रुचितस्येवार्थे प्रत्यायकत्वादित्यप्याहुः एवं हि कः कूजति का
नने इत्यादावपि बोध्यम् एवं गंगा हरति वै पुंसां दृष्टा पीतावगाहिते त्यत्र पीता गंगा पापं हरतीति वाक्ये गंगापदात्स्वशक्यप्रवाहावयवा
वयविभावसंबंधरूपलक्षणाप्रहाहितसंस्कारसहकृतादुपस्थितो द्रुतजले पानकर्मत्वान्वयः तात्पर्यानुपपत्तिरेव वा सर्वत्र लक्षणा
बीजम् तदुन्नायकत्वेनैवोक्तानेराकांक्षादीनामुपयोगः अत एव यष्टीः प्रवेशयेत्यादौ यष्ट्यादिपदानां तद्धारणकर्तरि लक्षणा यष्टि
षु प्रवेशकर्मत्वान्वयानुपपत्त्यभावेपि भोजनादिप्रकरणोन्नीततात्पर्यविषयभोजनप्रयोजनकप्रवेशकर्मत्वानुपपत्तेस्तत्र जागरूकत्वात् एवं कु
ताः प्रविशंति छत्रिणो यांतीत्यादावप्युक्तं ननु छत्रिशब्दस्य पदद्वयघटितत्वेन वाक्यतया त्वयापि नये कथं तस्य लक्षणा शक्याप्रसिद्धेः किं
चात्र नैकमार्थगंतृत्वं लक्ष्यतावच्छेदकम् यांतीत्यस्यानन्वयापत्तेः गंतृत्वेनोपस्थितस्य गमनाकांक्षाविरहादिति चेत्सत्यम् संबंधिश
क्त मतुप एव तत्रैकसार्थसंबंधिलक्ष्यकत्वाभ्युपगमेनोक्तदोषद्वयस्याप्रसक्तेः न च च्छत्रपदस्यैव यर्थ्येन तस्य तात्पर्यग्राहकत्वेन सार्थ
क्यात् लाक्षणिकपदं नानुभावकमिति संप्रदायः स्वशक्यानुभवं प्रत्येव पदानां कारणत्वम् इतरपदार्थेन सह स्वशक्यानुभावक
त्वेनत्वशक्याद्घोषादिपदादेव तीरानुभवो ॥

१/०
पपत्तेर्न शक्याद् शक्योपस्थितिर्लक्षणेत्यभ्युपगन्तृणामतेऽन्योपस्थितिर्मर्वं धेनैव पदस्यानुभावकतया तस्याश्रितीयदाचभावान्तस्मा
ननुभावकत्वमितितन्मूलं न च तत्सेभवति शक्योपस्थितानीयदेरभक्त्यर्थतया तत्रप्रत्यायार्थान्वयासंभवात् वस्तुतस्तुलाक्षणिकः
पदमुद्देश्यविधेयभावेनान्वयाजनकमित्येवतदर्थोऽपदे स्य विधेयभावेनान्वयेशक्तिमत्त्वस्यैवतंत्रत्वात् अतएवन विधेयपरः श
ब्दार्थइतिसंगच्छते किंच तन्तुसयोगहेतुत्वतात्पर्यकंतंतुः पटंजनयतीतिसर्वलाक्षणिकवाक्येऽन्वयानुभवापत्त्यापापत्ते
लाक्षणिकपदस्यानुभावकत्वमेवन्याय्य गंगापदात्तीरमनुभवामीतिप्रतीतेश्च नाटयप्रवादेनाभि
निवेष्टव्यम् ननुस्माय नेशब्दप्रयोगेविमित्यवाचकंपदंप्रयोक्ष्यामहइतिन्यायात्तीरवाचकंगंगादिपदाभिधानमनुचितम् प्रयोजन
जिज्ञासापांपावनत्वादिप्रतिपन्नायेतदितिचेत्तर्हिशक्तिंविनातस्यशब्देमानासंभवात्तदर्थोऽस्यजनाचनिरपि तृतीयांगीकरणीया अतए
वावलानाश्चिपहत्यावारिवाहैः सहानिशं तिष्ठतिचपत्स्यमसकलाः समुपागतादृत्यभाशक्ताना श्रियमपहत्यपुंस्त्वस्त्रेजलवाहकैः
साकमरमतइत्यतात्पर्य्यविषयं रूढ्यर्थानालिंगितार्थान्तरस्यापिप्रतीतिः साचार्थद्वारिकापिभ्रमधर्मिकविभ्रश्यसोयस्वमीरितस्ते
नगोदातीरनिकुंजप्रतिष्ठितनिसर्गादृप्तसिंहेनत्वादीप्रतिभानुषासहस्यानंपकृत्वोपव्यवेशिस्यसूत्तौ सिंहप्रतीत्यनन्तरं गोदातीर
स्वस्थभीरुभ्रमणीयोग्यत्वप्रत्ययादितिचेन्न रूढ्यर्थानालिंगितार्थसम्बन्धस्य योगेनप्रतीत्यसंभवेपि लक्षणयातस्या सूपपादत्वात् पावन
त्वादिप्रतीतिविशिष्टलक्षणयापिशुद्धलक्षणयेवानुपपत्तिपरिहारेविशिष्टेनत्वभ्युपगमेबीजाभावइतिचेन्न पदशीः प्रवेशायेसत्यापित
दनापत्तेः वाच्यार्थवैयजनिकमुख्येरतुमानेनापिगतार्थत्वात् सम्मुखस्तुगालिप्रस्तावादेरिवेनोपितथातात्पर्य्यमेवोन्नीयते नत्वन्वयबो
धोऽनुमितिर्वाबाधेव्यभिचारपसधर्मतयोः संदेहेवानयोरसंभवात्तत्संभवेवतेजगो आसांत्वभ्युपगमात् इत्यन्यत्रविस्तरः॥ ९ ॥

यदिप्रकरणानुभाविकोलोकानांस्वरसः वाहीकशब्दादसमर्थेप्रत्येमीतिप्रत्ययस्तदाव्यंजनावृत्तिरस्तु हैवेति स्वोक्तनिष्कृष्टमतम
वलंव्यमूलमवतारयति नन्विति एवंबोधकत्वस्यैवशक्तित्वे तत्रापिअपभ्रंशात्मकभाषायामपिस्यादिति तस्याअपिबोधकत्वात् ई
श्वरेच्छादीनांशक्तित्ववादिनांतुनापमतिप्रसंगइतिभावः दूषणमावाह तथाचेति नापभ्रंशितंवैइत्यादिनिषेधविधिविषयत्वात्
नापत्त्येशापत्तेःकर्तुमशक्यत्वादितिभावः द्विधेति अपभ्रंशानामुक्तशक्तिमत्त्वाभावव्यवस्थापनेनसाधुत्वस्यान्यथानिर्वचनेनचेत्य

नन्वेवंभाषादितोबोधदर्शनाद्बोधकतारूपाशक्तिस्तत्रापिस्यात्तथाचसाधुतापिस्यात् शक्तत्वस्यैवसाधुतायाव्याकरणाधि
करणेप्रतिपादनादित्याशंक्यद्विधासमाधत्ते असाधुरनुमानेनवाचकः कैश्चिदिष्यते वाचकत्वाविशेषेवानियमःपुण्य
पापयोः असाधुः गाव्यादिः अनुमानेनसाधुशब्दमनुमायवाचकः बोधकइष्यते तथाचलिपिवत्तेषांसाधुस्मरणए
वोपयोगोनतुसाक्षात्तद्वाचकत्वमतोनसाधुत्वमितिभावः ॥ ऽर्थः मूलेअनुमानेनवाचकमिति अनुमानमत्रस्मृतिः अनु
पश्चान्मानंमितिरितिव्युत्पत्तेर्नतुव्याप्तिज्ञानम् तच्छून्यानामपिशब्दबोधदर्शनात् गाव्याद्यपभ्रंशानांगवादिशब्दविकृतित्वेनो
द्बोधकविधयाप्रकृतिस्मारकत्वादित्याशयेनव्याचष्टे अनुमानेनसाधुशब्दमिति अनुमायेतिस्मृत्वेत्यर्थः वक्ष्यतिच
तेषांसाधुस्मरणएवोपयोगइति अपभ्रंशानांसाक्षाद्बोधकतातुन शाब्दजनकसाधुत्वस्याभावादसाधुत्वज्ञानस्यप्रतिबंधक
त्वाहितिभावः

वृत्तेर्भेदैकत्वसंख्यार्थत्वसाधिकेत्यभिप्रेत्याह वस्तुतइति अनुभवसिद्धेति अन्वयेनतदनुरोधेन सामान्यधर्मप्रकारकज्ञानस्यावश्यक
तास्यादितिशेषः अभेदैकत्वसंख्यायावृत्तौ भानमितिमूलंतु प्राचीनग्रंथानुवाद एवेतिभावः अनुभवासिद्धत्वस्यशब्द निर्णयत्वंमत्वाह न
थात्वेवेति अनुभवसिद्धत्वेचेत्यर्थः समानप्रकारकत्वेनैवेति एवकारेणविभिन्नप्रकारकत्वव्यवच्छेदः तद्धर्मप्रकारकेच्छाप्रतितद्ध
र्मप्रकारकत्वज्ञानस्यहेतुतायाः सुखादीच्छास्थलेक्लृप्तत्वात्प्रकृते विशेषधर्मप्रकारकजिज्ञासायाः सावयवविषयत्वेन ज्ञानप्रकारीभू
तविशेषधर्मप्रकारकत्वस्यावश्यकत्वेन तत्पदार्थविशेषधर्मप्रकारकज्ञानकार्य्यतावच्छेदकाक्रांतत्वादितिभावः तत्तद्रूपेणेति ए
कत्वत्वादिरूपेणैवेत्यर्थः एवकारेणसंख्यासामान्यधर्मव्यवच्छेदः इष्टापत्तिस्तु न तथासति शब्दादेव विशेषधर्मावगतौ जिज्ञा
साया असंभवादितिभावः अत्रवदंति तद्धर्मप्रकारकज्ञानस्यकार्य्यतावच्छेदककोटौस्वातंत्र्येणतद्धर्मप्रकारकत्वम् सामान्य
धर्मप्रकारकज्ञानस्य विशेषधर्मप्रकारकजिज्ञासाजनकत्वानुरोधान्निवेशनीयम् अन्यथासामान्यधर्मप्रकारकज्ञानस्योक्तजिज्ञासायां
प्रतिहेतुत्वंविलीयेत नचतत्रमानाभावः जायतेचकार्य्येकारणेवाज्ञाते किमस्यकार्यंकारणंवेति दीधितिकृद्वाक्यस्यैवमानत्वात् प्रकृ
ते विशेषधर्मस्यपारतंत्र्येणैवेच्छांशेप्रकारत्वात्तद्धर्मप्रकारकज्ञानंविनापि सामान्यधर्मप्रकारकज्ञानादृशजिज्ञासायाः सूपपाद
त्वात् सामान्यधर्मप्रकारकज्ञानंतु विशेषधर्मप्रकारत्वावच्छिन्नविशेष्यकेच्छात्वमिति नगुणत्वसामान्यज्ञानात्सुखादीच्छाप्रसक्तिरधि
कमन्यत्रानुसंधेयम् तथाचात्रजिज्ञासायाः सर्वसिद्धत्वेनदुपपत्तयेऽभेदैकत्वेवृत्तेर्वृत्तिरावश्यिका एवंचाभेदैकत्वसंख्यायावृत्ताविति
तिमूलस्यसंगतिः एतेनभेदस्यतत्सहचरितद्वित्वादेरेकत्वस्यचयाप्रतीतिस्तद्भावइत्यर्थपरतयाव्याख्यानंपरास्तमिति इतिभूष

सख्याविवक्षाःविवक्षानिरूपणेसगतिंदर्शयति प्रसंगादिति अभेदैकत्वसख्यानिरूपणे कपिंजलानालभेतेत्यत्र विधेयविशेषणत्
यात्वित्वसख्याविवक्षायाः स्वतत्वादुपेक्षानर्हत्वाच्चेत्यर्थः अविवक्षितमितीति तद्विवक्षणेयस्मि यथावत्यामार्गामार्जनालाभइ
भाव धातोरितीति प्रत्ययविधौधातोरितिसूत्रस्य धातुपदार्थविशेषणीभूतैकत्वादेरेतच्छास्त्रेविवक्षणादित्यर्थः असम्बन्धे लि

संख्याप्रसंगादुद्देश्यविधेययोः सख्याविवक्षाविवक्षे निरूपयति लक्ष्यानुरोधात्सख्यायास्त
न्त्रातंत्रेमतेयत पश्वेकत्वादिहेतूनामाश्रयणमनाकरम [redacted] हंसमाश्रीत्यत्रोद्देश्यगतमेकत्व
मविवक्षितमिति वन्नास्माकमुद्देश्यविशेषणस्याविवक्षानियमः धातोरित्येकत्वस्यविवक्षि
तत्वात् उत्पद्येतसमस्तेभ्योधातुभ्यः प्रत्ययोयदि तदासर्वैर्विशिष्येतद्वन्द्वोत्पन्नसुबर्थवदिति
शब्दान्तराधिकरणेभट्टपादैरभिधानाच्च आर्द्धधातुकस्येड्वलादेरित्यत्रतुयाद्यार्द्धधातुकविशे
षणस्यवलादित्वस्यविवक्षितत्वा

उद्देश्यगतविशेषणस्याविवक्षामीमांसकानामपिसम्मतेत्याह उत्पद्येतेति तदा
सप्रत्ययार्थः सर्वैर्धात्वर्थैर्विशिष्येतेत्यर्थः ननुनेययुक्तिर्विवक्षासाधिका तादृशसमुदायस्यक्रियावचनत्वाभावेनततः प्रत्य
स्यगगनकुसुमायमानत्वेनस्वतएवविवक्षासत्वादत आह आर्द्धधातुकस्येड्वलादेरितीति विवक्षितत्वाच्चेति अन्यथानदुपपत्तेः

वमिति अनुवादान्तरोषणमा ,वादि... [illegible]

पशुर्विधीयते एवंच पशुशब्दस्य विधेयसमर्प्यकतयातदुपस्थितानां केषांचिद्ग्रहणे केषांचित्परित्यागे मानाभावेन पशुत्वपुंस्त्वादि
वदेकत्वमपि यागसाधनत्वेन विवक्षितं तेन नानेकपशुकरणकतया तददृष्टसिद्धिरेवमन्यत्रापि विधेयविशेषणं विवक्षितमत्र विव
क्षाकारणविरहादिति मीमांसकपरिशीलिनां सरणिस्तदनुसरणनियमो नास्माकमित्यर्थः एतच्छास्त्रेन दाश्रयणेऽनिष्टं प्रदर्श
यति रदाभ्यामिति विधानानापत्तेरिति नद्व्येकवचनोपस्थितैकत्वस्यापि विधेयविशेषणतया तद्विवक्षायां नकारद्वयविधा

एवं पशुना यजेतेतिवद्विधेयविशेषणं विवक्षितमित्यपि नियमो न रदाभ्यां निष्ठातो नः पूर्वस्य च द इत्यत्र नकारद्वय
विधानानापत्तेः तथा च भिन्न इत्यत्र नकारद्वयलाभो न स्यात् आद्गुण इत्यादौ एकत्वविवक्षयैवोपपत्तौ एकः पूर्वपर
योरित्यत्रैकग्रहणं वैयर्थ्यापत्तेश्चेति भावः शब्दार्थस्तु संख्या यालक्ष्यानुरोधात्तंत्रानंत्रेय तो मते अतः पश्वेकत्वा
धिकरणोक्तहेतूनामाश्रयणं नास्मात्सिद्धान्तसिद्धमिति आदिनाग्रहैकत्वसंग्रहः ५५॥ नेनस्यादित्यर्थः ननु मास्तु नद्व
यविधानमत आह तथा चेति इदं चैकवाक्यतया विधानमभिप्रेत्य वाक्यभेदेन विधानपक्षे त्वाह आद्गुण इत्यादाविति एकत्वविवक्षयैवे
ति विधेयगुणगतैकत्वविवक्षयैवेत्यर्थः तथा चैकग्रहणमेवोक्तार्थज्ञापकमिति भावः ननु पश्वेकत्वादिविवक्षाहेतूनां जैमिनिसंमतत्वान्न
तदाश्रयणस्यानाकरत्वमित्याशंकामपाकरिष्यन् योजनाप्रदर्शनमिषेणाकरपदार्थं व्याचष्टे शब्दार्थस्त्वित्यादि पश्वेकत्वाधिकरणो
क्तहेतूनामिति पशुना यजेतेत्यत्र विधेयगतैकत्वस्याविवक्षणे पश्वंतरालंभे प्रयोगपशुभावबाधेन यागवैगुण्यापत्तिः गुणानुरोधेन याग
वृत्तौ प्रधानत्वभंगापत्तिर्यावत्पशुकरणकयागासंभवश्चेत्येवमादयो दोषा हेतवस्तेषामित्यर्थः सिद्धान्तसिद्धमिति सिद्धान्तार्थप्रतिपाद

आदेशभेदवारणायेति वस्तुतस्तु नैकग्रहणविधेयगतविशेषणाविवक्षायां तत्र अनयोः पूलयो कटकुर्वित्यादाविवाहुणा
दूत्यादावपि पूर्वपरयोरिति द्वन्द्वनिर्देशे नैकवाक्यतयैवोभयोः स्थाने एकविधानसंभवात्स्थानिभेदान्नानेको गुण इत्येकग्रहणस्य संभा
व्येप्रत्याख्यानादितिरहस्य वाक्यभेदादिति प्राजापत्यानवग्रहाइतिवाक्यविहितग्रहोद्देशेन समार्गो विधीयते ग्रहं संमार्ष्टीत्यनेनत
त्रानुवाद्यग्रहैकत्वविवक्षायामुत्पत्तिवाक्यगतसंख्याया विरोधाद्वाक्यस्य यो भेदो विभिन्नविशेष्यकबोधजनकत्वं तदापत्त्यादीत्यर्थः

ननु विधेयविशेषणविवक्षा आवश्यकी अन्यथा सुध्युपास्य इत्यादावनंतयकाराद्यापत्तेः भिन्न इत्यभनकार इयवर
न्येषामप्यापत्तेः एक पूर्वपरयोरित्यभेकग्रहणं च स्थानिभेदादादेशभेदवारणायेत्यभिप्रेत्याह विधेये भेदकं तत्र मत्यं
तो नियमो नहि [illegible] हैकत्वादि हेतूनामाश्रयणमनाकर भेदकविशेषणं तंत्र विवक्षितम् विधेयविशेषणविवक्षितमित्य
स्तु तथाप्यन्यतोऽनुवाद्यस्य नियमो नहि कचित्तत्रैव कचिन्नेत्यर्थः [illegible] हैकत्वादौ यो हेतु वाक्यभेदादिस्तस्याश्रयणमनाकर

अन्येतु ग्रहं संमार्ष्टीन चैकमित्याकारकवाक्यभेदापत्तिमाहुः आदिपदेनोत्पत्तिवाक्यगतन वत्वसंख्यया ग्रहपदार्थस्य परिच्छिन्नत्वा
दुत्पत्तिविच्छेदकाकांक्षाभावस्य ग्रहमितिद्वितीयपास्वकार्ध्यत्वलक्षणप्राधान्यबोधनात्प्रतिप्रधानं गुणावृत्तिरिति न्यायाद्विनिगम
नाविरहात् संभावनैकनिरासफलकसमार्गस्य सर्वग्रहे रपेक्षणाद्विधेयपश्वादिविशेषणवत्क्रियागतत्वाभावेन तद्वैकस्य मयुक्ता
क्रियावैकस्याप्रसक्तेश्च तद्विवक्षाविरहवीजस्य संग्रहः अनाकरमिति पूर्ववत्

इडागमादेरित्यादिनोदीचामातः स्थानेयकपूर्वायाइति विहितेत्वसंग्रहः तत्राऽऽकारस्थानिकात्प्रदिश्येत्वविधानात् अतएवेसि. षेध विधायकेकाजितिसूत्रःचइत्येकत्वविवक्षादरेणानेकाचुकोपदेशव्यावृत्तिर्यथकङ्क्रिव्याख्याना वस्तुतस्तुषुंहैकत्वदष्टान्तेना

एकत्वविशिष्टंधा तुंबलादित्वविशिष्टमार्द्धधातुकंचोद्दिश्यप्रत्ययेडागमादेर्विधिसंभवादि तिभावः ५५ नन्वेवंभिन्नइत्यत्र नकारद्वयलाभोनस्यादित्याह रदाभ्यांवाक्यभेदेन नका रद्वयलाभतःसतिनैर्वास्तितंतन्नविधेयेभेदकसतुचकारसूचितः न्निष्ठातस्यनः पूर्वदका रस्यचेत इतिवाक्यभेदमादायनकारद्वयलाभइत्यर्थः ५६ इतिवैयाकरणभूषणसारसंख्या ऽऽविवक्षानिर्णयः ॥

त्राप्यनुवाद्यविशेषणानांक्वचिदविवक्षास्तुतदितरविशेषणानांविवक्षायांतुनकिंचिद्बाधकं मीमांसायामनुवाद्योगोजातिलिंगसंख्या तिरिक्तविशेषणस्यादर्शनादेषांचोत्पत्तिवाक्यादेवावगमेनानुषंगिकत्वादविवक्षायुज्यते प्रकृतेतुननयेतिबोध्यम् ॥ इतिभूषणसा रदर्पणेसंख्याविवक्षादिनिर्णयः ॥

अवसरसंगतिं क्त्वाद्यर्थनिरूपणे दर्शयति क्त्वाप्रत्ययादेरिति, प्रकृत्यर्थत्वस्य फलेऽपि सत्वादाह। भाव इति तत्रापि सत्वभूते व्यापार एव ननु पूर्वकालादावित्य
र्थे पाक इत्यादाविव पक्त्वा पक्त्वेत्यादिजन्यबोधे भासेत विलक्षण्यं स्यात् ननु भवादिति भावः वस्तुतस्तु पक्त्वेत्यादिजन्यबोधे भावे लिंगसंख्यानन्वयित्व।
तदनुभूयत एव एवं पक्तुमित्यादौ फलार्थकतुमुना साध्यत्वेन तदोपार्थस्युक्त प्रायमिति का गतिरिति तत्र पूर्वकालस्य इत्या सुपादानात् पूर्वकालादी।
नावान्यता प्रतीयते भावमात्रार्थकत्वे तु तदनुपपत्तिरिति भावः समानकर्तृकत्वादीति तथा च समानकर्तृकयो धात्वर्थयोर्मध्ये पूर्वकालमरर्थीयोः
र्थस्तद्वाचकाः क्त्वादयः यकाशायाकर्तरीत्यस्य प्रसक्तौ तृजाधनार्थवाचित्वाभिभवेभावस्यैव वाच्यतानिर्धार्यते, कर्तुः प्रत्ययविशेषणत्वे तु समानकर्तृ

क्त्वाप्रत्ययादेरर्थं निरूपयति अव्ययकृत इत्युक्तो प्रकृत्यर्थे तुमादय समानकर्तृकत्वादि द्योत्यमेषामिति स्थितिः ॥
५७ तुमादयस्तुमुन्नादय प्रकृत्यर्थे भावे आदिना क्त्वादेः संग्रहः भावे इत्यत्र मानमाह अव्ययकृत इति अव्ययकृतो भा
वे इति वार्तिकादित्यर्थः ननु समानकर्तृकयोः पूर्वकाले इत्यादि सूत्राणां का गतिरत आह समानकर्तृकत्वादीति अयं भावः
भोक्तुं पचति भुक्त्वा व्रजति इत्यादावेकवाक्यता सर्वसिद्धा भोजनपाकक्रिययो विशेषणविशेष्यभावमन्तरेणानुपपन्ना ॥

रीत्यैव ब्रूयात् सूत्रोपात्तानां तु द्योत्यत्वमेव वर्तमानत्वादिवदिति भावः वस्तुतस्तु नद्योत्यतायामपि निर्भरं संसर्गमर्यादयैव तद्लाभसंभवादि
त्याह अयं भाव इति एकवाक्यतेति समानकर्तृकयोरित्यादि सूत्राणां धातुसंबन्धाधिकारीयत्वादिति भाव अनुपपन्नेति विशेष्यविशेषणत्वयोः
संसर्गविषयतानिरूप्यत्वेन संबन्धविनाविशिष्टबुद्धेरसंभवात्संबन्धभानतदन्यतां विनाप्युपपन्नमितिभावः ॥ ७ ॥ २ ॥

अन्यलभ्यत्वादिति अकांक्षानियम्यत्वाद्वाक्यशक्तिलभ्यत्वादित्यर्थः क्रिययोः संसर्ग इति प्रकृत्यर्थविशेषकत्वरूपस्य तस्यासंभवेपि
निरुक्तं यत्तदिह बोध्यमित्यर्थः अत एवेति क्त्वः समानकर्तृकत्वादिद्योतकत्वादेवेत्यर्थः भाष्यप्रतीकमिति इदं कस्मान्न भवति पूर्वं भुंक्ते प
श्चाद्व्रजतीति स्वशब्देनोपात्तत्वादिति भाष्यं तत्र समानकर्तृत्वे न पूर्वकालत्वे न च क्त्व आपादनं ननु विषय इति ननु प्रयोगघटकयत्किंचि
त्पदे बोध्य इत्यर्थः उक्तार्थानामप्रयोग इति न्यायादिति भावः तथा च समानकर्तृकयोरिति निर्द्धारणे षष्ठी पूर्वकाल इति च षष्ठ्यर्थे बहु
व्रीहिरिति कैयटाशयः वाक्यार्थस्तु पूर्वमेवोक्तः न च पूर्वकालस्य पूर्वादिशब्देनाभिधानेत्क्त्वोऽसाधुत्वे पूर्वं भुक्त्वा पश्चाद्व्रजतीत्यत्र क्त्वो

एवं चान्यलभ्यत्वान्न सूत्रात्तेषां वाच्यत्वलाभ इति युक्तमव्ययकृतो भाव इति एवं च प्रकृत्यर्थक्रिययोः संसर्गेणान्वयेग्राह
कत्वरूपद्योतकत्वं क्त्वादीनां अत एव समानकर्तृकयोरिति सूत्रे स्वशब्देनोपात्तत्वान्नेति भाष्यप्रतीकमादाय पौर्वापर्ये
काले द्योत्ये क्त्वादिर्विधीयते न तु विषये इति भाव इति कैयटः ॥ ...उपपत्तिस्तदवस्थैवेति वाच्यं भाष्यकृतैव तत्समाधानात् त
था च भाष्यं नैतत्क्रियापौर्वकाल्यं किं तर्हि कर्तृपौर्वकाल्यमेतत् पूर्वमसौ भुक्त्वान्येभ्यो व्रजितृभ्यः पश्चाद्व्रजतीति अन्येभ्यो भोक्तृभ्यः
पूर्वं भुक्त्वाऽपरेभ्यो गन्तृभ्यः पश्चाद्व्रजतीत्यर्थे साधनान्तरक्रियापेक्षं पौर्वकाल्यमादाय विभाषाग्र इति क्त्वः संभव इति
तदाशयः नव्यास्तु पूर्वकाल इति कर्मधारयः भूत इति तु नोक्तं पर्यायशब्दत्वात् तेन रूपेण बोधनाननुभवाच्च तथा च समानकर्तृक
योरर्थयोर्मध्ये पूर्वकालविशिष्टार्थवृत्तिधातोः क्त्वेति सूत्रार्थः तथा च पूर्वकालः क्त्वार्थो धात्वर्थप्रकार एव अत एव समानकर्तृकत्वे
न पूर्वं भुंक्ते पश्चाद्व्रजतीत्यत्र क्त्वाप्रत्ययमाशंक्य स्वशब्देनोपात्तत्वान्नेति परिहृतं भाष्ये पूर्वशब्दस्य पूर्वकालोऽर्थो न तु धातोस्तत्र वृत्ति

अन्यथेति विशेष्यविशेषणभावमन्तरेणाप्येकवाक्यताभ्युपगमेइत्यर्थः सामानाधिकरण्यमिति एकाश्रयवृत्तित्वमित्यर्थः पूर्वोत्तरभावःस्वोत्तरसमयोत्पत्तिकत्वं स्वपूर्वसमयवृत्तित्वंवाव्याप्यत्वम् अविनाभावित्वम् तुमुनादितेशाब्दबोधदिशमाह तथाचेति भोजनजनिकेति जनकत्वस्यात्रसंसर्गतेतिस्फुटीकर्तुमियमुक्तिः बोधाकारस्तुभोजनविशिष्टैव जनकत्वस्यापदार्थतयाऽप्रकारत्वात् क्रिययोर्जन्यजनकभावस्यापिसंबंधत्वेयुक्तिमाह अतएवेति जन्यत्वस्यसंसर्गत्वाभ्युपगमादेवेत्यर्थः जलपानानंतर्यस्येत्यनेनपूर्वोत्तरभावसंबंधसत्वंबोध्यते त

अन्यथाभुंक्तेव्रजतीत्यादावप्येकवाक्यतापत्तेः तथाच तयोर्विशेषणविशेष्यभावनिरूपकः संसर्गोजन्यत्वं सामानाधिकरण्यंपूर्वोत्तरभावोव्याप्यत्वंचेत्यादिरनेकविधः तथाचभोक्तुंपचति भुक्त्वातृप्यतइत्यादौभोजनजनिकापाकक्रियाभोजनजन्यातृप्तिरितिबोधः अतएवजलपानानंतर्यस्य तृप्तौसत्वेऽपिपीत्वातृप्तइतिनप्रयोगः सामानाधिकरण्यस्यापि संसर्गत्वेनार्थात्समानकर्तृकत्वमपिलब्धम् भुक्त्वाव्रजतीत्यादौपूर्वोत्तरभावः सामानाधिकरण्यञ्चसंसर्गइति भोजनसमानाधिकरणा तदुत्तरकालिकीव्रजनक्रियेतिबोधः॥ २८ ॥

॥ जन्यत्वविवक्षायांतुप्रयोगइष्टएवेतिभावः सामानाधिकरण्यस्य संसर्गताभ्युपगमस्तुयत्रपूर्वापरीभावापन्नभोजनतृप्त्योर्वैयधिकरण्यं तत्र भुक्त्वातृप्यतीतिप्रयोगवारणाय अव्यवहितोत्तरत्वस्यतुदिनान्तरितपूर्वकालवृत्तिसमानाधिकरणभोजनादिक्रियामादायतद्वारणाय व्यवधानञ्चतात्पर्यवशाद्दण्डमुहूर्त्तादिनाग्राह्यम् अतोभोजनानन्तरंदण्डादिव्यवधानेपिनतादृशप्रयोगानुपपत्तिरितिबोध्यम्॥ ॥ २८ ॥ ॥

मनुपूर्वोत्तरभावस्य सम्बन्धताभ्युपगमे ऽध्ययनकाले ऽधीत्य तिष्ठतीति प्रयोगानुपपत्तिः स्थितावध्ययनानन्तर्याभावात् एवं मुखं व्यादाय स्वपितीति न स्यात् ओष्ठपुटविभागरूपव्यादानकाल एव स्वापादिसत्त्वे तादृशप्रयोगस्येष्टत्वेन व्यादानस्य स्वापपूर्वकत्वाभावादत आह अधीत्य तिष्ठतीत्यादि कालविशेषेति विभिन्नकालिकयोः कालिकसम्बन्धघटितव्याप्यव्यापकभावाभावेन तत्सम्बन्धावच्छिन्नत्वस्यापि संसर्गतोपगन्तव्या न केवलं तत्र व्याप्यत्वस्यैव संसर्गता किन्तु सामानाधिकरण्यस्यापीत्याह सामानाधिकरण्यं चेति नातो विभिन्नकर्तृकैककालिकाध्ययनादिकमादायोक्तप्रयोगापत्तिरित्यच समानकर्तृकयोरिति सूत्रविहितक्त्वानस्थले समानकर्तृकत्वरूपसामानाधिकरण्य

अधीत्य तिष्ठति मुखं व्यादाय स्वपितीत्यादौ चाध्ययनव्यादानयोरभावकाले ऽप्रयोगाद्यदा यदा स्थितिः स्वापश्च तदा तदाध्ययनं मुखव्यादानं चेति कालविशेषावच्छिन्नव्याप्यत्वबोधाद्व्याप्यत्वसामानाधिकरण्ये च संसर्गः ६ ॥

संसर्गस्य शाब्दबोधविषयता सार्वत्रिकी जन्यत्वादौ न तु तात्पर्यवशात् क्वाचित्कीसेति भावः अन्ये तु सामानाधिकरण्यस्यैव पूर्वोत्तरभावस्यापि क्त्वाजन्यबोधविषयता सार्वत्रिकी मुखं व्यादायेत्यादौ मुखव्यादानानन्तरमेव व्यादानोत्तरमपि स्वापानुवृत्तेस्तथापि बोधपर्यमादाय प्रयोगोपपत्तिः एवं च पूर्वोत्तरसम्बन्धव्यतिरिक्तसम्बन्धभानस्यैव क्वाचित्कत्वमित्याहुः न चाव्रजान्नास्ति मायस्मारत तेन भविष्यति मत्स्मृतिमनाप्य प्रभो इति त्वाशाशापसेत्यभ्मत्स्मृतिमनाप्य तेऽप्रज्ञानं भविष्यतीत्यर्थो हि भिन्नकर्तृकत्वादपि क्त्वादर्शनात्समानकर्तृकत्वस्यापि क्त्वाजन्यबोधविषयतान सार्वत्रिकीति वाच्यम् स्वरसात्तादृशस्थले स्थित्यादिक्रियामध्याहृत्यानाप्य स्थितेन स्थितिबोधस्याभ्युपगमेन सार्वत्रिकत्वक्षतेरिति ॥

नचेति अनभिहितइति नप्रसज्यप्रतिषेधोवाक्यभेदादिदोषात् नचानुपपत्त्यानत्स्वीकारः वक्ष्यमाणभाष्यविरोधात् तथाचैकेनाभिधानेप्यन्येनानभिधानात्तृतीयापत्तिरित्यभिप्रायेणाह पाकक्रियाकर्त्तुरित्यादि तदभावादिति अभिहितभिन्नत्वादित्यर्थः अतएवेति तत्सूत्रस्थनञः पर्युदासार्थकत्वादेवेत्यर्थः भाष्येइत्यस्यानभिहितसूत्रस्थेइतिशेषः तस्येति समानकर्तृकत्वस्येत्यर्थः द्विवचनप्रकृतिबहुव्रीहिणासमानकर्तृकत्वस्यधात्वर्थविशेषणत्वेनप्रतीयतेनतुविधीयमानत्वादितिभावः तदेवविशदयति अन्यथेति एतत्सू

अनभिहितेभवतीतिपर्युदासाश्रयणात् अतएवप्रासादेआस्तेइत्यत्रप्रासादनक्रियाधिकरणस्याभिधानेप्यास्तिक्रियाधिकरणस्यानभिधानात्सप्तमीतिभाष्येस्पष्टं तस्मात्क्त्वाप्रत्ययस्यकर्तृवाचित्वमावश्यकमिति तन्न सूत्रान्तस्यवाच्यत्वालाभात्समानकर्तृकयोः क्रिययोः पूर्वकालेक्त्वाइत्येवनदर्थात् अन्यथासमानकर्तरीत्येवसूत्रन्यासःस्यात् तृतीयापादनंत्वाख्यातार्थक्रियायाः प्रधानभूतायाः कर्तुरभिधानात् प्रधानानुरोधेनगुणेकार्यप्रवृत्तेर्नसंभवति उक्तंच वाक्यपदीये ॥ तस्यकर्तृशक्तिप्रतिपादकत्वेइत्यर्थः समानेति तदुपादानाच्चकर्तृद्वयस्यैवलाभः न्यासःस्यादिति कर्तरिकृदितिवत् वस्तुतस्तुनतथासम्भवतिकर्तरिकृदितिसूत्रेणैवगतार्थत्वादव्ययकृतोभावइतिवार्त्तिकविरोधाच्चेतिभावः उक्तापत्तिंनिरस्यति तृतीयापादनंत्विति आख्यातार्थक्रियायाइति क्रियाद्वयनिरूपितकर्तृशक्त्योरनेकत्वेपिप्रधानतिङन्तार्थक्रियानिरूपितकर्तृशक्तेराख्यातेनाभिधानेनत्वकृदन्तार्थक्रियानिरूपितशक्तेरनभिहितायाअप्यभिहितत्वातिदेशस्यअनभिधानेत्वनभिहितत्वातिदेशस्यचोक्तभाष्यप्रामाण्येनाभ्युपगमान्नतृतीयापत्तिःप्रकृतेइतिभावः ॥

गृहीतार्थतात्पर्य्यकाद्योग्याद्नाकांक्षाच्च शाब्दबोधादर्शनादासत्त्यादिकमपेक्ष
इत्थं व्याकरणादिना गृहीतशक्तिकपदसमुदायाद्नासन्नाद् गृहीतार्थतात्पर्य्यकाद्योग्याद्नाकांक्षाच्च शाब्दबोधादर्शनादासत्त्यादिकमपेक्ष
क्तिज्ञानजन्यपदार्थोपस्थित्या बोधजननीये सहकारि आसत्तिश्च प्रकृतबोधानुकूलपदाव्यवधानं अस्ति च पर्वतो वह्निमानित्यत्र तादृशप
दाव्यवधानं ननु गिरिर्भुक्तं वह्निमान् देवदत्तेनेति न ततो बोधः अत एव स्थाल्यां तण्डुलं पचतीत्यत्र तण्डुलकर्मकस्थाल्यधिकरणकक्रि
येति बोधेनानासन्नता तद्घटकसर्वेषां पदानां तादृशबोधानुकूलत्वात् स्थाल्यां पचतीत्येतावन्मात्रबोधे तु तं द नासन्नमेव श्लोकादौ तु योग्
जनावाक्यादेव बोधः तत्क्रमेणानासन्नाद्बोधदर्शनात्तज्ज्ञानमेव हेतुरिति संप्रदायः नव्यास्तु मौनिश्लोकादन्वयबोधानुदयप्रसंगान्नोक्ता
व्यवधानमासत्तिः आकांक्षादिसत्त्वे तात्पर्य्यज्ञाने च सति व्यवहिताद्व्यवहिताच्च बोधदर्शनात्तज्ज्ञानविलंबेन शाब्दाविलंबाच्च किन्त्वि

सिद्धान्तनिष्कर्षमाह वाक्यस्फोटोऽतिनिष्कर्षेति स्फुतीति मतस्थितिः साधुशब्देन्तर्गता हि बोधका न तु तत्स्मृताः १ प
द्यपि वर्णस्फोटः पदस्फोटो वाक्यस्फोटः अखण्डपदवाक्यस्फोटौ वर्णपदवाक्यभेदेन त्रयो जातिस्फोटा इत्यष्टौ पक्षाः
सिद्धान्तसिद्धा इति वाक्यग्रहणमनर्थकं दुरर्थकं च॥ इदं पदमेतत्पदेन संभूयान्वयबोधं जनयत्वित्याकारकपदतात्पर्य्यरू

पाभिसंधापयित्रिच्छा सा ननु वक्त्रिच्छा मौनिश्लोकादौ दोषतादवस्थ्यात् शुकवाक्ये तु भगवत्तात्पर्य्यमादायैव गतिरित्याहुः वस्तुतस्तु
सत्यर्थतात्पर्य्यज्ञाने पदतात्पर्यज्ञानविलंबेन शाब्दबोधाविलंबादृत्या पदजन्यपदार्थानामव्यवधानेनोपस्थितिरेवासत्तिः स्वरू
पसत्यन्वयबोधे हेतुः न हि पदार्थानामनुपस्थितावन्वयधीः केनाप्यनुभूयते इति अर्थतात्पर्य्यं त्विदं पदमेतस्मिन्नर्थे परपदार्थान्वयबोध
यत्वित्यभिसंधापयित्रिच्छाविसंवादिशुकवाक्ये तु भगवत एव सा विसंवादिनि तु शिक्षयितुरेव अस्य संशये व्यतिरेकनिश्चये चान्वयाबोधा

तज्ज्ञानमप्यन्वयबोधहेतुः अधिकमग्रे वक्ष्यते शाब्दबोधे योग्यताज्ञानकारणमिति वस्तुतः साकांक्षपदार्थेऽपरपदार्थस्य यादृशसंसर्गवत्त्व
तादृशसंसर्गवत्त्वमेव प्रकृतशाब्दबोधविषयसंसर्गवत्त्वमिति यावत् अस्ति च पयसा सिंचतीत्यत्र सेके पयः करणकत्वस्य संसर्गः अत एव क
रकाभिप्रायप्रयुक्तपयसा सिंचतीति वाक्यं न योग्यं पयःपदार्थकरकायाः सेककरणत्वाभावात् यादृशेति विशेषणाच्चाकांक्षाशब्द इति वा
क्यसमवायसंसर्गमादाय नाभेदान्वये योग्यं अयोग्येप्येतद्भ्रमेणान्वयदर्शनादेतज्ज्ञानस्यापि हेतुता न तु संसर्गस्य वाक्यार्थत्वेन तद्बोधा
त्प्रागनुपस्थित्या कथं तद्बोधस्य तत्र तत्त्वमिति चेन्न हि योग्यताज्ञानस्य शाब्दबोधे निश्चयत्वेन हेतुता भ्रमो येनोक्तदोषो वकाशमासादयेत्
किंतु संशयनिश्चयसाधारणज्ञानत्वेन तस्य च न दोषलेशः पयसा सिंचतीत्यादौ सेकः पयःकरणको न वेति संशयात्मकस्य भूतले घटो नीत्या
दौ च प्रात्यक्षिकनिश्चयरूपस्यापि तज्ज्ञानस्य सौलभ्यात् स्वजन्यशाब्दबोधस्यैवान्वयबोधप्रतिबंधकतया तद्बोधात्तत्संभवात् केचित्तु लौकि
कसन्निकर्षाजन्यदोषविशेषाजन्यतद्धर्मावच्छिन्नप्रतितद्भाववत्ताज्ञानाभावस्य हेतुतया शाब्दबोधस्यापि तत्कार्यतावच्छे
दकाक्रांततया योग्यताज्ञानस्य तद्भावादेव शाब्दबोधवारणे कृते योग्यताज्ञानस्य न हेतुतया कार्यतावच्छेदककोटौ प्रत्यक्षान्यत्वानि
वेशेनैव लौकिकप्रत्यक्षनिरासेपि घटाद्युपनीतभानसंग्रहाय तद्धि स्मृत्याजन्यत्वनिवेशः न च बाधनिश्चयाभावस्यापेक्षया संशयनिश्च
यसाधारणयोग्यताज्ञानत्वेन हेतुत्वे लाघवमिति वाच्यम् स्यादेवं यदि बाधाभावस्य शाब्दत्वं कार्यतावच्छेदकं कल्प्येत किंतु शाब्दबोध
स्य बाधाभावकार्यतावच्छेदकाक्रांततया तद्भाषायां प्रतिषेधामः अत एव घटोऽभिधेय इत्यादावुक्तबाधाप्रसिद्धावपि न क्षतिः तत्संस
र्गावच्छिन्नतत्प्रकारकतद्विशेष्यकत्वादि रूपेणैव तत्कार्यतावच्छेदकत्वात् घटाभावोऽभिधेयत्वप्रतियोगिकत्वसमदृशमादाय तद
भावस्यापि प्रसिद्धेरित्याहुः अत्र वदंति न हि तद्धिमिस्त्र द्विसामान्ये बाधाभावः कारणं किंतु बाधावगाहीच्छासमस्त्रग्राह्यप्रत्यक्षोदय

विशेष्यर

शाब्दबोधेऽसंभवात् नचतथाप्यनुमितिसाधारणप्रतिबध्यतायाः शाब्दबोधसाधारण्यंशंक्यम् तत्साधारणस्यप्रत्यक्षान्यज्ञानत्वस्यप्रति
बध्यतावच्छेदकत्वेप्रत्यक्षान्यत्व ज्ञानत्व योर्व्यभिचारे विशेषणभावविनिगमनाविरहेणानेकप्रतिबध्यप्रतिबंधकभावापत्तेः प्रतिबध्यता व
च्छेदकगौरवापत्तेश्चानुमितित्वस्यैवतदवच्छेदकत्वस्यांगीकरणीयत्वात् अतोबाधाभावस्यस्वातंत्र्येणैवशाब्दबोधंप्रतिहेतुतावाच्यातत्र
चोक्तगौरवेणसंसर्गरूपयोग्यताज्ञानस्यैवहेतुत्वमुचितम् अपिचशाब्दबोधेतदुदन्योन्याभावतदभावव्याप्यवत्ताज्ञानादीनांप्रतिबंधकत्व
कल्पनापेक्षयालाघवाद्योग्यताज्ञानस्यैवहेतुत्वमुचितम् किंचपयसासिंचतीतिशाब्दसामग्रीकालेसेकःपयःकरणकत्वाभाववानितिमान
सवारणायतत्रशाब्दबोधसामग्र्याःप्रतिबंधकत्वकल्पनेगौरवं मन्मतेतत्रयोग्यताज्ञानस्यावश्यकतयाविपरीतज्ञानोत्तरप्रत्यक्षेविशेषद
र्शनस्यहेतुतयातदभावादेवतद्वारणात् विशेषदर्शनसत्वेतुतदभावव्याप्यवत्तानिर्णयरूपप्रतिबंधकसत्वेनशाब्दसामग्र्याएवाभावेनत
यामानसेदूरापत्तेः नचनिर्णयेप्रत्येवविशेषदर्शनस्यहेतुतयाशाब्दसामग्रीकालेमानससंशयवारणायशाब्दसामग्र्याःप्रतिबंधकत्वेक
ल्पनीयेसंशयत्वमनिवेश्यसेकत्वावच्छिन्नविशेष्यकपयःकरणकत्वाभावप्रकारकमानसत्वमेवतत्प्रतिबध्यतावच्छेदकमितिवाच्यंसे
कत्वावच्छिन्नविशेष्यकपयःकरणकत्वप्रकारकमानसेशाब्दसामग्रीप्रतिबंधकत्वांतरस्यकल्प्यतयातेनैवसंशयवारणेनत्संशयेप्रतिबं
धकत्वांतराकल्पनात् नचविपरीतज्ञानोत्तरप्रत्यक्षेविशेषदर्शनस्यहेतुत्वसिद्धावेवयोग्यताज्ञानस्यहेतुत्वसिद्धिरितिवाच्यंगुरुभूतशाब्द
सामग्रीप्रतिबंधकत्वांतरस्यकल्पनायाएवोचितत्वादनयैवदिशाऽऽसाधनत्वादिज्ञानानांप्रवृत्तौहेतुतासिद्धिरित्यलंपरमतानुवर्णनेनघ
टःकर्मत्वमित्याधाराधेयभावेनान्वयेनिराकांक्षवाक्याद्घटीयाकर्मतेतिबोधानुदयादाकांक्षापिसहकारिणीसाचयत्पदेतत्पदसमभि
व्याहारप्रयुक्तंयद्विशेष्यकयत्संसर्गकयत्प्रकारकबोधजनकत्वंतत्पदेतत्पदनिरूपिताऽऽकांक्षायथाघटमानयेत्यत्रघटपदेकर्मता

एवधातुपदेप्या   स्यात निरूपिताकाङ्क्षा श्रानयनानयनंशक्तिरित्यमनानयनानुकूलाकृतिरिति बोध धातावाख्याता समभिव्याहारात् इयमे
वाक्यस्य व्याकरणेन प्रतिपाद्यते तथा च तत्पदे तत्तत्पद पूर्वापरीभावरूपसमभिव्याहार सेति फलति   नाविनायचप्रयुक्तानाकाङ्क्षैकमेत्व
परे ऽतत्पदत्वम मदश्रापो घटीयाकमेते ति बोधोदयेन तज्ज्ञानहेतुर्नतु स्वरूपसतीसा नचजनितान्वयबोधाद्वाक्यान्तुनरपिताट शाब्दबोधा
पनिरुक्ताकांक्षायास्तत्वानीमप्यविकलत्वादितिवाच्यम् प्रकृतान्वयबोधसमानाकारबोधानुपहितत्वस्यापि स्वरूपसत आकाङ्क्षात्वेन
जनितान्वयबोधस्थले तदभावानापत्तसभवात् तात्पर्यविषयत्वरूपप्रकृतत्वेन बोधविशेषणाद्बोधद्वयजायतामिति तात्पर्यसत्त्वे
नजनितान्वयबोधस्यद्वितीयबोधे निराकांक्षत्वस्वसमानेतुकेश्च नजनितावान्तरबोधस्य महावाक्यार्थबोधेनत्वम् अत एवायमेति पुरोर
ज्ञः पुरुषोऽपसार्यतामित्यादौ राज्ञः पुरुषेण सहान्वयबोधजनने सर्वदा निराकांक्षत्वम् नव्यास्तु यत्पदस्य यत्पदव्यतिरेकप्रयुक्ततात्पर्य
विषयीभूतान्वयाननुभावकत्वं तेन सह तस्याकाङ्क्षा अयमेति राज्ञः पुरुष इति वाक्ये राजपुरुषसंसर्गप्रतीतीच्छयोच्चरिते राज्ञ इत्यस्य पुरु
षेणसाकाङ्क्षत्ववारणायान्वयबोधे तात्पर्यविशेषणमेव च न तात्पर्यज्ञानस्य शाब्दबोधे हेतुतया अगृहीतार्थतात्पर्यके निराकाङ्क्ष
त्वज्ञानाभावादेवान्वयबोधापत्त्यभावादित्याहु एवं च शाब्दबोधात्प्रागवश्यक्लृप्ततत्तत्पद समभिव्याहाररूपाकाङ्क्षयैवान्वयरूपवाक्या
र्थभानोपपत्तौ वाक्यस्य तत्र शक्तिर्निष्प्रमाणेति नैयायिका वदन्ति मीमांसकादयस्तु वाक्यस्य तत्र लक्षणैव न तु तत्र शक्तिरिति तन्मतं ख
ण्डयितु स्फोटनिरूपणमित्याशयेन मूलमवतारयति सिद्धान्तेति यद्यपि वक्ष्यमाणप्रकृतिप्रत्ययेषु तत्तदर्थबोधकत्वशक्तिप्र
तिपादकत्वमनुपपन्नप्रकृतिप्रत्ययानामनित्यानां विनाशिनां नावर्णात्मकतया स्थिरत्वेन प्रत्यक्षतयातत्र शक्तिग्रहस्य कथमप्यसंभ
वेनतत्प्रतिपादकस्यास्य शास्त्रस्याप्रामाण्यप्रसङ्गः तत्प्रशङ्कानिराकरणाय स्फोटनिरूपणमित्याह सिद्धान्तनिष्कर्षमिति तथाचोपोद्घा

समाधत्ते तथापीति अन्येषां वर्णादिपंचस्फोटानामित्यर्थः तत्तस्फोटत्वं स्फुटत्यभिव्यक्तीभवत्यर्थोऽस्मादिति व्युत्पत्त्यार्थप्रकाशकत्वं प्र-
काशश्च ज्ञानं तथा चार्थनिष्ठविषयताप्रयोजकशक्तिमत्त्वं पर्य्यवस्यति वर्णस्यैव तत्त्वाभ्युपगमे वर्णस्फोटः पदादीनां तत्त्वाभ्युपग
मे तु पदादिस्फोट इति व्यवहारः अवास्तवत्वेति वर्णस्फोटादीनामाकांक्षानिवर्त्तकत्वाभावा द्वास्तवत्वं शास्त्रीयप्रक्रियानि
र्वाहाय परं सिद्धांते तत्स्वीकारः पारमार्थिकत्वं तु वाक्यस्फोटस्यैवेति भावः विप्रतिपत्तिरिति संशयीयपावत्कोट्युपस्थापकं वाक्यमित्यर्थः ननु
संशयजनकं वाक्यमेव सा परोक्षं ज्ञानं निश्चयात्मकमेवेति प्राचीनप्रवादेन संशयजनकत्वस्य वाक्ये संभवात् विप्रतिपत्तेस्तु संशयजनकवाक्यत्वमेव वि

तथापि वाक्यस्फोटातिरिक्तानामन्येषामप्यवास्तवत्वबोधनाय तदुपादानम् एतदेव ध्वनयति अतिनिष्कर्ष इति इति
मतस्थितिर्वैयाकरणानां महाभाष्यकारादीनां तत्र क्रमेण सर्वांस्तान्निरूपयन् वर्णस्फोटं प्रथममाह साधुशब्द इति ॥

प्रतिपत्तित्वम् तत्तद्भावसहचरितधर्मवद्धर्मिज्ञानस्यैव समानानेकेति सूत्रेण विप्रतिपत्तेरप्याह तैव संशयहेतुत्वोक्तीर्नानादिय
वधेयं मूले असाधुशब्दान्तर्गतवर्णवाचकताविचारस्याप्रसक्तत्वं मत्वाह साध्विति अत्र साध्वंतर्गतवर्णत्वसामानाधिकरण्येन वा
चकत्वादिसाधनेन तद्वाक्यस्य विप्रतिपत्तित्वासंभवः नैयायिकैरपि साध्वन्तर्गतानां केषांचिद्वाचकत्वाभ्युपगमात् तादृशवर्णत्वव्यव-
च्छेदेन वाचकत्वादिसाधने तु वैयाकरणानां परेषां विकरणेषु बाधश्चात आह तत्स्मृताद् इति॥

ननु यद्यप्युक्ते साधुशब्दान्तर्गता वाचकास्तदन्तर्गतवर्णस्मारिता नेत्यर्थलाभादेतद्वाक्यस्य विभिन्नधर्मिबोधकत्वाद्विप्रतिपत्तित्वस्यैवासम्भवः एकधर्मिकविरुद्धकोटिकसंशयजनकस्यैव तत्त्वात्तथाप्यन्यथा सारे साधुशब्दान्तर्गता इति साध्वन्तर्गतवर्णस्मारिता इत्यर्थः. यद्यप्युक्ते साध्वन्तर्गतविपरीतानां पूर्वोक्तवर्णानां वाचकत्वस्य केनाप्यनभ्युपगमाद्बाधसिद्धसाधनयोरापत्तेः तत्स्मारितत्वं च शास्त्रबोधितदृष्टादृष्टिभावनिमित्तनिमित्तिभावान्यतरसंबन्धेनानेनास्याप्यपरिस्यानित्यादीनां संग्रहः विधिकोटिरिति समुच्चयव्याप्यकोटिनाद्य विषयतासंशयेऽप्यावश्यकमिति सूचनायोक्तं कोटिरिति अन्येषामित्यादिकाना तेर्लः कर्मणि स्वौजसमौडित्यादि विहितप्रत्य

साधुशब्दान्तर्गता वाचका नवेति विप्रतिपत्तिः विधिकोटिरन्येषां नेति वैयाकरणानां साधुशब्दे पचति पठति इत्यादिप्रयुज्यमानेऽन्तर्गतास्तिब्विसर्गादय एव बोधका वाचकास्तस्यैव शक्तित्वस्याभ्युपगमात् ननु नै. स्मृताद्यादयः स्वादयश्चेत्यर्थः ॥

॥ यानामेव वाचकत्वमिति त्विसर्गादीनान्वादेशस्मृतिद्वारा बोधकत्वमेव लिपिवदित्यभ्युपगमात्तथा च साध्वन्तर्गतवर्णस्मारितवर्णत्वावच्छेदेन मतभेदेनोभयसाधनान्नोक्तदोष इति भावः यद्यप्युक्तमूलोक्तविप्रतिपत्तिमनुसृत्याह साधुशब्द इत्यादि ननु साध्वन्तर्गतवर्णानां बोधकत्वसाधनेऽपि न वाचकत्वसिद्धिरत आह बोधका वाचका इति तस्यैवेति बोधकत्वस्यैवेत्यर्थः प्रागिति शक्तिनिरूपणावसर इत्यर्थः बोधकत्वसिद्धौ च तदन्यथानुपपत्त्या पदार्थान्तररूपा शक्तिरपि सिद्ध्यति तदभावे तु सापि नेति वाचकत्वसामान्याभावसिद्धिरिति भावः ॥

नैयायिकमतं दूषयितुमुपन्यस्यति यत्त्विति वाचकत्वाभावे प्रयोजकमाह तेषामिति बहुत्वेनेत्युपलक्षणमनुगमकधर्माभावस्या पि तिङ्त्वसुप्त्वादीनामेकवचनत्वादिवदनुगमकत्वासंभवात् तिङ्त्वाद्युपस्थितिं विनापि कृत्याद्यर्थोपस्थितेर्व्यभिचारेण शक्यतानवच्छेदकत्वाच्चेति बोध्यम् ननु तिबाद्यादेशिनामपि तत्तदनुबंधभेदेन नानात्वान्नोक्तरीत्यातेषां वाचकत्वमत आह एषामिति अनुप्रयुज्यमानधातूत्तरैधादिनापि तदर्थबोधोपपत्तेर्नोक्तदोषः तत्राह अस्तेति आदिनाऽद्यतिघ्योलिङ्धुगित्यादिसंग्रहः लुगादेरित्यादिना लुब्लोपयोः सः तैरिति आदेशैरित्यर्थः उक्तदोषमाशंक्याह लत्वस्येति जातिरूपतयेति लडादिलेषु लत्वस्यानुगतप्रतीत्या तत्सिद्धिरित्यभिप्रायः नव्या॥

यत्तु प्रयोगांतर्गतास्तिबादयो न वाचकास्तेषां बहुत्वेन शक्यानंत्यापत्तेः एधांचक्रेऽस्तेत्यादावादेशभूतलुगादेरभावरूपं स्य बोधकत्वासंभवाच्च किंतु तैः स्मृता लकाराः स्वादयश्च वाचकाः लत्वस्य जातिरूपतया शक्यतावच्छेदकत्वौचित्यात् अव्यभिचाराच्च आदेशानां भिन्नतया परस्परव्यभिचारित्वात् लः कर्मणीत्याद्यनुशासनानुगुण्याच्च न ह्यादेशेष्वर्थबोधकमनुशा ॥सनमुपलभामहे इत्याहुः

लुशक्यतावच्छेदकतया तत्सिद्धिः सर्वलकारसाधारणलत्वस्यातिप्रसक्तत्वाद्यलकारमात्रवृत्तेलुशक्तिपक्षे तत्पूर्वमनुपस्थितेश्च लत्त्यादौ लतिबोधापत्त्या तस्य शक्यत्वावच्छेदकत्वासंभवाच्च तिप्त्वतस्त्वादिकमेव तदवच्छेदकमित्याहुः तथाचोक्तविप्रतिपत्तेः प्राचीनैः सह विवाद एवेति बोध्यम् अव्यभिचाराच्चेति लत्वावच्छिन्नशक्तिग्रहस्य कृतिबोधात्पूर्वं नियमेन सत्त्वात् तिदीनां शक्यतावच्छेदकत्वे तु तदवच्छिन्नशक्तिग्रहं विनापि तत्सादृश्यशक्तिग्रहवतस्तद्बोधेनादेशवाचकतावादिमते व्यभिचारो दुर्वार इतिभावः ननु कार्यतावच्छेदककोटावव्यवहितोत्तरत्वनिवेशान्नेयमापत्तिरत आह लः कर्मणीतीति इत्याहुरिति तथाचादेशानामेव

स्वसाधकेति स्वमतपरिपोषकेत्यर्थः व्यवस्थितेरित्यादिपूर्वमन्तश्रयस्यपूर्वकारिकास्थबोधकपदार्थेऽन्वयमदर्शयन्नादौव्यवस्थितेः
रित्येतद्विवृणोति व्यवस्थानुरोधादितिप्रमाणेनपदार्थनिर्द्धारणव्यवस्थानदन्यथानुपपत्तेरित्यर्थः शक्तिभ्रमादिति लत्वावच्छिन्न
निष्ठवाचकत्वस्यतत्रारोपादित्यर्थः मानाभावादिति विषयबाधस्यैवभ्रमत्वेनतत्रतप्रसक्तेर्बोधकत्वशक्तेस्तत्राबाधादिति भावः न
न्वादेशानामवहुत्वमेवतत्रशक्तिस्वीकारेवाचकमतन्त्रात्वादेशिनामपीति वैयाकरणैःशाकटायनप्रभृतिभिःव्यवस्थेति इदमेव

तान् स्वसाधकयुक्तिमिति रागचष्टेव्यवस्थितेर्व्यवाहृतेस्तदनुव्यापतस्तथा किञ्चारव्यातेनशब्दात्रैव्यवस्थार्यतेयदि १
कथकर्त्तुर्वाच्यत्ववाच्यतेतद्विभावय व्यवस्थानुरोधात्प्रयोगान्तर्गताएववाचकाः जनुनत्स्मृताइत्यर्थः तथाहि
पचतीत्यादौलकारमविदुषोबोधान्नतस्यवाचकत्वं नचतेषांतिङ्क्षुशक्तिभ्रमाद्बोधस्तस्यभ्रमत्वेमानाभावात्
न आदेशिनामपितत्तद्वैयाकरणैः स्वेच्छयाभिन्नभिन्नानामभ्युपगमात् कः शक्तः कोनेति व्यवस्थानापत्तेश्च सर्वे
षांशक्तत्वेगौरवव्यभिचारश्चास्त्येव आदेशानांप्रयोगान्तर्गततयानियतत्वात्युक्तं तेषांशक्तत्वं तथाचादेशिस्मरण
५ कस्यनातेति लाघवम्

वाचकमिति निर्द्धारणानुपपत्तेरित्यर्थः अनुशासनस्यपूर्वमपिसत्त्वादिति भावः सर्वेषामित्यस्यवि
निगमकाभावादित्यादिः ननुतथाप्यादेशापेक्षयाऽऽदेशिनामस्तत्वेनतत्प्रयुक्तलाघवादादेशिष्वेववाचकत्वंसेत्स्यतीत्यतआह व्यभि
चारश्चेति ननु विनिगमनाविरहादेवादेशिनांवाचकतासिद्धितश्चादेशानामिति, तथाचगौरवादिदोषस्यतत्परिहारस्यचोभयोः
साम्येप्यादेशिस्मरणकस्यनाविरहप्रयुक्तलाघवसहकृतप्रयोगनैयत्यसेवादेशानांवाचकत्वेविनिगमकमित्यस्यस्वडसार्थ ॥ ५ ॥

ननु बोधकतायाः शक्तित्व एव भवदुक्तव्यवस्थोपपत्तिः न च बोधकत्वस्य शक्तित्वं तन्मते सिद्धं किंतु संकेतस्य पदार्थो नारस्य वा तत्त्वम् तथा चानुशासनेन यत्र सा प्रतिपाद्यते तत्रैव तदंगीकारेण कथं तिबादिषु तत्सिद्धिः स्मरणकल्पनागौरवं तु प्रामाणिकत्वादपि न दुष्टमि त्यस्वरसात्प्रयोगे श्रूयमाणानां तिबादीनां वाचकत्वे साधकांतरमुपन्यस्यतीत्याह साधकांतरमिति मुख्यमिति मुख्यत्वं च तस्मिन् शक्ति ग्राहकांतरनिरपेक्षत्वम् व्याकरणादिना शक्तिग्रहे नियमेन तद्ग्राहकांतरापेक्षणात् सर्वेति व्यवहारजन्यशक्तिग्रहश्चेत्यर्थः तिङा दिष्वेवेति व्यवहारेण पूर्ववाक्ये तद्ग्रहे प्यावापोद्वापाभ्यां पश्चात्तद्घटकतिङादिष्वेव तन्निर्णयादिति भावः ननु प्रयोगांतर्गतवर्णेषु सर्वसिद्धव्यवहारेण शक्तिग्रहे घटमानयेत्याद्यंतर्गतशबादीनामपि वाचकत्वा पत्तिर्न च सेष्टा विकरणानां नैरर्थक्यमिति सिद्धांत

साधकांतरमाह व्यवहृतेरिति व्यवहारस्तावच्छक्तिग्राहकेषु मुख्यः स च श्रूयमाणतिङादिष्वेवेति त एव वाचका इत्य र्थः किंच तद्धेतुत्वाय तत्त्वलकारस्य बोधकत्वे मूलद्रूत्यतोपि बोधः स्या ॥ व्याकोपात् किंचानयनादिव्यवहारस्य लोडा द्यंतप्रयोगं विनाऽसंभवेन तादृशप्रयोगांतर्गतवर्णानां तेन तत्त्वसिद्धावपि तद्घटितवाक्यांतर्गतवर्णेषु वाचकत्वमनुशासनेनैव स्वी तथा च तत्रादेशिनां वाचकत्वसिद्धावन्यत्राप्यादेशिषु साकल्येनास्वरसादाह किंचेति तद्धेत्विति तद्धेतोरेव तत्त्वे किं तेनेति न्यायाका ऽलाघवमूलकश्चायं न्यायः उभयोर्हेतुत्वे गौरवात्तं संगमयति लकारस्येति बोधापत्तिरिति भवनकर्तृबोधापत्तिरित्यर्थः न केवलेति न्यायात्केवललकारस्य प्रयोगानर्हत्वाद्भूद्रत्युक्तं लकारदशायां शपो ऽसंभवात्तु भवतीत्युपात्तं तथा च भवतीत्यत्रानुसंहितात्लकाराद्य था कर्तृबोधस्तथा भन्यस्य श्रुतलकारादपि कर्तृबोधापत्तिरिति भावः न चासाधुत्वज्ञानं प्रतिबंधकं शक्तत्वरूपसाधुताया अपिस त्वादपभ्रंशादपि बोधोदयेन तदीयज्ञानस्या

प्रतिबंधकत्वाच्चेति भावः॥

पदस्फोटनिरूपणउपजीव्योपजीवकभावस्यापिसंगतित्वंसूचयन्मूलमवतारयति एवमिति उक्तरीत्येत्यर्थः आदेशानामपिकेषां चित्प्रयोगानंतर्गतत्वादाह तिङ्विसर्गादयइति प्रयोगांतर्गतवर्णाइतियावत् ननुतादृशयावद्वर्णानांवाचकत्वंकथंपदस्फोटः सिद्धिरतोभावार्थमाहायमिति समभिव्याहृतंनूक्तार्थे सि इइति आनुपूर्वीविशिष्टतावतांवर्णानामवाचकत्वे आनुपूर्वीरूपप दस्यवाचकत्वाशादुराशेतिभावः ननुसमुदायस्यप्रत्येकानतिरिक्तत्वेनवाचकतायाः प्रत्येकवर्णविश्रामोवाच्यस्तथाचकथं

एवमादेशानांवाचकत्वेसिद्धेपदस्फोटोपिसिद्धएवेत्याहअथेतिआदेशास्तिबुविसर्गादयः अयंभावःसमभिव्या हृतवर्णानांवाचकत्वेसिद्धेतादृशवर्णसमभिव्याहाररूपपदस्यवाचकतासिद्धातिप्रतिवर्णमर्थस्मरणानुभ वविरुद्धत्वात् प्रत्येकंवर्णानामर्थवत्त्वेनप्रातिपदिकत्वापत्तौनलोपः प्रातिपदिकांतस्येत्यादिभिर्धनंवनमित्या ११ दौनलोपाद्यापत्तेश्च ॥

समुदितताहशवर्णरूपपदस्यवाचकतेत्यतः प्रत्येकवर्णवाचकतांनिरस्यति प्रतिवर्णमि ति अनुभवविरुद्धत्वादितिघटशब्दादमुमर्थंप्रत्येमीत्येवप्रतीतेरित्यर्थः साधकान्तरमप्याह प्रत्येकमिति अर्थवत्त्वइति तद भ्युपगमइत्यर्थः नलोपादीत्यादिनाजश्त्वादिपरिग्रहः तथाचसमुदितानामेवतेषांवाचकत्वमभ्युपेयं तत्रचोक्तयुक्त्यातत्स मुदायस्यवाचकत्वनिराबाधः सएवचास्माकंपदशब्दव्यपदेश्यइतिभावः ॥

ननु प्रत्येकवर्णानां वाचकत्वस्य गौरवपराहतत्वादेवासंभवात्समुदायस्यैव तत्स्यादित्यादेशाद्वाचकाश्चेति समभिव्याहृ-
१० तवर्णानां वाचकतायां हेतुत्वोपन्यासो विफलः उन्मत्तप्रलपितत्वशङ्कायास्तत्रावसरेणैव निरासादित्यत आह एतच्चेति समभि-
भिव्याहृतवर्णानां वाचकत्वोपन्यसनं चेत्यर्थः, चरमवर्ण एवेति पदान्ते श्रूयमाणवर्ण एवेत्यर्थः. एवकारेण पदघटा-

एतच्च चरमवर्ण एव वाचकत्वशक्तिः शक्तेर्व्यासज्यवृत्तित्वे मानाभावात् पूर्वपूर्वव-
र्णानुभवजन्यसंस्कारसहकृत चरमेणार्थधीजनने सहकारिण इति न तन्मात्रोच्चारणादर्-
थधीरिति वर्णस्फोटवादिनां मतान्तरस्य दूषणायोक्तम्. ॥ ६० ॥ ६० ॥ ६० ॥

कतत्पाक्तनवर्णव्युदासः. तत्र हेतुमाह शक्तेरिति स्वरूपसंबंधात्मिकाया बोधकारणताया पर्याप्तत्वासंभवाच्चरमवर्णा-
देव बोधोदये नान्यत्र तत्त्वे मानाभावादिति वार्थः ननु तस्यैव वाचकत्वे तन्मात्रश्रवणादर्थबोधापत्तिरत आह पूर्वे
पूर्ववर्णेति तत्पदघटकपूर्वपूर्ववर्णेत्यर्थः मतान्तरेति समभिव्याहृतवर्णानामवाचकत्वेन तत्समुदायरूपपदस्यैव
तु एव वाचकत्वमिति यन्मतान्तरं तत्खंडनायेत्यर्थः उक्तमित्यस्य मूलदूतिशेषः अर्थबोधापत्त्येति चरमजनेय मापत्ति

तस्मादिति स्थानिनो लकारस्योभयत्रैक्यादिति भावः नव्यनैयायिकनये तु नेयमापत्तिः तैः प्रयोगान्तर्गततिबादीनामेव वाचकताया अभ्य-
भ्युपगमात् धातुप्रत्ययलोपस्थले तु तदर्थबोधोपपादनं तूभयोः समप्रयत्नकमित्यवधेयं इत्यस्त्विति तथा च तदुभयशक्त्यैव कर्-

लकारस्यैव वाचकत्वे कृत्तिङोः कर्तृभावनावाचकत्वव्यवस्था न सिद्धा तस्मादित्याह किंचे
ति आदेशानां वाचकत्वे च तिङ्त्वेन भावनायां शानच्त्वादिना कर्तरि शक्तिरित्युपपद्यते वि
भाग इति भावः नच शानजादौ कृतिर्लकारार्थः आश्रयः शानजर्थ इत्यस्तु कर्तरि कृदित्य-
नुशासनादिति शंक्यम् स्थान्यर्थेन निराकांक्षतया शानजादौ कर्तरीत्यस्याप्रवृत्तेः अन्य
था घञादावपि प्रवर्तेत ६०॥

र्तृलाभः शक्त्याश्रयस्यैव कर्तृत्वादिति भावः अन्यथेति अनाकांक्षेपि शास्त्रप्रवृत्ताविन्यर्थः शक्ततावच्छेदकभेदस्य तत्रापि स
त्त्वादिति भावः॥

सामानाधिकरण्यानुरोधादिति शानचः कृतिवाचकत्वे सर्वानुभवसिद्धाभेदान्वयबोधानुपपत्तेरित्यर्थः लडादेशत्वबोधनफलं ध
त्वर्थे वर्त्तमानत्वप्रतीतिरेवेति बोध्यम् पचतिकल्पमिति इदं च स्वाद्यन्तं नामेति मतमनुसृत्य सत्वप्रधानानि नामानीति निरुक्ताद्द्रव्य
विशेष्यकबोधजनकत्वं नामत्वम् तदेव च नामार्थयोरिति व्युत्पत्ति घटकं अत एव निपातार्थस्य भेदान्वय इति मते नेदं दूषणमि

देवदत्तः पचमान इत्यादि सामानाधिकरण्यानुरोधाच्छानच कर्त्तावाच्यः स्यादित्याशङ्क्याह नरवाचनतिङ्क्ष्व
सिनामताकृत्स्विवस्युः नामार्थयोर्भेदोपि तस्मात्तुल्योऽवधार्यताम् ॥ अयादेशावाचकाः स्वीत्यत्र स्फोटस्तत्र स्फुटः
पचति तरां मैत्र पचतिकल्पं मैत्र इत्यादिषु नामार्थत्वाभेदान्वययोः सम्भव एवेति कर्त्ता वाचकता स्यादिति भावः तत्व प
चतिकल्पमित्यत्र सामानाधिकरण्यानुरोधात्कर्त्तरि लक्षणा पचमान इत्यत्राप्युपपत्तेरिति ल. कर्मणीत्यनुशासनं च
लाघवात्कल्पिते लकारे कर्त्रादिवाचित्वकल्पितमादाय सङ्गतम् इति वर्णस्फोटनिरूपणम् ॥
॥ तिङ् परे लक्षणेत्यस्य लस्येतिशे
षः आपत्तेरिति न च सा तत्वे ष्टेति भाव तस्मादेशानां वाचकत्वे आदेशिशक्तिप्रतिपादकस्य लः कर्मणीत्यादि सूत्रस्य आनर्थक्यमत आह ल. क
र्मणीति उक्तमिति आस्यातशक्तिनिरूपणावसर इति शेष एवं च प्रयोगे श्रूयमाणप्रकृतिप्रत्ययघटकवर्णेषु शक्तिर्वर्णस्फोट
ति पर्यवसन्नम् इति भूषणसारदर्पणे वर्णस्फोटनिरूपणम् ॥

उद्बोधकतत्कल्पेदूषणा। नारमप्याह रामोऽस्तीत्यादि समधानस्य फलानुमेयत्वेन नादृशस्थले फलाभावेनोद्बुद्धसंस्काराभावादिति बोध्यम् ननु मभिव्याहारो न समूहः वर्णानां क्रमिकाणामाशुविनाशिनां च तत्संभवात्तत एवाव्यवहितोत्तरत्वसंबंधेन न पूर्वपूर्ववर्णवत्त्वं पूर्वपूर्ववर्णस्ये चाभावात् नापि वर्णसमवेतं पदं यौनर्मानाभावात् अन्यथा तादृशधर्मानुगतीकृतवर्णानां वाचकत्वेनैवोपपत्त्या पदस्फोटस्य निरालंबनता पत्तेः पदप्रयुक्तकार्याणां वर्णेष्वेव दर्शनाच्चेति कथं पदस्फोटसिद्धिरित्यत आह दिगिति तदर्थस्तु वर्णसमुदायः पदं न वर्ण इति

रामोऽस्तीति वक्तव्ये राम इत्यनंतरं घटिकोत्तरमकारोच्चारणेऽर्थबोधा
पत्त्या तादृशानुपूर्व्या एव शक्ततावच्छेदकत्वौचित्यादिति दिक् ॥६१॥

प्रतीतेर्वर्णातिरिक्तपूर्वापरीभूततत्समुदायात्मकपदस्वीकारस्यावश्यकः अत एव पदे वर्ण इति व्यवहारोऽपि स्वरसतः संगच्छते नित्याश्च वर्णास्तेषु पौर्वापर्य्यञ्च पूर्वपूर्ववर्णानुसंधानस्याव्यवहितोत्तरत्वसंबंधेनोत्तरोत्तरवर्णानुसंधाने वाक्यस्फोटवक्ष्यमा णरीत्या सत्त्वात्तेन स्वविषयकानुसन्धानविशिष्टानुसन्धानविषयत्वरूपमिति नानुपपत्तिरिति यथा चैतत्तथा वाक्यस्फोटनिरू पणे वक्ष्यत इति तथा च वर्णसमुदायो वाचक इति पदस्फोटपक्षे पर्य्यवस्यति

पारिभाषिकेति शास्त्रकारसंकेतितेत्यर्थः पूर्वंतु प्रकृतिघटकवर्णसमुदायरूपस्य प्रत्ययघटकवर्णसमुदायरूपस्य च तस्यवाचक
तोक्ता इदानीन्तूभयसमुदायस्यैव सेति भेदः घटेनेति घट इति प्रकृतिरेनेति प्रत्यय इति प्रकृतिप्रत्यययोर्विभागस्य ज्ञानासंभ
दितियोजना सर्वे सर्वपदेति वर्णनित्यताप्रतिपादकभाष्यमेतत् वत्ससादेरपि पक्षत्वादाह व्याजेनेति तथा च निश्चितसाध्यवं
त्वस्यैव दृष्टान्तत्वे तत्त्वेन तस्य पक्षभिन्नत्वाभावेपि न दृष्टान्तत्वमनुपपन्नमिति भाव तत्रावत्ससादिस्थले विभागस्तन्निर्णय
अस्य वैयाकरणानामपीति शेषः परेतु आमादौ प्रत्ययत्वस्य दृष्टत्वेन वा मित्यादावामो वद् इत्यादेर्वसादेः प्रत्ययत्वमितरं शस्यप्र

सुप्तिङन्तं पदमिति परिभाषितपदस्य वाचकत्वं स्वीकर्तॄणां मतमाह घटेनेत्यादिषु नहि प्रकृत्यादिभिदा स्थितावत्
त्ससादाविवेहापि सम्मोहो हि दृश्यते २ घटेनेत्यादौ घट इति प्रकृतिर्नेति प्रत्यय इ इति प्रकृतिरेनेति प्रत्यय इति
विभागस्य सर्वे सर्वपदादेशा इति स्वीकारे विशिष्य प्रकृतिप्रत्यययोर्ज्ञानासंभवान्न वाचकत्वमित्यर्थः वैयाकरणे
विभागः सुत्रे यद्यपि न दृष्टान्तव्याजेनाह वत्ससादाविति बहुवचनस्य वत्ससावितिसमुदायस्यादेशविधानान्ना
ऽपि तद्विभागः संभवतीत्यर्थः

कृतित्वमनुमातुं शक्यमित्युक्तरीत्या न प्रकृतिप्रत्ययसमुदायरूपपदस्य वाचकत्वसिद्धिः
घटेनेत्यत्र तु न शब्दस्यादेशत्वं भाष्यकृतैवोक्तमिति न तत्र विभागासिद्धिरप्यपर्याप्तचक्रादित्यादौ गत्याशिष्यमाणं तु प्रमाण
योऽभिधायीति न्यायात्प्रकृतेरेव वाचकताः सु यानत्रापि सुप्रप्रत्ययानुसंधानाद्बोधः प्रकृतेः स्वार्थविशिष्टमन्यपार्थेलक्षणाया सर्वे
सर्वपदादेशा इत्यपि वर्णानित्यत्ववादिनां दुराग्रहमित्याहुः॥

युक्तेरैक्यात्कमशश्च वाक्यस्फोटनिरूपणमित्याशयेन मूलमवतारयति सुप्तिङन्तेति तेन तत्वाचकत्वं समुदाय इति पदसमुदायरूपे वाक्य इत्यर्थः एवमिति वाक्यशक्तिवदित्यर्थः विशिष्य सूत्रोपात्तरूपेण अज्ञायमानेष्वित्यनेन तन्निष्ठबोधकत्वज्ञानासंभवः सूच्य तेसमुदायव्युत्पत्त्येति समुदायस्य वाचकत्वग्रहेणेत्यर्थः बोधेत प्रकृत्यर्थविशिष्टप्रत्ययार्थबोधादित्यर्थः तत्रापि सुप्तिङन्तरूपपदे पि शा क्तिरिति तत्कल्पनेत्यर्थः ननु घटेनेत्यादिमूलेन समयुक्तिकस्फोटद्वयोपादानात्कथं पदस्फोटसाध्येवाक्यस्फोटस्य दृष्टांतत्वं किंच प्रथमं पदस्फो

सुप्तिङन्तचयरूपवाक्यस्यापि तदाह हरेवेत्यादिदृष्टाच वाक्यस्फोटं विनिश्चिनु अर्थे विशिष्य संबंधाग्रहणं चेत् समं पदे लक्षणादधुना चेत्तत्र देय यर्थं सुनत्तया हरेवविष्णोवेत्यादौ पदयोरेङः पदान्तादतीत्यकारे शसति ततद्विभागः सुज्ञानः तथा च प्रत्येकं पदाज्ञानेपि समुदायशक्तिज्ञानाच्छाब्दबोधात्समुदायेप्यावश्यिकी शक्तिः एवं प्रकृतिप्रत्ययेषु विशिष्याज्ञायमानेष्वपि समुदायव्युत्पत्त्या बोधात् तत्राप्यावश्यिकैव शक्तिरिति भावः वस्तुतः पदे पदार्थबोधवद्वाक्ये न वाक्यार्थबोध इति पदार्थशक्तिः पदेष्विव वाक्यार्थशक्तिर्वाक्ये भ्युपेयेति पदस्फोटं वाक्यस्फो टोऽव्यवस्थितौ

टासिद्धौ तदर्थसंबंधरूपवाक्यार्थाप्रसिद्ध्या वाक्यशक्तिकल्पनावसर इत्याद्यपरितोषात्पदस्फोटमेव दृष्टांतीकृत्य वा क्यशक्तिं साधयति वस्तुत इति तथा च यत्र पदोपस्थित्या पदशक्तिग्रहसंभवस्तत्र पदसत्त्वेव वाक्यार्थबोधो यत्र तदसंभवो हरेवेत्या दौ तत्रानन्यावाक्यस्यैव शक्त्यैव शक्तो बोध इति यद्यपि व्यवस्थिता विति पदमहिम्ना पक्षद्वयं व्यवस्थितमिति लभ्यते तथापि आ वश्यकवाक्यस्फोटेनैवोपपत्तौ पदस्फोटकल्पनं नावश्यकमिति सिद्धांतवाक्यस्फोट एव पर्यवस्यतीति बोध्यम्॥

वाक्यस्फोटस्यावश्यकतामेवदर्शयति अन्यथेति वाक्यशक्त्यनभ्युपगमे इत्यर्थः तादृशेति वाक्यार्थबोधजनकत्वरूपवाक्यशक्तिज्ञान
रहितस्यापीत्यर्थः तत्सत्त्वे पुनस्तत्रापि बोध इष्ट एवेति भावः बोधप्रसंग घटकर्मकानयनानुकूलकृतिबोधापत्तिरित्यर्थः पदत्वनिश्चा
न जन्यपदार्थोपस्थितेः सत्त्वादिति भावः घटमानयेत्यत्रेवेति अत्र तादृशव्युत्पत्तिरहितस्येत्यनुषज्यते ननु शाब्दबोधकारणीभूत
तात्पर्यज्ञानरूपपदकार्यकारणाभावादेव न बोधोऽतस्त्राह सत्यपीति बोधाभावादिति तादृशबोधाभावादित्यर्थः तथाच पदभावा

अन्यथा घट कर्मत्वमानयनं कृतिरित्यादौ तादृशव्युत्पत्तिरहितस्यापि बोधप्रसंग घटमानयेत्यत्रेव पदार्था
नामुपस्थितेः सत्त्वात्तात्पर्यज्ञाने बोधाभावाच्च तत्रैव घटकर्मकमानयनमिति बोधे घटार्थकप्रातिपदिकोत्तर
कर्मत्ववाचकविभक्तेस्ततो धातोस्ततस्त्याख्यातस्य समभिव्याहार कारणमितिकार्यकारणभावज्ञानवतो बोधजन
नमपि रेतु रितिचेन्नहि सिद्धो वाक्यस्फोट घटादिपदार्थबोधे बोधकतारूपपदशक्तिज्ञानकार्यकारणभावस्येव वि
शिष्टवाक्यार्थबोधे पद समभिव्याहाररूपवाक्यनिष्ठबोधकतारूपवाक्यशक्तिज्ञानस्यापि हेतुत्वकल्पनात् ॥ ५ ॥

त्कार्य्याभानस्तस्य तद्धेतुतया वाक्यशक्तिरावश्यकेति भावः एतेन व्यतिरेकसहचारकारणताग्राहकः प्रदर्शितः अन्वयंप्रदर्शयन्
वाक्यशक्तिं व्यवस्थापयति जन्येवेति घटमानयेत्यत्रैवेत्यर्थः बोधादित्यनेन स्वरूपसतो हेतुत्वव्यवच्छेदः तादृशसमकालस्थनिष्ठ
बोधहेतुमस्येवा स्मन्मनेवाक्यशक्तित्वेनाकांक्षाशक्तिरिति परिभाषाभेदेपि वाक्यस्फोटसिद्धिर्निरपवाधेत्याशयेनाह मयेति ॥

ननु शाब्दबोधे हेतुत्वं र्थोपस्थितिजनकत्वं शक्तित्वं ननु पद एव न वाक्ये तन्निष्ठबोधकतायास्तादृशोपस्थित्यजनकत्वाद तत्राह अर्थोप
स्थापकेति शाब्दवृत्तीति शाब्दनिष्ठं यद्बोधकारणत्वमित्यर्थः तथा चोपस्थितौ शाब्दहेतुत्वनिवेशे एतत्कल्पे प्रयोजनाभावेन तज्ज्ञान
स्य तादृशोपस्थित्यजनकत्वेपि शक्तितात्क्षतेः बोधकशब्दस्य शाब्दत्वेन निवेशाच्चापभ्रंशस्यापि संग्रह इति भावः ननु वाक्यशक्तिवा
दिमते संसर्गरूपवाक्यार्थस्य नानात्वात् तद्भेदेन शक्त्यानंत्यम् किंच पदवृत्त्या वाक्यशक्तिं विनापि वाक्यार्थबोधजननाद्वाक्यशक्तिग्र
हस्य तद्धेतुतायां व्यभिचारः अखण्डवाक्यपक्षस्तु नेदानीं प्रक्रान्तः कार्य्यतावच्छेदकेव्यवहितोत्तरत्वानिवेशेन तद्धारणेप्यनुपस्थितसं
सर्गे वाक्यशक्तिग्रहः शाब्दबोधात्प्रागसंभवीति कथं तस्य कारणतेति चेन्न सत्यं संसर्गस्य विशिष्यानुपस्थितावपि तदादिवत्का
अर्थोपस्थापकज्ञानविषयशब्दवृत्तिज्ञानकारणत्वस्यैव शक्तित्वात् युक्तं चैतत् विषयतासंबंधेन शाब्दबोधमात्रे वृत्तिज्ञान
स्य लाघवेन हेतुत्वसिद्धेः विवेचितं चैतद्दूषणे॥ ११ एकविभक्तिविशिष्टधातुपदकारकविशिष्टक्रियाबोधकमिति सामान्यतः
स्तद्ग्रहात् तात्पर्य्यग्रहस्य त्वयाप्येवमेव वाच्यत्वात् अनंतरपदविशेषसमभिव्याहारेण तात्पर्य्यवशात्संसर्गविशेषेण तत्कारका
विशिष्टतत्क्रियाभानं नापि संसर्गानंत्यप्रयुक्तशक्त्यानंत्यम् — — — संबंधत्वस्यानुगमकस्य सत्वात् तत्पदघटितसमभि
व्याहारस्य नियामकताप्युभयोः समैवेति तन्मतनिष्कर्षः ननु स्यादेवोक्तप्रकारेणैव वाक्यनिष्ठबोधकतायाः शक्तित्वं सप्रमाणंस्या
त्तदेव तु नेत्यत आह युक्तं चैतदिति एतत् वाक्यनिष्ठबोधकत्वस्य शक्तित्वम् युक्तिमेवाह विषयतेति शाब्दबोधमात्रे तत्सामान्य
मर्थः वृत्तिज्ञानस्येति वृत्तिज्ञानजन्योपस्थितेरित्यर्थः विषयतासंबंधेनेत्यनुषज्यते लाघवादिति अन्यथा घटपदशक्तिमवि

दुपलक्ष्यत्वानवतो घटमानयेति वाक्याद्बोधापत्त्या घटशाब्दबोधे घटार्थकपदवृत्तिज्ञानजन्योपस्थितित्वेन हेतुतावाच्यत्वात्पर्यभेदे नानंत
कार्यकारणभावकल्पने गौरवम् अस्मन्मते तु विषयतासंबंधेन घटवृत्तिज्ञानजन्योपस्थितेः सत्त्वान्न शाब्दे तस्य भानमित्येक एव का
र्यकारणभावः कल्प्यत इति लाघवादित्यर्थः ननु घटघटत्वयोर्विशेष्यविशेषणभावे विपरीतव्युत्पन्नस्य घटमानयेत्यतो घटत्वविशिष्टबोधवा
रणाय घटत्वविशिष्टबोध्योपस्थिते घटपदवृत्तिज्ञानजन्यघटत्वविशिष्टाया हेतुताया अवश्यवाच्यतया तत एवानतिप्रसंगे उक्तकार्य
कारणभावे मानाभाव इत्यत आह विवेचितमेवेति पदपदार्थभेदे नानंतकार्यकारणभावप्रसक्तिप्रवेशमपेक्ष्योपस्थितेः पदज्ञानजन्यत्वे
नैव शाब्दसामग्रीकुक्षौ प्रवेश उचितस्तया श्रुतिसमवायेनाकाशस्य जनकतयोपस्थितस्यैव तद्वदेव शाब्दे भानवारणाय विषयतया शाब्द
सामान्ये वृत्तिजन्योपस्थितेर्विषयतया हेतुत्वं वाच्यम् एवं च संसर्गस्य शाब्दे भानानुरोधेन संसर्गे निवृत्तिकल्पनमावश्यकम् तथा च पदे
पदार्थो नो वाक्येन वाक्यार्थस्य बोध इति न विशेष्यविशेषणव्युत्पासेन शाब्दबोधे पदार्थानां भानं पदोपस्थितानामेव संसर्गस्य वाक्यशक्त्या बो
धादिवृत्तिज्ञानस्येति यथाश्रुतार्थकमेव तत्र विवेचितम् वस्तुतस्तु वृत्तिज्ञानस्येत्यनेन मतुषक्तविषयतासंबंधेनेत्यस्य वृत्तिज्ञानविषयत्वो
धकत्वघटकबोधोपविषयतासंबंधेनेत्यर्थः अन्यथा वाक्याकारविज्ञानजन्योपस्थितेः शाब्दबोधत्वेन तस्मिंस्तेन संबंधेन न हेतुत्वा
सभेन वाक्यशक्तेर्गर्भसत्त्वादिति बोध्यम् अत्र वदन्ति पदजन्यपदार्थोपस्थितिमन्तरेण शाब्दबोधानुदयात् शक्यपदार्थोपस्थिते
शाब्दबोधे हेतुनेति तावन्न विवादः पदस्य च प्रकृत्याद्यात्मकस्यार्थसंबंधं विना तदुपस्थापकत्वासंभवात्तस्मिन् वृत्त्यात्मकसंबंधो
ऽप्यावश्यक एव ननु तत्समुदायरूपपारिभाषिकपदस्य तत्समूहरूपवाक्यस्य विशिष्टार्थे सत्त्व विनापि तेभ्य आकांक्षादिरूपस्मार
णसमवायान्नादेव विशिष्टबोधोपपत्तेः एकपदार्थविशिष्टापरपदार्थशाब्दस्यैव तत्कार्यमात्र एकत्वात् अनुमानवादिविज्ञान

जन्योपस्थितेर्विषयतासंबंधेन हेतुत्वमेववाक्यशक्तौ प्रमाणमितितन्न स्वातंत्र्येणतद्धेतुत्वस्यैवासिद्धेः तथाहि तादृशकार्यकारणभावेवृत्तित्वे
नपदवृत्तेर्निवेशः किंवाक्यवृत्तेः किंवावृत्तिमात्रस्य नतावदाद्यः पदवृत्तिज्ञानजन्योपस्थितेः शाब्दहेतुत्वस्यसर्वैरेवाभ्युपगमात् नद्वि
तीयः वाक्यवृत्तेस्तत्रः प्रागसिद्धेः अतएवनतृतीयः किंचतव मतेवाक्यशक्तिजन्योपस्थितेः शाब्दबोधात्मकत्वेनतस्मिंस्तद्विषयत्वा
संभवादपिनोक्तरीतिः साधीयसी अपिचवाक्यवृत्तिज्ञानस्यशाब्दसामान्येन स्वातंत्र्येणहेतुत्वं यदाकदाचिद्विवरणादिनाघटादिपदश
क्तिज्ञानजन्यपदार्थोपस्थितिवृत्त्यापिघटमानयेतिवाक्यशक्तिमविदुषआकांक्षादिवशाच्छाब्दबोधोदयेनव्यभिचारात् यदपिसम
भिव्याहाररूपाकांक्षैववाक्यमिति तदपिन तथासतिघटीयाकर्मनेत्यादिबोधेघटमानयेतिवाक्यंसाकांक्षंनिराकांक्षंचघटः कर्मत्व
मिति ~~~ सर्वसिद्धव्यवहारानुपपत्तिः पदयोःसमभिव्याहार इतिवत्पदयोर्वाक्यमितिव्यवहारप्रसंगश्चेति समभिव्याहृतप
दानामेववाक्यत्वमुपगन्तव्यम् तथाचसमभिव्याहारस्यशाब्दबोधहेतुत्वेपिवाक्यस्यतत्त्वंदुरुपपादमेवेति क्ववाक्यशक्तिसिद्धिः।
समभिव्याहारनिष्ठबोधजनकत्वग्रहवतोबोधेन ज्ञानंहेतुरित्यपिरिक्तंवचः अन्वयव्यतिरेकाभ्यां समभिव्याहारज्ञानस्यैवशाब्द
धीहेतुत्वेनतन्निष्ठबोधजनकत्वज्ञानस्यहेतुतापारवाभावात् नचतदपिसम्भवति शाब्दबोधात्प्राक्संसर्गस्यैवानुपस्थितेः सामान्यतस्त
दुपस्थितावपिविशेषरूपेणभानार्थंतात्पर्यज्ञानाद्यपेक्षणेचमूलशैथिल्यात्तत्रवाक्यशक्तेरेवासिद्ध्यापत्तिः वक्ष्यमाणरीत्याशाब्दबोधा
त्प्राक्तदुपस्थित्यभ्युपगमेवाक्यवृत्तिज्ञानजन्योपस्थित्यनंतरंशाब्दबोधाभ्युपगमेवाशाब्दप्रामाण्यभंगापत्तिः अनधिगतार्थग्राहका
रणस्यैवप्रमाणत्वात् अतएवसूत्रकृताकृत्तद्धितसमासाश्चेत्यत्रसमासग्रहणंकृतम् वाक्यशक्तौतुनह्यैयर्थ्यंस्पष्टमेवसामयिकःश
ब्दादर्थप्रत्ययइतिकणादोक्तेर्वाक्यशक्तिग्राहकानुशासनादेरभावेनतद्ग्रहासंभवाच्चेति वाक्यस्फोटआपातरमणीयएवेति ॥८०॥

पदार्थवदिति सप्तम्यंताद्वतिः उपमेये सप्तमीदर्शनात् वाक्यार्थेपि संसर्गेपीत्यर्थः इदंच बोध्यत्वं शक्तिरित्यभिप्रेत्य तद्ग्रहः शक्तिग्रहः
लक्षणशब्दस्य चिह्नादौ प्रसिद्धेः प्रकृतोपयोग्यर्थपरतया तं व्याचष्टे लक्ष्यतइति मूले अर्थेइति निरूपितत्वं सप्तम्यर्थः तच्छब्दार्थे
शक्तिज्ञाने ऽन्वेतीत्यभिप्रेत्य व्याचष्टे पदेपीत्यादि तद्ग्रह इति वाक्यार्थनिरूपितशक्तिग्रह इत्यर्थः अयं भावः घटमानयेत्यादिवृद्धव्य

ननु वृद्धव्यवहारं पश्यतो मनसा पदार्थवद्वाक्यार्थेपि तद्ग्रह इति चेत्तुल्यमित्याह लक्षणादिति
लक्ष्यते तर्क्यते ऽनेनेति लक्षणं मनस्तस्मात् अपिः पदं पदोत्तरं बोध्यः पदेपि लक्षणात्तद्ग्रहश्चेत्तर्हि
ह्यस्तु वाक्येपीति शेषः वस्तुतस्तु समुदितार्थे विशिष्टवाक्यस्यैव प्रथमं ग्रहः आवापोद्वापाभ्यां परं त
ःःप्रत्येकं तद्ग्रह इति बोध्यम् ६३ ॥

वहाराद्यस्य पदे पदार्थनिर्णयस्तस्य तद्वाक्यश्रवणे पदैः पदार्थोपस्थित्यादिसम्भवधा
नेन तस्मात्संसर्गोपस्थितिर्नोनुपपन्ना परंतु मानसस्य प्रायः संशयात्मकस्यापि संभवात्तन्निश्चायार्थं शब्दादरः तत्र शक्तिग्रहहेतु
लिंगादेर्निर्णायकस्य सत्त्वेन संशयत्वासंभवादिति ननु शब्दशक्तिनिर्णयस्यैव शाब्दबोधे हेतुतावधारणे न तस्य शाब्दबोधात्प्राग्ज्ञप्ति
त्याःसंभवे न वाक्यशक्तेः ॥

शाब्दबोधहेतुत्वं तु घटमेवेत्यत आह यद्वस्तुनस्त्विति तद्ग्रहः विशिष्टवाक्यार्थशक्तिग्रहः तथा च शक्तिग्राहकशिरोमणिना व्यवहारेण पूर्वं
वाक्य एव शक्तिग्रहेण तस्यैव शाब्दबोधहेतुत्वावधारणात् एवं च नेश्वस्वाश्रयविषयकत्वस्य विषयोद्बुद्धसंस्कारसामानाधिकरण्ये-
यसंबंधेन वैशिष्ट्यस्येदानींतनवाक्यज्ञानेप्यक्षतत्वान्नरपि ज्ञानस्य शाब्दबोधे हेतुतायां व्यभिचारः मध्ये वाक्यार्थोपस्थितेरनपे-
क्षणाच्च नोक्तदोषावसर इति भावः नन्वतर्हि पदस्फोटस्य निरालंबनतापत्तिरत आह आवापोद्वापाभ्यामिति आनयनापसारणा-
भ्यामित्यर्थः तद्ग्रहः प्रत्येकपदे प्रत्येकपदार्थशक्तिग्रहः तथा च प्रत्येकपदशक्तिसाचिव्येनाकांक्षादेरिव शाब्दाद्यन्यापेक्षा
ब्दबोधस्तदा पदस्फोटोपपत्तौ तु नान्तरीयकैवसाचेव्यं न जनयतीति तदा वाक्यस्फोट इति मन इत्यपर्यवस्यतीति भावः केचित्तु पदानि
तपदार्थजन्योपस्थितिर्वा शाब्दबोधहेतुर्न तु पदज्ञानमपि मदादिनापि शाब्दबोधोदयेन व्यभिचारात् तदुक्तं पश्यतः श्वेतरूपं ह्रे-
षाशब्दं च शृण्वतः खुरविक्षेपशब्दं चैते तोऽश्वो धावतीति धीरिति तन्न शब्दं विना जायमानस्य घटादिचाक्षुषस्यापि शाब्दत्वाप-
त्तेः तत्र पश्यामि न शाब्दयामीत्यनुव्यवसायान्न शाब्दत्वं यदि तदा प्रकृतेपि समम् उक्तप्रतीतेरनुमानेनैव निर्वाहात् न शाब्दप्र-
त्ययत्वसिद्धिरित्यादि स्वयमूह्यम् ॥

वपलक्षणमिति स्वमतेगभीरयांनद्यांघोषइत्यादौ प्रत्येकपदशक्त्यास्वशक्यसंबंधरूपलक्षणयावोक्तदिशाभीप्सितार्थान्वयेबोधासंभवात्स्व
बोध्यसंबंधस्यलक्षणात्वाभ्युपगमेनवाक्यार्थमात्रेवाक्यलक्षणांगीकारादितिभावः पक्षद्वयमिति पदवाक्यभेदेनव्यवस्थितंस्फोटद्वयमि
त्यर्थः अनुपपत्तिमेवाह उत्पन्नानामिति वर्णानित्यतावादिमतेवर्णानांयोग्यविभुविशेषगुणत्वेनस्वोत्तरोत्पन्नगुणनाश्यत्वादेकदावस्था
नासंभवः तन्नित्यतावादिमतेत्वाहाभिव्यक्तानामिति वर्णानित्याः किंतुतदभिव्यक्तिरेवानित्यावर्णोत्पादकत्वेनान्याभिमतानामेवकण्ठा
द्यभिघातादीनां तदभिव्यंजकत्वाभ्युपगमात् तथाचाभिव्यक्तेरपियोग्यविभुविशेषगुणतयास्वोत्तरोत्पन्नगुणनाश्यत्वाविशेषात् क्षणिक

इयमेवमीमांसकानांवेदांतैकदेशिनांचगतिरित्याह सर्वत्रैवहिवाक्यार्थोलक्ष्यएवेतियेविदुः भाट्टास्तेपीत्थमेवाहुः
र्लक्षणायाग्रहेगतिम् भाट्टाइति तदनुयायिनांवाचस्पतिमिश्रकल्पतरुप्रभृतीनामुपलक्षणमेतत् ननूक्तपक्षद्वयमनुपप
न्नम् उत्पत्तेरभिव्यक्तेर्वैकदाऽसंभवेनवर्णसमूहरूपपदज्ञानासंभवात् तथाचसुतरांतत्समूहरूपवाक्यज्ञानासंभवइ
तिचेन्न॥

त्वान्नहिक्षिप्रवर्णानामपियुगपदवस्थानासंभवएवेत्यर्थः नन्वस्तुवर्णानांयुगपदनवस्थानंकिमस्माकमनिष्टमतआह वर्ण
समूहेति वाक्यस्फोटकल्पेपितदाह तथाचेति ज्ञानासंभवइतीति आशुविनाशिनांक्रमिकाणांमेलकासंभवादंतिमवर्णोत्पत्तिकालेतद
भिव्यक्तिकालेवापूर्वपूर्ववर्णानांतावदभिव्यक्तीनांवावस्थानासंभवेनतत्समूहरूपपदस्यवाक्यस्यचातादात्म्येनप्रत्यक्षकारणस्याभावा
त्प्रत्यक्षस्यैवासंभवेनतत्रोक्तशक्तिग्रहस्यगगनकुसुमायमानत्वादित्याखंडलार्थः ॥ ९ ॥ ९ ॥ ९ ॥

अभिव्यक्तिपक्षमादायसमाधत्ते उत्तरवर्णप्रत्यक्षेति अव्यवहितोत्तरेति एतन्मते वर्णानां नित्यत्वेन सर्वेषामेव वर्णानामव्यवधानेन
स्वाधिकरणक्षणोत्तरकालवृत्तित्वात्तस्यैव स्यापत्त्यास्तस्याभिव्यक्तिगतमेवाव्यवहितोत्तरत्वं वाच्यं तदारोपाद्वर्णेष्वव्यवहितोत्त
रत्वव्यवहारः अतएव तत्तोपस्थिते विशेषणतया निवेशः तच्चाव्यवहितत्वे सत्युत्तरत्वं अव्यवहितत्वं च स्वध्वंसानधिकरणक्षण
संबंधित्वम् तेन घटितपटद्रूत्यादीनातिप्रसंगः उत्तरत्वं तु स्वाधिकरणसहोत्पत्तिकत्वं तेन पिबमधुशीघ्रमित्यादौ नशीधु भागस्यप

उत्तरवर्णप्रत्यक्षसमये तस्मिन्नव्यवहितोत्तरत्वसंबंधेनोपस्थितपूर्ववर्णवत्त्वम् तथा तदुत्तरप्रत्यक्षकालेउप
स्थितिविशिष्टतद्वर्णवत्त्वं तस्मिन्सुग्रहमिति तादृशानुपूर्वीघटितपदत्वस्यैव वाक्यत्वस्यापि सुग्रहत्वात् ॥ ९ ॥

दत्व अन्यनिरूपिताव्यवधानादेरन्यसंबंधत्वाभावेन सत्त्वस्य परिचायकतया प्रवेशान्नाननुगमः न चाप्युत्तरोत्तरवर्णोपस्थितेः पू
र्ववर्णोपस्थितिध्वंसानधिकरणसमयसंबंधित्वात्तदधिकरणक्षणध्वंसाधिकरणत्वाच्च निरुक्तसंबंधेन तद्वत्त्वमविकलमित्यं च
पूर्वपूर्ववर्णांशे लौकिकस्य चरमवर्णांशे लौकिकप्रत्यक्षस्य संभवात् तात्पर्यबोधकत्वरूपप्राप्तेः सुग्रहत्वादुक्तपदवाक्यस्फोटसि
द्धिर्निराबाधेति भावः ॥ इति दर्पणे पदवाक्यस्फोटनिरूपणम् ॥

अखण्डस्फोटनिरूपणेऽवसरसंगतिं सूचयन्नाह इदानीमिति सखण्डस्फोटनिरूपणानंतरमित्यर्थः अखंडेति पदवाक्ययोरखण्डत्वं चाविद्यमानावयवकत्वं वर्णानामवयवाघटितत्वस्यापि सिषाधयिषितत्वादाह दृष्टांतेति दृष्टांतवाक्यस्य ... वादिघटितत्वनियमेन तदभावात्कथं वर्णेष्विन्यादेस्तत्वमित्याशंकायथाशब्दांत भौचेण मूलं व्याचष्टे यथेति इवेनीति अवयवा

इदानीमखण्डपक्षमाह पदे न वर्णा विद्यन्ते वर्णेष्ववयवा न च वाक्यात्पदानामत्यंतं प्रविवेको न कश्चन ६५ पदे पचतीत्यादौ न वर्णा नातो वर्णसमूहः पदमिति शेषः दृष्टान्तव्याजेनाह वर्णेष्विति एकारौकारऋकारादिवर्णेष्ववयवाः प्रतीयमाना अपि यथा नेत्यर्थः क्वचिदिवेत्येव पाठः एवं वाक्येप्याह वाक्यादिति पदानामपि वाक्याद्विवेको भेदो नास्तीत्यर्थः अयं भावः वाक्यं पदं चाखण्डमेव न तु वर्णसमूहः अनंतवर्णकल्पने मानाभावात् ॥ ६५ ॥ ६५ ॥ ६५ ॥ ॥

इवेत्यर्थः तथा च यथाश्रुतस्यैव दृष्टान्तत्वं नानुपपन्नमिति विविरपृथग्भाव इति प्रत्युपस्तस्थ पक्षे तभावसाधनप्रविवेकशब्दार्थः पृथग्भावो भेदे पर्यवस्यतीत्याशयेनाह भेद इति ननु पदादिप्रतीतौ तदवयवानां वर्णानामुपलभ्यमानत्वात्कथं तदसत्त्वमत आह अयं भाव इति अखण्डमेवेति व्याख्यातार्थ एवकारव्यवच्छेद्यं स्पष्टयति न त्विति अनंतेति अनेकेत्यर्थः ॥ ६५ ॥ ॥

न तु ककारो गकार इति प्रतीतिरेव वर्णैक्ये मानं यदि च वर्णाभिव्यंजकत्वेनोत्पादकत्वेन वाभिमतवायुसंयोगविशेषाभिव्यक्तस्फोट एव क
त्वादिना नादस्य प्रतीतिविषय इति विभाव्यते तदाप्युत्पन्नः ककारो नष्टः ककार इत्यादिप्रतीत्यनुपपत्तिः स्फोटातिरिक्तककारादीनां तन्मान
भ्युपगमात् तस्य च नित्यत्वात् व्यंजकनिष्ठाया उत्पत्तेर्नाशादिमत्त्वे सुखादीनामपि नित्यतापत्तिरत आह न तद्वर्णोत्पादकत्वेनेति वैयात्ये
प्रमाणं दर्शयति वर्णजनकताया इत्यादि तथा च नादस्य वैजात्यं समवायेन स्फोटांशे आदाय आरोप्योक्तप्रतीतिवैलक्षण्योपपत्तौ न तदनुपप
त्तिरतिरिक्तककारादिवर्णसाधिका नाप्युत्पन्नः क इत्यादिप्रतीतिस्तथा सोऽयं क इत्यभेदप्रत्यभिज्ञारूपबाधकसत्त्वेन नादस्य प्रतीतेर्भ्रमं

न तद्वर्णोत्पादकत्वेनाभिमतवायुसंयोगनिष्ठतत्तद्वर्णजनकतावच्छेदकवैजात्यमादायैवं
ककारो गकार इत्यादिप्रतीतिवैलक्षण्यसंभवात् सर्वं हि भामत्यां तारत्वादिवायुनिष्ठं वर्णेष्वारोप्य
तदुक्तं रेवताधिकारेणेनैवं वायुसंयोग एव वाचकोऽपि किं न स्यादिति वाच्यम्॥ ६०॥ ६८ ॥

मत्त्वात् नापि सुखादीनां नित्यतापत्तिः नन्वत्र शब्दसंयोगस्य सविषयात्मकविशेष्यगुणस्य जागरूकत्वादिति भावः अत्र मतान्तरमाह मतं च सति
भ्रमे आरोप्यत इति एतदनुरोधेनैवादायेति पदमारोपपरतया व्याख्यातमतान्तरमनुवदति वायुसंयोगोऽपीत्यपिरेवार्थे करणतावच्छेदकाभि
प्रायतया वायुसंयोग एवेत्यर्थः समवायस्यानाशेऽपि तत्संबंधावच्छिन्नतावच्छेदकत्वेन प्रतियोगिप्राथम्यात् संयोगस्यैव वाचकत्वमस्त्वित्यर्थः॥ ९ ॥

नचोक्तकत्वस्यातीन्द्रियध
समाधत्ते प्रत्यक्षेति अयमाशयः कादिवर्णानामुक्तसंयोगात्मकत्वेऽतीन्द्रियतापत्तिर्नचसेष्टाऽनुभवविरोधात् नचोक्तकत्वस्यातीन्द्रियध र्मत्वेनकथंसाक्षात्कारविषयत्वमितिवाच्यं सुरभिचंदनमितिप्रतीतौचक्षुरयोग्यस्यापिसौरभादेश्चाक्षुषविषयत्ववत्तस्यापिश्रोत्रग्राह्यत्व संभवात् विषयबाधेनपरंस्फोटांशेकत्वप्रतीतिर्भ्रांतित्वमिति अन्येतुकादिप्रतीतिर्यदिस्फोटांशेकत्वादिकंसमवायेनावगाहेततदा तस्याभ्रान्तत्वसम्भावना किंतुस्वाश्रयाभिव्यंग्यत्वसंबंधेनैवतदंशेवैजात्यं नचस्वाश्रयाभिव्यंग्यत्वस्यसंबंधत्वेप्रमाणाभावः कादि प्रतीतेरेवमानत्वात् विशिष्टप्रतीतिनियामकविशेषोहिसंबंधः अतएवलोहितः स्फटिकइतिबुद्धेः स्वाश्रयसंयोगस्यसंबंधतामा

प्रत्यक्षोपलभ्यमानककारादेरेववाचकत्वस्यानुभवसिद्धत्वात् तथाचवाचकत्वान्यथानुपपत्त्यात
देवेदंपदं तदेवेदंवाक्यंसोयंगकारइतिप्रतीत्याचस्फोटोऽखंडः सिद्ध्यति॥ ९ ॥ ९ ॥

मनन्ति नचसमवायविषयैवसाभ्रान्तिः यथाकथंचित्प्रतीतेः प्रमात्वोपपत्तौभ्रमत्वकल्पनायाअन्याय्यत्वादधिकमग्रेवक्ष्यतइ
त्याहुः उपसंहरति तथाचेति वाचकत्वानुपपत्त्येति पदवाक्ययोर्वर्णसमूहरूपत्वे उक्तरीत्यावर्णानांयुगपदवस्थानासंभवेनवाचकत्वग्र
हानुपपत्त्येत्यर्थः वर्णानामनित्यत्वेप्रत्यभिज्ञानुपपत्तिः साप्यस्मन्नयेनास्तीत्याह तदेवेदमित्यादि तद्वाक्यभेदावगाहिपदादिविशेष्य
कप्रत्यभिज्ञानुपपत्त्याचेत्यर्थः उक्तरीत्याकथंचिच्छक्तिग्रहोपपादनेप्यनित्यवर्णघटितपदवाक्ययोरप्यनित्यतयाप्रत्यभिज्ञानुपपत्तिरिदं

एतेनेति प्रत्यभिज्ञानुपपत्तिसिद्धाखण्डस्फोटस्य वाचकत्वव्यवस्थापनेनेत्यर्थः अननुभवादिति तथा च तत्र प्रमाणाभावेन वाचकत्वं दूरप
राहतमिति भावः तेषां गकारादिवर्णानां स्फोटातिरिक्तेति गौरित्याकारकप्रतीतिविषयगादिस्फोटस्यैवास्माभिर्वाचकत्वाभ्युपगमादिति भाव
क्रमिकाणामपि स्थायिनां सद्भावस्यानादृतत्वात् आशुतरेति तृतीयक्षणवृत्तिध्वंसप्रतियोगिनामित्यर्थः आशुतरविनाशिनां तस्योत्पन्नानां स

एतेन गौरित्यादौ गकारौकारविसर्गादिव्यतिरेकेण स्फोटस्याननुभवादप्रमाणं वर्णानामेव वाचकत्वमस्ती
त्यपास्तं तेषां स्फोटातिरिक्तत्वाभावात् यत्तु वर्णानां प्रत्येकं वाचकत्वे प्रत्येकादर्थबोधापत्तिः समुदायस्य तु
क्रमवतामाशुतरोत्पन्नानां तथैवाभिव्यक्तानां वा ज्ञानमसंभाव्यमेव पूर्वपूर्ववर्णानुभवसंस्कारसहकारेणैक
दा समूहालम्बनरूपसकलज्ञानसंभवस्तु सरोरस राजाजारा नदीदीनादिसाधारण्यादनुत्पत्तिप्रसङ्ग इति स्फो
ट एवाखण्डो नादाभिव्यङ्ग्यो वाचक इति कैयटः तन्तुच्छम् पदज्ञानसंभवस्योपपादितत्वात् ॥ ९ ॥

मुदायसंभवादुक्तम् क्रमवतामिति असंभाव्यमिति प्रत्यक्षेणास्योत्पत्त्येन विषयस्य हेतुत्वापातमूहरूपविषयस्यैवाभावादिति भावः पूर्वपू
र्वेति ननु वर्णानित्यताभावादिमते तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वेन नाशस्य संभवात्कथं तज्जन्यसंस्कारस्य सहकारिता संभवः तथा
दिप्रकारमितीतिः क्रमाद्यौ विशेषणतया कालमवगाहते विशिष्टबुद्धौ विशेषणज्ञानस्य हेतुत्वात् तस्याप्युत्पत्तिद्वितीयक्षणे विशि

कल्पकमभ्युपेत्यतृतीयक्षणेविशिष्टज्ञानवाच्यंतच्चनसंभवति संबंधवतिमानंचदृश्यतेचक्षुरादिनेतिवृद्धोक्तेः प्रत्यक्षेविषयस्यकार्यसह
भावेनहेतुतयातृतीयक्षणेतद्वर्णरूपविषयस्याभावात् नचककाराद्युत्पत्तिक्षणोत्पन्नकत्वादिसृष्ट्यैवद्वितीयक्षणेएवसविकल्पसंभ
वइतिवाच्यम् एवमपिप्राथमिकविशिष्टबुद्धेर्दुरुपपादत्वात् इतिचेदत्रवदंति संसारस्यानादितयाबालस्यस्तनपानप्रवृत्तिहेतिविष्टसाधनत्व
स्मृतेरिवप्राथमिककत्वादिविशिष्टबुद्धिजनकस्मृतेः संभवान्नतदनुपपत्तिः ककाराद्युत्पत्त्यनंतरंककारीयगकारवृत्तिविशिष्टबुद्धेरेवच
नादृशकल्पनेमानमिति अन्येतुप्रतियोगितासंबंधेनयोग्यविभुविशेषगुणनाशंप्रतिस्वसामानाधिकरण्यस्याव्यवहितपूर्ववृत्तित्वोभयसं
बंधेनयद्दिसामान्यतस्तादृशविशेषगुणस्यकारणतास्यात्तदाककारादिप्रत्यक्षानुपपत्तिः प्रसज्येतापिसैवन अंतिमशब्दनाशेऽनुत्पत्तिप्राक्का
लोत्पन्नज्ञानादिनाशेचव्यभिचारात् किंतुविजातीयगुणनाशेवैजात्यंचरमशब्दादिव्यावृत्तमिवप्राथमिकविशिष्टबुद्धिविषयवर्णव्यावृत्त
मपि नचतादृशवैजात्येमानाभावः नाश्यतावच्छेदककोटिप्रविष्टतयैवतत्सिद्धेः तथाचान्तिमशब्दनाशेनद्वितीयक्षणस्येवतादृशवर्ण
नाशेपिनतृतीयक्षणस्यतद्व्यक्तित्वेनहेतुत्वकल्पनान्नतृतीयक्षणस्यापिनत्वस्यप्रत्यक्षानुपपत्तिरुक्तहेतुहेतुमद्भावस्वीकारेपीत्याहुः
अतिप्रसङ्गइति सरसशब्दघटकसकारएकाररेफविसर्गानुभवजन्यसंस्कारेरसबोधापत्तिरित्यर्थः नादाभिव्यंग्यइति ध्वन्यनुगतव
र्णाभिव्यंग्यइत्यर्थः अखण्डवर्णाघटितः उपपादितत्वादित्यस्यसखण्डस्फोटनिरूपणावसरइतिशेषः तादृशप्रत्यक्षस्यांतिमवर्णांशे
लौकिकस्यातीतवर्णांशेऽलौकिकस्यसरोरसइत्यादि नतिप्रसक्तस्योपपादितत्वादित्यर्थः॥ ॥ ॥ ॥

व्यतिरिक्तस्य वाचकत्वे दूषणमाह वर्णानामिति विकल्पग्रासादिति प्रत्येकव्यंजकत्वे आद्यवर्णादेव तदभिव्यक्तिसंभवे इतरोच्चारणवैयर्थ्याप त्तेरिति प्रसंगाच्च समुदायस्यानुक्तरीत्या दुरुपपादकत्वेन तद्व्यंजकत्वस्याप्यसंभवउक्तिसुकत्वादित्यर्थः कैयटानुयायिनस्तु पूर्वपूर्ववर्णका- स्ते चेद्द्वितीयादिवर्णोत्पत्तिः सम्भवेन्न शस्यादपि कथंचिद्व्यवदुक्तरीत्या पदवाक्यप्रत्यक्षनिर्वाह सैव न किन्तु यावन्तकारे यतितं तेन तावदैक्या रेते नैव यत्नेनैको वर्ण उच्चार्यते तेनैव विच्छिन्नेन तस्मिन्वर्णे व्यपसहृत्य नेयत्नमन्यमुत्थाप्य द्वितीयः प्रवर्तते इत्यपरः सन्निकर्ष इति सूत्र- स्य भाष्यप्रमाण्यात्पूर्ववर्णविनाशानन्तरं यत्नान्तरेण द्वितीयवर्णाभ्युपगमात् किंच भवन्मते वर्णप्रत्यक्षस्यैवानुपपत्तिः तेषामुच्चरितप्रध्व सित्वेन तदुत्तरं तेरभिव्यक्तेर्वा क्षणिकत्वेनातीन्द्रियक्षणावच्छिन्नत्वात् तथा चैकोयणचीत्यादिसूत्रोपयोगिनोऽप्यपूर्वोऽपर इति प्रत्यक्ष

वर्णानां प्रत्येकव्यंजकत्वं समुदितानां वेत्यादिविकल्पग्रासाच्च ननु त्वन्मतेऽप्येष दोष तत्तद्वर्णोत्पादकत्वेनाभिमतवायुसं-
योगानां प्रत्येकव्यंजकत्व समुदितानां वेति विकल्पगणसंभवादिति चेदुच्यते॥ ११ विषयार्थकेदं शब्दाभिव्यज्यमानपौर्वापर्यव्यव

हारस्यासंभव एवं नष्टविद्यमानयोः संबंधिनोरव्यवहितोत्तरत्वस्य संबंधतया क्रमस्य वक्तुमशक्यतया — — — — पि पूर्वोक्तरीत्या पदप्र त्यक्षानुपपत्तिः अपि च गृहीतशक्तिकस्यैव बोधकत्वमिति नियमेनोच्चारणभेदाद्भिन्नेषु शक्तिग्रहासंभवः आनुपूर्व्यास्तत्तत्कालघटि ताव्यवहितोत्तरत्वघटितत्वेनाननुगततया अनुगतावच्छेदकाभावसंभवात् अखण्डस्फोटाङ्गीकारे तु तत्तद्वर्णोपाध्यवच्छिन्ने तस्मिन्पौ- र्वापर्यादिव्यवहारविषयत्वस्योपपादत्वान्नोक्तानुपपत्तिः तस्य चानुपूर्व्यन्तर्गतसमस्तवर्णा एव यद्यप्यभिव्यंजकास्तथापि चर- मवर्णाभिव्यक्त एव स बोधहेतुरिति नोक्तविकल्पस्याप्यवसरः इत्याहुः॥

ननुवायुसंयोगानांप्रत्येकमभिव्यंजकत्वाभ्युपगमेपिगौरित्यत्रघटेनघटत्वेनच स्फोटोभिव्यज्येतेत्यतआह परंत्विति तथाचविलक्षणवायुसंयोगस्य
गत्वप्रकारकस्फोटाभिव्यंजकत्वाभ्युपगमान्नोक्तदोषइतिभावः अतएवेति विलक्षणवायुसंयोगस्यतत्तद्रूपेणस्फोटाभिव्यंजकत्वाभ्युपगमा
देवेत्यर्थः तदतिरेकास्वीकारइति तत्तत्संयोगादेवकत्वादिप्रकारककत्वारप्रतीत्युपपत्तौस्फोटातिरिक्ततत्कल्पने मानाभावादितिभावः ननु
सरोरसइत्यादावतिप्रसंगस्तदवस्थएव सत्त्वादिरूपेणाभिव्यंजकवायुसंयोगानामुभयत्रतौल्यादतआह एवंचेति घवत्त्वमिति तथाचोपा
धिकभेदमादायतस्मिन्नेवटकारात्मकेघटत्वप्रकारकप्रतीतिविषयाव्यवहितत्वग्रह विषयेयथाघटपदव्यवहारविषयतातथाएतम केस्फो

प्रत्येकमेवसंयोगाअभिव्यंजकाः परंतुकेचिद्गत्वेनकेचिदौत्वेनकेचिद्विसर्गत्वेनेकप्रकारैः अतएववर्णानांतदतिर
रेकास्वीकारोप्युपपद्यते एवंचाव्यवहितोत्तरत्वसंबंधेनघवत्त्वंटकारेगृह्यते एतादृशपदज्ञानकारणतायाअविवादा
त् परंत्वव्यवहितोत्तरत्वंस्वज्ञानाधिकरणक्षणोत्पत्तिकज्ञानविषयत्वंवाच्यम् अतएवघज्ञानानुतरज्ञानविषयत्वरूपा
आनुपूर्वीत्यादिर्नैयायिकवृद्धानांव्यवहारः एवंचनकश्चिद्दोषः॥ ५५ टे सत्त्वप्रकारकप्रतीतिविषयाव्यवहितत्वग्रहेसरः पदव्य

वहारविषयतेतिनसरआत्मकस्फोटस्यारसरूपतेतिभावः ननुतवमतेगकारादिवर्णस्यनित्यस्फोटरूपतयानित्यत्वेनतद्ध्वंसाधिकरणक्षणो
त्पत्तिकत्वविशिष्टतदधिकरणक्षणोत्पत्तिकत्वरूपाव्यवहितोत्तरत्वासंभवात्कथमुक्तप्रकारसंभवोऽतआह परंत्विति तथाचवर्णानां
नित्यत्वेपितदभिव्यक्तेरनित्यत्वस्यसांख्यानामपिसंमतत्वेनतदव्यवहितोत्तरत्वस्यवर्णेतराभिव्यक्तावबाधेनतदादायघटादिपदप्र
त्ययोपपत्तिरितिभावः अतएवेति अभिव्यक्तिनिरूपिताव्यवहितोत्तरत्वस्यानुपूर्वीव्यवहारनियामकत्वादेवेत्यर्थः नवीनैस्तथानभ्युप

तेनेति आनुपूर्व्यवच्छिन्नवर्णात्मकस्फोटस्य वाचकत्वव्यवस्थापनेनेत्यर्थः अपास्तमित्यनेनान्वयिस्फोट इति वाचकत्वेनाभिमतोऽखण्ड
दार्थ इत्यर्थः नाद्य इति नैय इत्यर्थः तत्पक्षे दूषणमाह घटपद इति घट इत्यानुपूर्व्यवच्छिन्नस्फोटे गृहीतशक्तिकस्येत्यर्थः कलशपद
त्यस्यागृहीततदवच्छिन्नस्फोटशक्तिकादित्यादिः बोधप्रसङ्गादिति घटबोधकप्रकारणताव कलश इत्यानुपूर्व्यवच्छिन्नस्फोटस्य
स्थानीसत्त्वान्नित्यैकरूपत्वान्न स्ववर्णसमुदायरूपपदस्य वाचकत्वे तु नोक्तदोष इति भावः अर्थधीहेतुरिति उक्तस्थलेवास्य स्फोटस्य
कलशरूपपर्य्यायाभिव्यक्त्यवच्छिन्नशक्तिग्रहविषयत्वाभावान्न अर्थबोधप्रसङ्ग इति भावः एवमिति तत्पर्य्यायजन्यशाब्दबोधे तत्प

एतेन पर्य्यायस्थलेप्येक एव स्फोटः नानाचानाद्यः घटपद एव गृहीतशक्तिकस्य कलशपदाद्बोधप्रसङ्गात् न च तत्पर्य्या
याभिव्यक्तेः शक्तिग्रहस्तत्पर्यायश्रवणेऽर्थधीहेतुरिति वाच्यम् एवं प्रतिपर्यायशक्तिग्रहावश्यंभावेन तत्तत्पर्याय
गतशक्तिग्रहहेतुताया उचितत्वात् तथा सति शक्तिग्रहत्वेन च हेतुत्वेऽतिलाघवाच्च अन्यथा तत्पर्यायाभिव्यक्तिगत
शक्तिग्रहत्वेन तत्त्वे गौरवात्॥ ७॥

र्य्यायाभिव्यक्त्यवच्छिन्नशक्तिग्रहस्य हेतुत्वाभ्युपगम इत्यर्थः शक्तिग्रहावश्यंभावेनेति
नागृहीतविशेषणन्यायेन तत्पर्यायशक्तिग्रहस्यावश्यमभ्युपेयत्वादिति भावः उचितत्वादिति औचित्यमेवाह तथासतीति शक्तिग्रह
त्वेनेति तत्पर्य्यायगतशक्तिग्रहत्वेनेत्यर्थः लाघवादिति उक्तरूपापेक्षयैतस्य कारणतावच्छेदकत्वे लाघवादित्यर्थः चो हेतौ पूर्वक
स्यैव गौरवं प्रकाशयति अन्यथेति उक्तवैपरीत्यमेतत्॥

नद्वितीयइति पर्य्यायस्थलेस्फोटनानात्वमित्यपिपक्षोनेत्यर्थः अनंतेति प्रतिपर्य्यायभिन्नानांस्फोटानांकल्पनमित्यर्थः शक्तिमिति त
द्भेदभिन्नानंतशक्तिकल्पनांचापेक्ष्येत्यर्थः लघुत्वादिति तथाचवर्णातिरिक्तस्फोटकल्पनापार्थ्येतितद्भावः पर्य्यायेष्विति एकधर्
मावच्छिन्नबोधकनानापदेष्वित्यर्थः अनेकेति पर्य्यायभेदभिन्नेत्यर्थः सर्वसिद्धत्वादिति तथाचपर्य्यायेषुनानाशक्तिकल्पना
नुपूर्व्येतिनदोषः अयमाशयः वर्णाः स्फोटाभिव्यंजकाइतिस्वीकारेभवदुक्तदूषणस्यावसरोनतुस्फोटस्यवर्णानतिरेकपक्षेतन्न
पृथक्शक्तिकल्पनापार्थ्याभावेनगौरवासंभवात्पर्य्यायशक्तिग्रहकार्य्यतावच्छेदककोटावव्यवहितोत्तरत्वनिवेशेनव्यभिचारवार

नद्वितीयः अनंतपदार्थानांतेषांशक्तिमपेक्ष्यलक्षणवर्णेष्वेवशक्तिकल्पनस्यलघुत्वादितिपरि
मलोक्तमपास्तं पर्य्यायेष्वनेकशक्तिस्वीकारस्यसर्वसिद्धत्वात्तदवच्छेदकानुपूर्व्याः प्रागुपादाना
ऽऽइतिदिक्

णंतूभयोःसममिति नत्वन्मतेस्फोटानतिरेकेणवर्णानांनित्यत्वादुत्पत्तिघटिताव्यवहितोत्तरत्वसंबंधेनोत्तरव
र्णेषुपूर्वपूर्ववर्णवत्त्वरूपशक्ततावच्छेदकानुपूर्व्यसंभवोऽतआह तदवच्छेदकेति शक्ततावच्छेदकेत्यर्थः प्रागिति स्वाभिव्यक्त्यधिकर
णक्षणोत्पत्तिकाभिव्यक्तिविषयत्वमितिग्रंथेनेतिशेषः ननुवर्णानांनित्यत्वाभ्युपगमेनित्यवर्णैरेवस्फोटकार्य्योत्पत्तौस्फोटस्यैवासिद्धेः
तथाहि आनुपूर्व्याभवद्भिरेवोपपादितत्वाच्चद्विष्ठानांतेषांपदत्वेनतत्प्रत्यक्षस्यसौलभ्येनशक्तिग्रहस्यसूपपादत्वात्तदेवेदंपदंवाक्य
मितिप्रत्यभिज्ञोपपत्तेश्चेत्यतआह दिगिति तदर्थस्तु यदिस्वतंत्रानित्यावर्णाः स्युस्तदास्यादेवतैः स्फोटान्यथासिद्धिः॥ ॥

किंतु कत्वादिना प्रतीयमानः स्फोट एव ककारादिवर्ण इत्यभ्युपगमे मेनान्यथासिद्ध्यसंभवात् तत एव नानावर्णकल्पनाप्रयुक्तगौरवपरिहा
पिनेति नत्वको सौ स्फोटो येयदनतिरिक्ता वर्णा इति चेदत्राहुः ईश्वरासिसृक्षा मायाविद्धपरपर्यायवति गुणात्मकाद्व्यक्तप्रभवः शब्दब्रह्म
परनामा चेतनाधिष्ठितो नभिव्यक्तवर्णविशेषो रसकपरादिशब्दैर्व्यवह्रियमाणो नादः स्फोट इत्युच्यते स च सर्वगतोपि पुरुषस्य स्थितार्थविव
क्षाधीनप्रयत्नाधिष्ठितमूलाधारस्थपवनेनाभिव्यक्तः परेति व्यवह्रियते नाभिपर्यन्तमागच्छता तेनाभिव्यक्तः पश्यन्तीति पुनः हृदयमाग
च्छता तेनैवाभिव्यक्तस्तत्तदर्थोल्लेखिज्ञानविषयः परश्रोत्राग्राह्यत्वात्सूक्ष्मो मध्यमावागिति वक्तात्र कर्णपिधाने सूक्ष्मतरवायवभिघातेनो
पांशुशब्दप्रयोगे च श्रूयते स एव च आस्यपर्यन्तमागच्छता तेन वायुना कण्ठदेशं गत्वा मूर्धानमाहत्य परावृत्य ततस्तान्व्यभिव्यक्तः पर
श्रोत्रेणापि ग्रहीतुं शक्यो वैखरीति व्यवह्रियते उक्तार्थे प्रमाणं च चत्वारि वाक्परिमितानि पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः गुहा त्री
णि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्तीति श्रुतिः विदोस्मामिश्रमानाश्च योऽव्यक्तात्मनो महान् स एव श्रुतिसंपन्नः शब्दब्रह्मेति
गीयत इति पुराणवाक्यं च भागवतेप्येकादशस्कंधे घोषे स्फुटोपमध्ये शिक्षायामपि आत्मा बुद्ध्या समेत्यार्थान्मनो युंक्ते विवक्षया मनः का
याग्निमाहन्ति स प्रेरयति मारुतम् सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः वर्णान् जनयतीत्यनेन हृदयावच्छिन्नमध्यमायां नादांश
आनर प्रणवरूपस्य वाचकः आकार एव सर्वा वाक् सैषा स्पर्शोष्मभिर्व्यज्यमाना नानारूपा भवतीति श्रुतेः सर्वप्राणिहृदेशस्थत्वम
ब्रह्मपदव्यपदेश्यत्वमपीत्यन्यत्र विस्तरः

दृतिप्रतीतेरिति अन्यथावर्णपदं पदरूपमालायास्तत्समूहरूपपदानतिरिक्ततयाऽऽधाराधेयभावावगाहिप्रतीत्यनुपपत्तिरिति भावः अन्यथे ति प्रतीतेः पदार्थासाधकत्व इत्यर्थः कपाले घट इति प्रतीत्याभेदावगाहित्यात्तत्सिद्धिप्रतीतेस्तदसाधकत्वे तु घटाद्यसिद्धिः स्पष्टैव कपालत त्संयोगनाद्यैवन्तादृशप्रतीत्युपपत्तेरिति भावः कौस्तुभेत्विति तुशब्दे नारुचिः सूचिता तद्बीजं तु वर्णातिरिक्तस्फोटानंगीकारेपि नोक्तप्र तीत्यनुपपत्तिः आनुपूर्व्यवच्छिन्नवर्णानां मालापदार्थत्वेन तत्रानुपूर्वीरूपपदस्याधाराधेयमात्रसंभवात् घटकपालादीनां विजातीयं [illegible] त्वेन तद्भेदस्यापलपितुमशक्यत्वेनोक्तातिप्रसंगाभावाच्चेति अन्ये तु न वर्णानां स्फोटात्मकत्वं किंतु स्फोटस्य वर्णाभिव्यंग्य [illegible] व्यंजकत्वपक्षोक्तदोषः प्रयोगांतर्गतसकलवर्णानां तद्व्यंजकत्वेपि चरमवर्णाभिव्यक्तस्यैव तस्य वाचकत्वोपगमाद [illegible] वर्णमालायां पदमिति प्रतीतेर्वर्णातिरिक्त एव स्फोटः अन्यथा कपालातिरिक्तघटासिद्धिप्रसंगश्चेति प्र

ऽतिपादितम् ॥ ६५ ॥

[illegible] परमर्थबोधः न स्यैकत्वेपि तत्र व्यंजकरूपप्रतिबिंबजन्यतद्रूपनिरूपितस्यैव प्र [illegible] एकस्यैव मुखस्य कृपाणदर्पणाद्यभिव्यंजकवशाद्दैर्घ्यवर्तुलत्वादिप्रतीतिवत् अत एवाभ्युपगमा [illegible] भावाच्च न कदाचिदपि वर्णग्राहित्वेन तत्प्रतीतिस्तत्प्रतिबिंबसमर्पकाश्च संस्कारा एव ते च ये [illegible] स्येत्यभ्युपगमाच्च न सरोरसद्रूत्यनयोर्विशेषः व्यंजकरूपरूषितस्यैव तस्यार्थे शक्ति [illegible] सिद्धपदश्रवणेऽर्थबोधापत्तिरत एवेदमेकं पदमेकवाक्यमिति व्यवहारः

श्रवणादितइति आदिनामननादिपरिग्रहः नशास्त्रमिति एतच्छास्त्रं विनापिश्रवणादिनातद्बोधेनव्यभिचारादितिभावः उपायस्योपायांत
रादूषकत्वेसदृष्टांतांयुक्तिमाह तथाचेति व्याकरणाध्ययनस्यस्फोटज्ञानत्वेनकार्य्यतावच्छेदकम् किंतुनादशज्ञानगतवैजात्यंतदवच्छि॰
त्वंचनोपायांतरादितिनव्यभिचारः वैजात्यस्यप्रागनुपस्थितावपिकारणताग्रहो विधिवादोक्तदिशावसेयइतिभावः मंत्रजन्यमिवेति —
— — — — मंत्रजन्यतावच्छेदकमिवेत्यर्थः एवमग्रेपि ननुपुरुषार्थसाधकस्यतस्यसंपादनवैयर्थ्यमतआह तस्यचेति स्फोटज्ञानस्य॰
चेत्यर्थः यज्ञादीनामिति कामनापरित्यागेनविधीयमानानांतेषामित्यर्थः यज्ञादीन्यादिनातमेवंवेदानुवचनेनब्राह्मणाविविदिषंति य

ननुप्रत्यक्षस्फोटस्यश्रवणादितोपिबोधसंभवान्नशास्त्रंतदुपायइत्यतआह उपायादितिउपायस्योपायांतरादूषक
त्वात् तथाचव्याकरणाध्ययनजन्यज्ञानेवैजात्यंकल्प्यते मंत्रजन्यमिवार्थस्मरणेवेदांतजन्यमिवब्रह्मज्ञानेनतस्यचरिता
तस्ययज्ञादीनामन्तःकरणशुद्धाविवशरीरादिशुद्धावुपयोगः साक्षात्परंपरयावास्वर्गमोक्षादिहेतुत्वंच॥ ९ ॥

ज्ञेनदानेनतपसानाशकेनेतिश्रुत्युक्तदानादिपरिग्रहः शरीरादीन्यादिनावागिंद्रियपरिग्रहः ननुशरीरादिशुद्धेरप्यपुरुषार्थतयातदुद्दे॰
शेनापिप्रवृत्तिर्दुर्घटेत्यतआह साक्षादिति स्वर्गादीन्यादिनाऽपवर्गपरिग्रहः साक्षात्स्वर्गहेतुत्वं परंपरयाऽपवर्गहेतुत्वंचेत्यर्थः स्वर्गहेतुत्वे
चैकःशब्दइतिभाष्यपठितश्रुतिः परंपरयामोक्षहेतुत्वेचद्वेब्रह्मणीवेदितव्येइतिस्मृतिः प्रमाणं परंपराघटकंचात्मतत्त्वज्ञानंतमेवविदि
त्वेतिश्रुत्यातदतिरिक्तस्यसाक्षान्मोक्षहेतुत्वम् व्यवच्छेदबोधनादितिबोध्यम्॥

उक्तार्थे हरिसंमतिमाह तदुक्तमिति तत् नादात्मकस्फोटप्रतिपादकं शास्त्रं अपवर्गस्येति मोक्षस्येत्यर्थः द्वारमिति तदुपयोगीत्यर्थः हेतु
गर्भविशेषणमाह वाङ्मलानामिति चिकित्सितमिति अपनयमार्थकसन्नन्तात्कितेः क्तप्रत्यये वाङ्मलकर्मकापनयनसाधनत्वात
तो मोक्षद्वारमित्यर्थ तत. शुद्धिप्रदानामियमाह शुद्धत्वेषामस्योपयोगादिति भावः मतः सर्वविद्यानामप्येष विद्यमतोऽधिविद्यं विद्या
सुप्रकर्षेण दीप्यत इत्यर्थः तथा चोक्तं तेषां च सामर्थ्यजुषां पवित्रं महर्षयो व्याकरणं निराहुरिति इदमिति सिद्धिसोपानपर्वणां मध्ये
इदं प्रथमं पदस्थानमित्यधिकरणमित्यर्थः अत्र स्फोटे अतीतविपर्यासः भ्रांतिभूत्य एतत्तत्त्वज्ञानवानिति यावत् कैवल्यं परारब्धं अ

तदुक्तं वाक्यपदीये तद्द्वारमपवर्गस्य वाङ्मलानां चिकित्सितम् पवित्रं सर्वविद्यानामधिविद्यं प्रकाशते १ इदमा
द्यं पदस्थानं सिद्धिसोपानपर्वणाम् इयं सा मोक्षमाणानामजिह्मा राजपद्धतिः २ अत्रातीतविपर्यासः केवलामनुप
श्यतीति न चालीकया प्रकृतिप्रत्ययकल्पनया कथं वास्तवस्फोटबोधः तस्यालीकत्वासिद्धेर्वक्ष्यमाणत्वात् एवं
रेखागवयन्यायश्चादिना गृह्यते ॥ ६६ ॥

अनुपश्यतीति योगजधर्मेण प्रत्यक्षीकरोतीत्यर्थः तथा च योगित्वसिद्धौ न किमवशि
ष्यते तत्त्वज्ञान इत्यर्थः तदुक्तं भागवते द्वादशे मस्तनिरूपणानन्तरं यदुपासनया ब्रह्म योगिनो मलमात्मनः द्रव्यक्रियाकारकाख्यं धूत्वा यां
त्यपुनर्भवमिति भावः अलीकत्वासिद्धेरिति पचधातोः शादिवत्प्रकृतिप्रत्ययविभागस्यापि मायिकत्वेन नास्तित्वात्त्वच्छशशृंगादिवदली
कत्वमिति वक्ष्यमाणप्रायत्वादित्यर्थः अवास्तवत्वेपि मणिप्रभाप्रतिबिंबस्य मणिप्राप्तावियैतस्यापि परमात्मदर्शने उपयोगसंभवा
दिति भावः आदिपदेनेति पंचकोशादिवदित्यभ्योपायेनादिशब्देनेत्यर्थ न्यायस्तु समासवादे प्रपंचितः ॥ ६ ॥ ५

उपत्तिविनाशप्रतीतिसाक्षिकं वर्णानामनित्यत्वं तादृशवर्णात्मकस्फोटाभ्युपगमे तस्याप्यनित्यत्वप्रसंग इत्याशंकासमाधानपरतया मूलमवतार
यति नन्विति वर्णजातीनामिति वर्णानां तद्वृत्तिकत्वादिजातीनां चेत्यर्थः नस्यादिति अयंभावः उत्पन्नो नष्टो वा ककार इत्यादिप्रतीतिः ककारादिवर्णा
त्मकः स्फोटस्तद्वृत्तिजातिर्वोत्पत्त्यादिमत्त्वे विषयो वाच्यः तथा च न संभवति द्वयोरेव नित्यत्वाज्जायमानायास्तस्या विषयबाधेन भ्रमत्वा
पत्तेरिति तादृशप्रतीतिभ्रान्तत्व इत्यापत्तावाह वायुसंयोगेति कादिप्रतीतीनां ककारो गकार इत्यादिबुद्धीनां भ्रमत्वापत्तिरिति यथाश्रुता
भिप्रायेणेयं पूर्वोक्तातिमकल्पे भ्रमत्वाप्रसंगात् न च तन्मते पिकत्वादीनां लौकिकविषयतानुपपत्तिः तद्व्यंजकश्रोत्रसमवेतसमवायस्य

ननु स्फोटस्य वर्णजातीनां च नित्यतया ककार उत्पन्न इति न स्यात् वायुसंयोगनिष्ठजातेः स्फोटभाने कादिप्रतीतीनां भ्रम
त्वापत्तिश्चेत्यत आह कल्पितानामुपाधित्वं स्वीकृतं हि परैरपि स्वरदैर्घ्याद्यपि ह्यन्ये वर्णेभ्योऽन्यस्य मन्त्वते स्वीकारस्य लमा
ह स्वरदैर्घ्याद्यपीति आदिना उत्पत्तिविनाशादिसंग्रहः ॥ ६६ लौकिकसन्निकर्षस्याभावादिति वाच्यम् तन्मते कत्वादीनां वायुसंयो

गवृत्तिधर्मत्वेन कत्वसाक्षात्करोमीति प्रतीत्या स्वसमवेतव्यंजकसमवायस्यैव संसर्गतोपगमेन लौकिकविषयत्वानपायात् तादृशानेक
प्रतीतीनां भ्रमत्वकल्पनापेक्षया तत्कल्पनाया एवौचित्यात् आरोपे सति निमित्तानुसरणमिति न्यायात् मूलं तु इत्थमवतारणीयम् ननु स्व
समवेताभिव्यंजकगतसमवायस्य संबंधतानके नाप्यादृते इत्यत आह कल्पितानामिति कल्पितानां समवायसंबंधेन तद्वृत्तीनामप्युक्तसं
बंधेन तत्र कल्पितानां वायुसंयोगगतधर्मविशेषाणामुपाधित्वमुदात्तत्वादिप्रकारकप्रतीतिजनकत्वमित्यर्थः अधिकं त्वग्रे वक्ष्यते॥

नन्वेवंध्वंसोत्पत्त्यादेस्तादृशप्रतीत्यावर्णेष्ववगाहने भ्रांतत्वापत्तिरत आह परंपरयावर्णेति स्वाश्रयसंयोगावगाहित्वाल्लोहितः स्फटिक इति प्रतीते
र्यथानभ्रमत्वं तथास्या अपीति भावः अवशिष्यत इत्यस्योत्पन्नो वर्ण इति प्रतीतेरिति शेषः ननु तादृशप्रतीतेर्नियमेन परंपरासंबंधविषयत्व
कल्पने गौरवमत आह परं त्विति अतिरिक्तेति अधिकेत्यर्थः तथा चानेकवर्णनत्वसादिकल्पनापेक्षया तत्प्रतीतेर्नियमतस्तादृशसंबंधा
वगाहित्वकल्पनैव लघीयसीति भावः यदि वर्णस्थले ध्वनिनैयत्यं स्यात्स्यादेव तदोत्पत्तेस्तद्घटितपरंपरासंबंधेन वर्णनिष्ठता तत्रैव

परंपरयावर्णनिष्ठत्वाभ्युपगमाच्च न भ्रमत्वं साक्षात्संबंधांशे भ्रमइत्यवशिष्यते तदपि सोयमित्यत्र व्यक्त्यभेदांशे न वभ्र
मवत्तुल्यं परंतु ममातिरिक्तवर्णतत्प्रागभावध्वंसकल्पनानेति लाघवमतिरिच्यते न च वर्णस्थले ध्वनिसत्त्वे मानाभावः तदु
त्पादककण्ठ्याद्यभावेन तदसंभवश्चेति वाच्यं ककाराद्युच्चारणस्थले न त्वस्यानस्य जिह्वया ईषद्दंतरपातेव वर्णानुत्पत्तेर्ध्वन्यु
त्पत्तेश्च दर्शनाज्जिह्वाभिघातजवायुकंठसंयोगादेर्ध्वनिजनकत्वकल्पनात् तस्य च वर्णोत्पत्तिस्थलेपि सत्त्वात्तत्रैव प्रतिब
ध्यप्रतिबंधकभावकल्पनातिप्रमाणिकास्यादिति गौरवं विपरीतम् एवं परस्परविरोधादुदात्तत्वानुदात्तत्वह्रस्वत्वदीर्घ
त्वादिकमपि न वर्णनिष्ठं युक्तमिति तेषामभिप्रायः एवं चोत्पत्त्यादिप्रतीतीनां तत्प्रमात्वस्य च निर्वाहः परेषामपि समानइ
ति प्रतिबंदी वोत्तरमिति भावः ९७ इत्थं पंचव्यक्तिस्फोटाः ॥ ९८ ॥ च मानाभावइत्याशंकां निराचष्टे न चेति वर्णपार्थक्येन ध्वनेरनुभवादिति

भावः हेत्वसमवधानादपि न तत्सत्त्वं न घटत इत्याह तदुत्पादकेपि शंखोष्ठाभिघातजवायुसंयोगादेरित्यर्थः वर्णानुत्पत्तेरिति वर्णानभिव्य
क्तेरित्यर्थः दर्शनादिति दर्शिज्ञानसामान्यार्थः सत्त्वादिति तथा च पार्थक्येनानुभूयमानायाः प्रतीतेर्जिह्वाभिघातजकंठवायुसंयोगादेर्हेतो
श्च सत्त्वान्न वर्णाभिव्यक्तिस्थले ध्वन्यनैयत्यमित्युक्तसंबंधविषयकप्रतीतिर्निराबाधेति भावः न चेवेति वर्णस्थले ध्वन्यसत्त्ववादिन एवेत्य

एवंचतादात्म्यसंबंधेनजन्यभावस्यप्रतियोगितासंबंधेनध्वंसत्वावच्छिन्नंप्रतिहेतुतयोच्चरितवर्णस्यक्षणांतरेतस्याप्रतीतेर्नष्टोवर्णइत्येवप्रतीतेश्च स्वाव्यवहितोत्तरवर्णस्यैवनाशकताकल्पनेप्रतियोगितासंबंधेनयोग्यविभुविशेषगुणनाशंप्रतिस्वसामानाधिकरण्यस्वाव्यवहितवर्णत्वोभय संबंधेनयोग्यविभुविशेषगुणस्यहेतुतायाज्ञानादिस्थलेक्लृप्तत्वाच्च कंठताल्वाद्यभिघातस्यचकत्वादिकमेवकार्य्यतावच्छेदकम् ननुतत्तद्वर्णाभिव्यक्तित्वंगौरवात् नचलौकिकविषयितयाकत्वमेवतदवच्छेदकंवाच्यमिति नगौरवमितिवाच्यम् तथासतिकोलाहलाप्रत्यक्षप्रसंगात् नहिकोलाहलप्रत्यक्षंकत्वादिविषयकंयेनतल्लौकिकविषयितायाःकार्य्यतावच्छेदकघटकतासंभाव्येन किंचघटाद्युत्पादकदण्डादेरपितदभिव्यक्तित्वस्यैवकार्य्यतावच्छेदकत्वापत्तौघटादीनामपिनित्यत्वापत्तिरितिबहुव्याकोपः नचसतएवाभिव्यक्तिरितिसांख्यमताश्रयणादुक्तातिरिक्तैवेतिवाच्यं तन्मतस्यापातमनोरमत्वात् तथाहिअभिव्यक्तिः सत्यसतीवानाद्यः घटानुत्पत्तिदशायांघटस्येवतस्याअपिसत्वाद्घटइतिप्रतीत्यापत्तेः अभिव्यक्तेरप्यभिव्यक्त्यंगीकारेपितस्याअपिकार्य्यत्वेनसत्त्वादुक्तदोषोदुरुद्धरएव अंत्येस्वसिद्धांतव्याघातः युक्तितोत्येनपदार्थान्तरस्याप्युत्पत्तिसिद्धेरिति किंचोत्पन्नोघटोनष्टोघटइतिप्रतीत्याघटादीनामनित्यत्ववदुत्पन्नःककारोनष्टःसत्तविलक्षणप्रतीत्याककारादीनामनित्यत्वमेवावधार्य्यते कत्वादीनांसंयोगधर्मत्वंतुदुरुपपादमेववर्णासमवेतत्वेनश्रोत्राग्राह्यत्वप्रसंगात् नचोक्तसन्निकर्षादेवतत्प्रत्यक्षोपपत्तिस्तथासतिशब्दत्वादिप्रत्यक्षानापत्तेः नचतत्संबंधस्यककारंशृणोमीतिप्रतीतौभानेप्रमाणमपिशब्दंशृणोमीतिप्रतीतेःसमवायविषयकत्ववदुक्तप्रतीतेरपितद्विषयकत्वेनोपपत्तेश्च समवायांशेसर्वत्रतादृशप्रतीतीनांभ्रमत्वमित्यपितद्वर्णसमवेतत्वस्यतत्राभ्युपगमेनविषयाबाधात् एवंचवर्णानामनेकत्वेनतत्तोदात्तत्वादिप्रतीतिरपिस्वरसतःसंगच्छतइतिदृष्टान्तदौर्भिक्ष्यमेव एवंचवर्णप्रागभावध्वंसानांप्रमाणसिद्धानामपलपितुमशक्यत्वान्नतत्कल्पनागौरवमपि नचवर्णानित्यतावादिमतेसोपि

केनभानं तत्रैव तस्यास्तज्जातीयोऽयमित्याकारोऽपन्नतु स्वरूपेणातत्र सोऽयमित्याकार इत्यभ्युपगमात् तज्जातीयाभेदावगाहित्वात्तद्वैषम्यमित्या
ग्रायाः प्रत्यभिज्ञायाः सर्वसिद्धत्वाच्च तस्माद्वर्णात्मकस्फोटस्य वाचकत्वमसम्भवदुक्तिकमेव स्फोटस्य ध्वन्यतिरिक्तत्वाभावाच्च योगशास्त्रा
नस्य निरूपणं तूपासनार्थमेवेत्यभिप्रायः उक्तमर्थं सखण्डस्फोटस्तु प्रागेव निरस्त इत्यानुपूर्व्यवच्छिन्नवर्णानां वाचकत्वमस्तु मितिवदति इ
थ्यमिति पूर्वोक्तप्रकारैरित्यर्थः पञ्चधेति वर्णपदवाक्याखण्डपदाखण्डवाक्यभेदभिन्ना इत्यर्थः ॥ इति भूषणसारदर्पणे व्यक्तिस्फोटा
निरूपणम् ॥ क्रमप्राप्तं जातिस्फोटं निरूपयति मूले प्रकाराद्वेति ननूक्तरीत्या स्फोटव्यतिरिक्तवर्णानामसत्त्वान्न जातेर्वाचकत्वमिति वा

जातिस्फोटमाह प्रत्येकत्वद्वयशक्तत्वे जातेर्लाघवं भविष्यति औपाधिको वा भेदोऽस्तु वर्णनानार्थमंदवत् ॥ ६८ ॥ अयं भावः व
र्णास्तावदावश्यकाः उक्तरीत्या च सोऽयं गकार इति वत् सोऽयं गकार पुनः सोऽयं हकार इत्यपि स्यात् स्फोटस्यैकत्वात् गका
रोऽयं न हकार इत्यनापत्तेश्च किंच स्फोटे गत्वाद्यभ्युपेयं न वा आद्ये तदेव गकारोऽस्तु वर्णे नित्यत्वादिभिरतिरिक्तगत्वानं
गीकारात् तथा चातिरिक्तस्फोटकल्पन एव गौरवं ॥ ६८ काकदन्तपरीक्षासमोऽतस्तमाह सारे अयं भाव इति हकारगकारयोरभे

साधकमाह स्फोटस्यैकत्वादिति तदभिन्नाभिन्नस्य तदभिन्नत्वनियमेन हकारात्मकस्फोटाभिन्नगकारे तद्भेदावगाहिबुद्धेः प्रमात्वानु
पपत्तिरित्यर्थः अनापत्तेश्चेति अभेदादेव च तादृशभेदावगाहिबुद्धेः प्रमात्वानुपपत्तेरित्यर्थः ननु वर्णात्मकस्फोटस्यैकत्वेऽपि गत्वादि
विरुद्धधर्माध्यासमूलकभेदप्रतीतेर्नानुपपत्तिः प्रामाण्यं तु नस्याद्वर्णैक्यादिमतेऽपि भ्रमत्वमेवेत्यत आह किंचेति उपाधिभिन्नाभिन्न
नगत्वादीत्यर्थः आद्ये स्फोटे गत्वाभ्युपगमपक्षे तदेव गत्वमेव मनुगमात्सर्ववर्णधर्मेनत्वाभेदेन कल्प्यं तस्य तदात्मकत्वमत आह वर्ण

नित्यतावादिभिरिति मीमांसकादिभिरित्यर्थः अतिरिक्तेति धर्मधर्मिणोरभेदाभ्युपगमादित्यर्थः गौरवमिति गकारादिप्रतीतीनां गत्वा
दिविशिष्टगकारादिविषयकत्वेनोपपत्तिसंभवादिति भावः अंत्ये स्फोटे गत्वाद्यनभ्युपगमकल्प इत्यर्थः विरोध इति गादिप्रतीत्यनु
पपत्तिरित्यर्थः गत्वस्यान्यधर्मस्य स्फोटावृत्तित्वेन तद्विशिष्टविषयकप्रतीत्यनुपपत्तिरिति भावः ॥ वायुसंयोगवृत्तीति स्वमते ध्वनि
वृत्तीति मतांतरे पूर्वोक्तरीत्या तादृशवैजात्यारोपेण प्रतीतेः सूपपादत्वादाह आरोप्येति भ्रमत्वायोगादिति साक्षात्संबंधेन प्रमात्वोपप
त्तावारोपितसंबंधे तदुपपन्नत्वे प्रमाणाभावादिति भावः नन्वतिरिक्तानेकवर्णकल्पनापेक्षया तादृशप्रतीतीनां भ्रमत्वमेव न्याय्यम

अंत्ये गकारादिप्रतीतिविरोधः वायुसंयोगवृत्ति वा वैजात्यमारोप्य तथा प्रत्यय इति चेन्न प्रतीतेर्विना बाधकं भ्रमत्वा
योगात् अस्तु वा वायुसंयोग एव गकारोपितस्यातीन्द्रियत्वं दोष इति चेत्तद्धर्मवदुपपत्तेरिति कृतं स्फोटेन ॥ ९ ॥

तत्राह अस्तु वेति तथा च तावतैव प्रतीतेः प्रामाण्यनिर्वाहेऽलं स्फोटकल्पनयेति भावः तस्य संयोगस्य अतीन्द्रियमात्रवृत्तिधर्मत्व
स्य साक्षात्कारविषयत्वव्याप्यत्वं त्वया न स्वीक्रियते तथातीन्द्रियसंयोगगतविशेषस्य मयापीत्यर्थः यद्यतीन्द्रियस्यैवेंद्रियकत्वम
त्यंतासंभवदुक्तिकं तदा तादृशवैजात्यस्य स्फोटधर्मत्वमपि तथैव प्रत्यक्षानुपपत्तेरिति भावः ननु कत्वादिधर्माणामतीन्द्रियत्वेपि
ज्ञानलक्षणया कादिप्रतीतौ न तज्ज्ञाने बाधकाभाव इति चेन्न ककार इति प्रत्यये कत्वं साक्षात्करोमीत्यनुव्यवसायेन लौकिकविष
यत्वावगाहनेनोक्तप्रकारोऽसंभवात् शंखः पीत इति ज्ञानानंतरोत्पन्नः पीतत्वं पश्यामीति प्रत्ययस्तु भ्रम एव दोषविशेषस्य ता
दृशविषयतानियामकत्वकल्पनगौरवादिति विभावनीयम्॥

उपसंहरति तस्मादिति कत्वादिविशिष्टविषयकसाक्षात्कारानुपपत्तिप्रमाणसद्भावादित्यर्थः सन्त्येवेति त्वदभिमतस्फोटातिरिक्ताः वर्णाः सत्ये
वेत्यर्थः परमिति किन्त्वित्यर्थः गौरवादिति तत्तद्वर्णभेदभिन्नानन्तशक्तिकल्पने गौरवादित्यर्थः ननु तावद्वर्णगतपदत्वादिजात्यनुगतीकृ
तैर्वैकस्या एव शक्तेरभ्युपगमान्न नानात्वप्रयुक्तगौरवमत आह आकृत्यधिकरणेति न्यायसुधायामर्थनिरूपणे प्रपंचितः ननु तादृशजा
तौ मानाभावोऽत आह इदमिति अनुगतधर्मं विना सकलतादृशपदेष्वेकाकारतादृशप्रतीत्यनुपपत्तेरिति भावः नन्वनुगतप्रती
तिमात्रस्य जातिसाधकत्वे विभुत्वादेरपि जातित्वापत्तिरतः कारणतावच्छेदकत्वादिनैव तत्सिद्धिर्वाच्या न च तदभावात्तत्र कथं तस्य जाति

तस्मात्सन्त्येव वर्णाः परं तु न वाचका गौरवात् आकृत्यधिकरणन्यायेन जातेरेव वाच्यत्ववद्वाचकत्वस्यापि युक्त-
त्वाच्च इदं हरिपदमित्यनुगतप्रतीत्या हर्युपस्थितित्वावच्छेदेन हरिपदज्ञानत्वेन हेतुतावच्छेदकतया च
जातिविशेषस्यावश्यकत्वात् न च वर्णानुपूर्व्यैव प्रतीत्यवच्छेदकतयोर्निर्वाहः घटघटत्वादेरपि संयोगविशे-
षविशिष्टमृदवयवाकारादिभिश्चान्यथासिद्ध्यापत्तेः ॥

"एवमत आह हर्युपस्थितित्वावच्छेदेनेति कार्यतावच्छेदकप्रदर्शन
मिदं आवश्यकेति अन्यथा तावत्पदज्ञानानां तद्व्यक्तित्वेन हेतुतायामव्यभिचारेणासंभवादिति भावः प्रतीत्यवच्छेदकतयोरपि अनुगतप्रतीत्यवच्छे
दकतयोरित्यर्थः वर्णानुपूर्व्यैवेति तादृशजात्यभिव्यंजकत्वेनाव [illegible] मानयेत्यर्थः निर्वाह इति तथा च [illegible] नियतपूर्वतेति तावच्छेदकतानानुपूर्व्या
नुगतप्रतीतिकारणतावच्छेदकत्वयोः संभवे न तद्रूपविशिष्टपदोपस्थितित्वेन हेतुत्वमन्यथासिद्धिरिति भाव" अन्यथासिद्ध्यापत्ते
रिति न च सैषा प्रत्यक्षादि प्रमाणविरोधादिति भावः

ननुजातेः शक्यत्वेजातित्वंशक्यतावच्छेदकंवाच्यम् तस्यचतदितरावृत्तित्वविशिष्टसकलतद्वृत्तित्वरूपतयातत्वासंभवोगौरवाद्वातत्राह नादा
त्म्येनेति अभेदेनेत्यर्थः तथाचनोक्तदोषइतिभावः एतच्चत्वमभिहितंशाक् जात्योरिति तयोःपदयोरेफाकारसकारविसर्गघटितत्वाविशे
षात्सत्वविशिष्टोपस्थापकतावच्छेदकसरत्वविशिष्टोपस्थापकतावच्छेदक ~ ~ ~ ~ ~ ~ ~ ~ ~ ~ जात्योरेकतरस्याएवस
त्त्वायांविनिगमकाभावात्ततोविलक्षणार्थबोधानुपपत्तिरित्यर्थः वाशब्दस्यपक्षान्तरपरत्वभ्रमंनिराकरोति वान्वर्थइति अवधारणइत्य

तस्मात्साजातिरेववाचिका तादात्म्येनतदवच्छेदिकाचेति ननुसरोरसइत्यादौजात्योः सत्त्वादर्थबोधभेदो न स्यादित्य
तत्राह औपाधिकोवेति वान्वर्थे उपाधिरानुपूर्वीसैवजातिविशेषाभिव्यंजिकेति भेदः कारणीभूतज्ञानस्येति ना
तिप्रसंगइति भावः उपाधिप्रयुक्तज्ञानवैलक्षण्ये दृष्टान्तमाह वर्णानामिति ॥ ६८ ॥ ६० ॥ ६ ॥

र्थः भेदइति तथाचतत्रवर्णतौल्येप्यानुपूर्वीवैलक्षण्येनरसत्वविशिष्टोपस्थापकतावच्छेदकजातेर्निरुक्ताव्यवहितोत्तरत्वसंबंधेनर
विशिष्टसत्वादिरूपानुपूर्व्याएवव्यंजकतयातदभावेननसरः पदाद्रसत्व विशिष्टबोधापत्तिरेवमन्यत्रापीतिभावः मूलेतारमंदवदित्य
त्रतारमंदशब्दौधर्मपरौ तथाच यथावर्णानांनित्यैकत्वमते विजातीयवायुताल्वाद्यभिघातसत्वेन तारत्वादिना भेदप्रतीतिस्तद्वदित्यर्थः॥

वर्णजातिस्फोटमभिप्रेत्य शंकते सा नन्विति जातेरिति अर्थबोधकजातेरित्यर्थः प्रत्येकेति पदान्तर्गततत्तद्वर्णेष्वित्यर्थः एवमग्रेऽपि अर्थबोधा पत्तिरिति तदभिव्यञ्जकवर्णसत्त्वादिति भावः योगार्थतयेति स्फुटत्यर्थोऽस्मादिति वक्ष्यमाणावयवव्युत्पत्त्येत्यर्थः एतेनेति तत्पदघटक यावद्वर्णाभिव्यक्तजातेर्वाचकत्वाङ्गीकारेणेत्यर्थः सर्वदा पदार्थावगमोऽपि परास्तमिति जातेः सनातनत्वेऽप्युक्तस्थले व्यंजकासमवधानात्तद् व्यक्त्यभावेन बोधस्यापादयितुमशक्यत्वादिति भावः ननु वर्णजातिस्फोटपक्षे पदघट कयावद्वर्णगतजातीनामेवार्थबोधकत्वमुपग न्तव्यम् तत्र चान्यवर्णगतजातेरन्यवर्णानभिव्यंग्यत्वात्तत्तद्वर्ण एवाभिव्यंजको वाच्यस्तथा चोक्तदोषस्तदवस्थ एवेत्यत आह अथवा

ननु जाते प्रत्येकं वर्णेष्वपि सत्त्वात्प्रत्येकादर्थबोधः स्यादित्यत आह अनेकव्यक्त्यभिव्यंग्या जातिः स्फोट इति स्मृता कैश्चिद्व्यक्तय एवास्या ध्वनित्वेन प्रकल्पिताः अनेकाभिर्वर्णव्यक्तिभिरभिव्यक्तैव जातिः स्फोट इति स्मृता योगार्थतया बोधिकेति यावत् एतेन स्फोटस्य नित्यत्वात्सर्वदार्थबोधापत्तिरित्यपास्तम् अयं भावः यद्यपि वर्णस्फोटपक्षे कश्चित्तद्दोषोऽस्ति तथापि पदवाक्यपक्षयोर्न तत्र तस्या व्यासज्यवृत्तित्वस्य धर्मिग्राहकमानसिद्धत्वादिति कैश्चित्तु व्यक्तयो ध्वनय एव ध्वनिवर्णयोर्भेदाभावादित्यभ्युपेयत इति शेषार्थः उक्तं हि काव्यप्रकाशे बुधैर्वैयाकरणैः प्रधानीभूतस्फोटव्यंग्यव्यञ्जकस्य शब्दस्य ध्वनिरिति व्यवहारः कृत इति ६९ ॥

॥ यदुक्तदोष इति तथापदुक्तत्वात्सपक्षेऽनाश्रय णीय इति भावः तत्रेति पदे वाक्ये च तस्याः पदत्वादिजाते व्यासज्यवृत्तित्वस्येति पर्याप्त्याख्यविलक्षणसंबन्धेन वृत्तित्वस्येत्यर्थः ननु जातेः समवेतत्वस्यैव सार्वत्रिकतया कथमेतस्याः पर्याप्तत्वमत आह धर्मिग्राहकेति धर्मिणी जातिस्तद्ग्राहकमानं पदमस वाक्यत्व

स्यवाचकत्वानुपपत्तिलत्सिद्धत्वादित्यर्थः प्रत्येकवर्णविश्रांतजातेर्वाचकत्वस्योक्तदूषणकवलितत्वेनासंभवाद्वाचकत्वानुपपत्त्याकल्प्य
मानापदत्वादिजातिर्यदि पुनः प्रत्येकं विश्रांतास्यात्तदातत्सिद्धिरेवनस्याद्वाचकत्वानुपपत्तेरपरिहारादतस्तत्साधकमेवनत्पर्याप्तत्व
साधकमेवंचानेकव्यक्त्यभिव्यंग्येत्यस्यानेकव्यक्तिपर्याप्तेत्यर्थइतिभावः वस्तुतस्तुघटादिप्रत्येकव्यक्तौकौ घटइतिसर्वसिद्धप्रतीत्य
व्यवहारेणचसिद्धातुघटत्वादेः प्रत्येकमात्रवृत्तित्वंनह्येकवर्णेघटपदादिव्यवहारोयेनपदत्वादेः प्रत्येकवृत्तितास्यात्किंतुपदशब्दः
पदंनपकारइतिवैपरीत्यमिति तादृशजातेः पर्य्याप्तत्वमावश्यकं पदत्वंनपर्य्याप्तंजातित्वादित्यनुमानंत्वप्रयोजकमनुकूलतर्को
भावादिति विभावनीयम् इदंपुनरिहावधेयम् अनेकव्यक्त्यभिव्यंग्येत्यस्यानुपूर्व्यवच्छिन्नवर्णाभिव्यंग्येत्यर्थः तानःसरसइत्या
दौअर्थभेदबोधानुपपत्तिः एवंचपूर्वोक्तार्थस्यैवायंप्रपंचः आनुपूर्वीवर्णयोर्विशेषणविशेष्यभावव्यत्यासःपदंव्यतिरिच्यते अ
तएवाग्रिमग्रंथसंगतिरिति व्यज्यतेऽनयेतिव्युत्पत्त्याव्यक्तिपदार्थे वर्णइत्यभिप्रेत्याह ध्वनिवर्णयोरिति वर्णानांध्वनित्वे यस्मादभे
दोपचारेणतएवपस्य शायामथगोरित्यत्रकः शब्दइतिप्रश्ने लोकेऽर्थबोधकत्वेनगृहीतोध्वनिवर्णात्मकः समूहइत्यर्थकमथवाप्र
तीतपदार्थकोध्वनिः शब्दइत्युक्तमितिभावः शेषार्थेइति प्रकृतकारिकोत्तरार्द्धार्थइत्यर्थः वर्णेषुध्वनिव्यवहारेसम्मतिमाह उक्तं
हीति काव्यप्रकाशइति इदमुत्तममतिशयिनिव्यंग्येवाच्याद्ध्वनिर्बुधैः कथितइति वृत्तिव्याख्यावसरइतिशेषः स्फोटव्यंग्येति स्फो
टरूपंयद्व्यंग्यंतद्व्यंजकवर्णात्मकशब्दस्येत्यर्थः नन्वेतावताप्रबंधेनपदत्वादेर्जातित्वस्यतद्वाचकत्वस्यचव्यवस्थापनमफलंपुरुषार्थानु
योगित्वादित्याशंक्यसमाधानपरतयामूलमवतारयति॥

यद्यप्यविशेषणवाक्यविषयेऽखंडवाक्यतज्जातिरूपस्फोटद्वयमुक्तं तथापि नादात्मकस्फोटकल्पे शास्त्रस्य पुरुषार्थपरं पर्योपयोगित्वमनिमकल्पेतु साक्षादेवेति तस्यैव मुख्यत्वमित्याशयेन मूलमवतारयति तमेवेति अयमात्मा तत्सत्यमित्यादिश्रुतिसिद्धं यत्सत्यं तत्र सा जातिरित्यनेनोक्तमेवेत्यर्थः मूलेद्र त्यमिति पूर्वोक्तप्रकारेणाध्यस्तवाचकत्वेभ्यः प्रकृत्यादिभ्यः पृथक्क्रियमाणं अतएव निरंजनं उपाधिविनिर्मुक्तम् अतएवाक्षरमविनाशि यस्तु सर्वेषु भूतेषु नश्यत्सु न विनश्यतीति स्मृतेः सोपाधिकस्यैव विनाशप्रतियोगित्वात् शब्दतत्त्वं शब्दपदं रूपस्याप्युपलक्षणं तेन नामरूपोपादानं यत्तत् ब्रह्मैवेति विशेषणसंगतेवकारेण ब्रह्मतादात्म्याभावरूपे विशेषणायोगव्यवच्छेदे शब्दतत्त्व रूपान्वयितावच्छेदकव्यापकत्वं बोध्यते प्राहुः प्रकर्षेण कथयन्ति ब्रह्माभेदेन जानंतीति यावदिति तदर्थः तत्र शब्दोपादानत्वस्य तंत्रान्तरे गगनादौ प्रसिद्धेः कथं ब्रह्मणस्त

तमेव सत्यांशं स्पष्टयति इत्थं निष्कृष्यमाणं यच्छब्दतत्त्वं निरंजनम् ब्रह्मैवेत्यक्षरं प्राहुस्तस्मै पूर्णात्मने नमः अयं भावः नामरूपे व्याकरवाणीति श्रुतिसिद्धाद्वयीसृष्टिः तत्र रूपस्यैव नाम्नोपि तदेव तत्त्वम्॥ ((दुपादानत्वमित्याशंकायामाह अयं भावइत्यादि नामरूपेति अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति सिद्धेत्यर्थः द्वयीति नामरूपात्मकद्व्यवयवसमूहरूपेत्यर्थः तत्रेति सृष्टिद्वयमध्ये रूपस्यैवेति आकाशाद्यात्मकार्थस्यैवेत्यर्थः नाम्न इति तद्वाचकशब्दस्यापीत्यर्थः तदेव ब्रह्मैव तत्त्वमुपादानमित्यर्थः तस्मादेतस्माद्वा आत्मन इत्यादिश्रुतेः शब्दतन्मात्राकाशोपादानत्वे पर्यवसानाद्द्वयोरप्युपादानं ब्रह्मैव अतएव तयोः परस्परमभेदसिद्धिः स्वोपादानब्रह्माभिन्नत्वात् नच ब्रह्मणो जगदुपादानत्वे विकारित्वापत्तिः जगदेतद्विवर्तेनेति वदता मूलकृतैव समाहितत्वात् तथाच व्यावहारिकप्रातिभासिकपदार्थनिरासेन श्रुत्या ब्रह्मैव परिशेषीक्रियत इति प्रागुक्त एवार्थः॥

ननु नानात्वस्य सर्वथैव मिथ्यात्वे कथं सत्यत्वप्रतीतिर्लोकानामत आह प्रक्रियांशस्त्विति प्रकृतिप्रत्ययपञ्चकोशादिव्यवस्थारूपांशस्त्वित्यर्थः अविद्येति
भ्रान्तिरसत्यस्याज्ञानविलास एवेत्यर्थः तथा च ब्रह्मातिरिक्तत्वेनासत्यानामपि तेषां पारमार्थ्येन प्रतीतिरधिष्ठानाज्ञानकृतैवेति ~ ~ ~ ~ ~
यावदधिष्ठानाज्ञानं तावत् तन्निवृत्तिरिति भावः यद्यनृतानां शास्त्रस्य ज्ञाने कथं शास्त्राणामुपयोगः तत्राह प्रक्रियांश इति प्रकृ-
तिप्रत्ययादिरुपायो न त्वित्यर्थः अविद्येति तथा च पञ्चकोशादिन्यायेन शास्त्राणामुपयोगो न तु तज्ज्ञाने साक्षादुपयोग इति भावः अविद्यैवोपवर्ण्य-
त इति वाक्यपदीयानन्तरमुपायाः शिक्ष्यमाणा बालानामुपलालनाः असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते इति श्लोकः समारंभास्तु भावानामि-
त्यस्य पूर्वार्द्धं तु घटादिदर्शनाल्लोकः परिच्छिन्नोऽवसीयत इति तदर्थस्तु यथा घटादिकं दृष्ट्वा लोको विश्वप्रपंचं परिच्छिन्नं विनिश्चकार एतानि

प्रक्रियांशस्तु विद्याविजृम्भणमात्रम् उक्तं च वाक्यपदीये शास्त्रेषु प्रक्रियाभेदैरविद्यैवोपवर्ण्यते समारंभास्तु भावानामना-
दिं ब्रह्म शाश्वतमिति ब्रह्मैवेत्यनेनाम्नायं पुरुष स्वयंज्योतिस्तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभातीति श्रुतिसि-

रूपकार्यतावच्छेदेनानुमीयते एवं भावानामाकाशादीनां समारंभादिति सम्यगारम्भोऽजननं यस्मात् भावप्रधानश्च निर्देशः तदुत्पत्तिहेतुभू-
दित्यक्षरार्थः भावोपादानत्वादिति यावत् तादात्म्येन वा हेतुः समारम्भादिति शाश्वतं नित्यमपि ब्रह्म आदिमत्कारणमिवावसीयत इत्यत्र
उच्यते परिणाम्युपादानत्वेन तस्मिन्नभ्युपगम्यमाने विकारित्वप्रसङ्गः वस्तुनो न तत्प्रसक्तिः विवर्तोपादानत्वात् तद्योगीकारात् रज्ज्वादौ प्राति-
भासिकभुजगस्येवेति भावः अनादिब्रह्म शाश्वतमिति पाठस्त्वन्यतरविशेषणोपादानवैयर्थ्यापत्त्यानादरणीयः ननु नादेर्ब्रह्मणः
शास्त्रप्रयोजनत्वात् रूपार्थानुपयोग तद्भेदज्ञानसंपादनवैयर्थ्यमत आह ब्रह्मैवेतीति तथा च प्रकृते ब्रह्मपदस्य स्वप्रकाशरूपब्रह्मपर-
त्वान्नोक्तानुपपत्तिरिति भावः तमेव भान्तमित्यस्य न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निरिति पूर्वार्द्धं श्रुतिस्तूपलक्ष्य